# SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ 107 ]

# BAUDHĀYANAŚULBASŪTRAṂ

by

**BODHĀYANĀCĀRYA**

With two Commentaries

'Bodhāyanaśulbamimāṃsā'

by

Śrī Vyaṅkateśvara Dīkṣita

&

'Śulbadīpikā'

by

Śrī Dwārakānātha Yajva

*Edited by*


**Pt. Vibhūtibhūṣaṇa Bhaṭṭācārya**

Ex-Librarian

Sampurnanand Sanskrit Vishvavidyalaya


Chief Editor of the Granthamālā


DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚAŚĀSTRĪ'

Director, Research Institute,

Sampurnanand Sanskrit Vishvavidyalaya,



VARANASI

1979

**Published by—**
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi.

**Available At—**
Publication Section
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi-221002.

First Edition : 500 Copies
Price : 75-00 P,

Printed by—
G. S. Upadhyaya
Manager
Sampurnanand Sanskrit Vishvavidyalaya Press,
Varanasi

सरस्वतीभवन-ग्रन्थमाला

[ १०७ ]

बोधायनाचार्यप्रणीतं

# बौधायनशुल्बसूत्रम्

श्रीव्यङ्कटेश्वरदीक्षितविरचितया

बोधायनशुल्बमीमांसाख्यव्याख्यया

श्रीद्वारकानाथयज्ववविरचितया

शुल्बदीपिकाव्याख्यया

समलङ्कृतम्

सम्पादकः

प० विभूतिभूषणभट्टाचार्यः

पुस्तकालयाध्यक्षचरः

सरस्वतीभवनपुस्तकालयस्य

ग्रन्थमालाया मुख्यसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्

२०३६ तमे वैक्रमाब्दे २००१ तमे शकाब्दे १९७९ तमे खैस्ताब्दे

# प्रास्ताविकम्

वेदानां व्याख्यानार्थं ब्राह्मणारण्यकोपनिषदो वेदाङ्गानि च प्रवृत्तानि। वेदाङ्गेषु ज्योतिषाङ्गं हित्वा प्रायोऽन्यानि सर्वाण्येवाङ्गानि सूत्रशैल्याऽऽविर्भूतानि। ऋक्प्रातिशाख्यस्य तु पद्यसूत्रात्मकतयोभयथा प्रवृत्तिः। वेदब्रह्मणो मुखरूपं व्याकरणम्, ज्योतिषं लोचनम्, छन्दः पादद्वयरूपम्, निरुक्तं श्रोत्रम्, शिक्षा च घ्राणस्थानीया वर्तते, एवमेव कल्पो हस्तस्वरूप आस्थीयते। क्रियानिर्वर्तनाय यथा शरीरे हस्तौ प्राधान्यं भजेते, तथैव यज्ञकर्मविधिनिर्धारणाय वेदाङ्गेषु कल्पः प्रमुखः। 'कल्प्यते=समर्थ्यते यागप्रयोगोऽत्र' इति सायणः। श्रौत-गृह्य-धर्म-शुल्वाऽऽख्यानि चतुर्विधानि सन्ति कल्पसूत्राणि प्रतिवेदं संबद्धानि। तत्र शुल्वसूत्राणि श्रौतसूत्रान्तर्गतानि समाम्नायन्ते। शुल्बं नाम यज्ञकर्मणि कुण्डनिर्माणप्रसङ्गे मानार्थमुपयुज्यमाना रज्जुः। शुल्बम्=रज्जुमानादिना कृतमिदं क्षेत्रगणितमुच्यते। हेमचन्द्रानुसारेण शुल्बशब्दः 'ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ' इति चतुर्ष्वर्थेषु प्रयुज्यते। द्विधाऽस्य व्युत्पत्तिः। गत्यर्थकाद् शल्धातोः 'उल्वादयश्च' (४।९५) इत्यौणादिकेन सूत्रेण शुल्बशब्दस्ताम्रार्थको निपात्यते। सुव्व (< शुल्बम्) इति प्राकृतभाषायाः शब्दः पञ्चस्वर्थेषु प्रयुक्तः। हेमचन्द्रदर्शितेष्वर्थेषु तत्र रज्ज्वर्थोऽधिकः। विभिन्नेष्वर्थेष्वयं प्रादेशिकीषु भाषासु 'सूब' 'सुब्ब' 'सुब्बा' 'चुब्ब' 'सुब्बी' 'चूंब' इत्याद्याकृतिषु व्यवह्रियमाणः स्वकीयं प्रयोगभूयस्त्वं पुष्णाति। रज्ज्वर्थकः शुल्बशब्दस्तु मानार्थकाच्चौरादिकाद् शुल्बधातोर्व्युत्पाद्यते।

सर्वेषां वेदानां शुल्बसूत्राणि साम्प्रतं नोपलभ्यन्ते। कात्यायनशुल्बसूत्रं शुक्लयजुर्वेदं संबध्नाति। बौधायन-आपस्तम्ब-मानव-मैत्रायण-वाराह-शुल्बसूत्राणि खलु कृष्णयजुर्वेदमभिसम्बद्धानि। बौधायनशुल्बसूत्रं कृष्णयजुर्वेदस्य तैत्तिरीयशाखया सह सम्बद्धम्। बाधूलशुल्बसूत्रं साम्प्रतं लभ्यते। मशकशुल्बसूत्रं हिरण्यकेशीशुल्बसूत्रं चेदानीं नाधिगम्येते। एते आपस्तम्बशुल्बसूत्रस्य करविन्दस्वामिकृतव्याख्यायामुल्लिख्येते; यज्ञानां यथासमयं सम्पादनार्थं यथाऽऽर्यैर्ज्योतिषशास्त्रमाविर्भावितम्, उपबृंहितं च, तथैव यज्ञवेदीनामाकारस्वरूपयोर्निर्धारणाय प्राचीने भारते समधीतार्यैर्ज्यामितिर्बीजगणितं च। शुल्बसूत्राणामनुशीलनेन तदीयो ज्यामितिज्ञानाभासो जायते।

सर्वेषु शुल्बसूत्रेषु बौधायनशुल्बसूत्रमाकारेण द्राघिष्ठम्। इह प्रथमेऽध्याये ८३; द्वितीये ४३, तृतीये च १४६ संहत्य २७२ सूत्राणि संदृब्धानि सन्ति। रेखामानपरिभाषा, समचतुरश्रकरणोपायः, दीर्घचतुरश्रकरणोपायः, एकतोऽणिमदीर्घचतुरश्रकरणोपायः, प्रकारान्तरेण दीर्घचतुरश्रैकतोऽणिमदीर्घचतुरश्रकरणोपायः, द्विकरण्यानयनम्, त्रिकरणीतृतीय-

करण्योरानयनम् , अन्यासामिष्टकरणीनामानयनम् , समचतुरश्रयोः समसनप्रकारः, महाचतुरश्रादल्पचतुरश्रापोद्धारप्रकारः, समचतुरश्रस्य दीर्घचतुरश्रकरणोपायः, समचतुरश्रस्य दीर्घचतुरश्रकरणे प्रकारान्तरम् , दीर्घचतुरश्रस्य समचतुरश्रीकरणोपायः, चतुरश्रस्यैकतोऽणिमत्करणोपायः चतुरश्रस्य प्रउगकरणोपायः ( प्रउगम् = शकटमुखम् ), चतुरश्रस्योभयतः प्रउगकरणोपायः चतुरश्रस्य मण्डलकरणोपायः, मण्डलस्य चतुरश्रकरणोपायः, द्विकरणीपरिज्ञानोपायः, गार्हपत्यदक्षिणाहवनीयाग्नीनां स्थानानयनप्रकारः, उत्करस्थानानयनम् , दार्शिक्या वेदेर्विहरणोपायः, पाशुबन्धिकवेदिविहरणोपायः, उत्तरवेदिविहरणोपायः पैतृक्या वेदेर्विहरणोपायः, सौत्रामणीवेदिविहरणोपायः, अग्निष्टोमवेदिविहरणोपायः, सौमिकमहावेदिविहरणोपायः, सदोविहरणोपायः, सदोहविर्धानविहरणोपायः सौमिकोत्तरवेदिविहरणोपायः, चात्वालोपखयोर्विहरणोपायः, धिष्ण्यानां विहरणम् , आग्नीध्रमार्जालीयागारविहरणम् , प्रक्रमादिविशेषनिर्णयश्चेत्यादिविषयाः प्रथमेऽध्याये सूत्रिताः ।

सर्वाग्निसाधारण्येनाग्निधर्माः, अग्निपरिमाणम् , अग्नेः सर्वक्रतुषु विकल्पः, प्रथमाग्निचयन इष्टकासंख्या, अग्नेः पशुसमानाकारत्वम् , अग्निचयने नियमः, अग्नीनां विशेषधर्मकथनम् , इष्टकाधर्मकथनम् , चतुरश्रगार्हपत्यचित्युपधानम् , परिमण्डलगार्हपत्यचित्युपधानम् ; धिष्ण्यानामुपधानप्रकारः, इष्टकानिर्माणे विशेष इत्यादयो विषया द्वितीयेऽध्याये वर्णिताः सन्ति ।

श्येनचिदाकारनिरूपणम् , चतुरश्येनचिद्विमानप्रकारः, चतुरश्रश्येनचिदुपधानप्रकारः, वक्रपक्षव्यस्तपुच्छश्येनचिदुपधानम् , कङ्कचिदुपधानप्रकारः, अलजचिदुपधानप्रकारः, प्रउगचिदुपधानप्रकारः, उभयतः प्रउगचिदुपधानप्रकारः, प्रधियुक्तरथचक्रचिदुपधानप्रकारः, चतुरश्रद्रोणचिदुपधानप्रकारः, परिमण्डलद्रोणचिदुपधानप्रकारः, समूह्यपरिचाय्यचितोरुपधानप्रकारः, श्मशानचिदुपधानप्रकारः, वक्राङ्गकूर्मचिदुपधानप्रकारः, परिमण्डलकूर्मचिदुपधानप्रकार इत्यादयो विषयास्तृतीये समुपन्यस्ताः सन्ति ।

बौधायनशुल्बसूत्रमेतत् सर्वेषु शुल्बसूत्रेषु विषयदृशाऽनन्यसाधारणं प्राचीनतमं च विराजते । कस्यापि वर्गस्य भुजयुताऽऽयतरूपतया परिणमनस्य रैखिको विधिः शुल्बसूत्रेऽस्मिन् ( ८०० खी० पू० ) वर्णितः । बोधायनेन श्रौतसूत्रमपि रचितमासीत् । श्रौतसूत्रस्यास्य काले श्रोणानां कृत्तिकानां चोदयः सदृश्यामभूद् दिशि । एतेन बोधायनसमयः खीस्तात् पूर्वं १३३० वर्षेषु सिध्यतीति गोरखप्रसादो मन्यते ।

बौधायनस्य समुल्लेखस्तदीयेषु श्रौत-गृह्य-धर्म-पितृ-श्रौत-प्रवर-सूत्रेषु लभ्यते । इतरत्र आग्निवेश्य-गृह्यसूत्रे ( २, ६, ३ : ३६ ); चरणव्यूहे (२ : ३५); संस्कारभारद्वाजगृह्यसूत्रे, संस्कारकौस्तुभे चापि तन्नाम खलूल्लिख्यते । तन्नाम्ना प्रसिद्धा ग्रन्था बौधायनश्रौतसूत्रम् , बौधायनगृह्यसूत्रम् , बौधायनधर्मसूत्रम् , बौधायनपितृमेधसूत्रम् , बौधायनश्रौतप्रवरः,

बौधायनीयप्रयोगसारः ( बौधायनीयश्रौतप्रयोगसारः ), बौधायनदर्शपूर्णप्रयोगः, बौधायनकल्पविवरणम्, बौधायनकल्पप्रयोगः, बौधायनीयगृह्यमाला, बौधायनचरकसौत्रामणी, बौधायनप्रयोगः, बौधायनविधिः बौधायनशिक्षा, बौधायनसंग्रहः, बौधायनस्मृतिः, बौधायनपरिशिष्टम्, भगवदज्जुकीयम्, ब्रह्मसूत्रवृत्तिश्चेति। दशोपनिषत्सु श्रीमद्भगवद्गीतायां चापि तत्कृतं व्याख्यानं श्रूयते, न तूपलभ्यते।

श्रीभाष्ये श्रीमता रामानुजाचार्येणोक्तम्-'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः। तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति। आनन्दभाष्ये रामानन्दाचार्येण बोधायनस्य गुरुशिष्यपरम्परा निर्दिष्टा। तत्र स श्रीशुकदेवमुनेः शिष्यस्तदाज्ञया ब्रह्मसूत्रवृत्तिमरीरचत्। अन्यच्च तदीयमन्यदीयं नामधेयं पुरुषोत्तममुनिरित्यपि ततो विज्ञायते—'यस्याश्च ( शारीरकब्रह्ममीमांसायाः ) सूत्ररूपत्वेनातिसूक्ष्माकारतामवधार्य साक्षाद्भगवदवतारस्वरूपस्य स्वपरमगुरोस्तस्याशयं तत एव समधिगम्य परमैकान्त्यनिरतस्य स्वगुरोश्च श्रीशुकदेवमुनेराज्ञया बोधायनापरनामधेयश्रीपुरुषोत्तममुनिना सुखबोधाय विशदतमा वृत्तिरभ्यधायि' ( प्रथमसूत्रावतरणिकाभाष्यम् )। श्रीमद्भगवद्गीताया आनन्दभाष्येऽपि स्वसम्प्रदायपरम्परायां श्रीशुकदेवशिष्यः पुरुषोत्तममुनिरिति स्वामिरामानन्देन समश्लोकि—

श्रीरामं जनकात्मजामनिलजं मेधोवसिष्ठावृषी।
योगीशं च पराशरं श्रुतिविदं व्यासं जिताक्षं शुकम्॥
श्रीमन्तं पुरुषोत्तमं गुणनिधिं गङ्गाधराद्यान् यतीन्॥ इति।

पाणिनेर्गुरुर्वर्षस्तस्यानुजस्तूपवर्षः कथासरित्सागरे वर्ण्यते शङ्करस्वामिसुतः। पूर्वोत्तरमीमांसासूत्रवृत्तिकारतयाऽयं प्रथितः। पूर्वमीमांसायाः शाबरभाष्ये ब्रह्मसूत्रभाष्ये च शङ्कराचार्येणैष बहुत्र स्मृतः। एवं खल्वेष उपवर्षो ब्रह्मसूत्रवृत्तिकाराद् बोधायनादभिन्नः प्रतिभाति। किन्तु रामानुजाचार्यानुसारेण तयोरभिन्नता न शक्यते वक्तुम्। ऐकात्म्याधिकरणे शङ्कराचार्येण खलूपवर्षमतमित्थं समुदलेखि ( ३ ३, ५३ )— अत एव च भगवतोपवर्षेण प्रथमे तन्त्रे 'आत्माऽस्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृतः' इति। श्रीभाष्यकारेण रामानुजेन तु तदैकात्म्याधिकरणं प्रत्यगात्मपरकमाख्यायते। श्रीभाष्योपजीव्यब्रह्मसूत्रवृत्तिरस्य बोधायनस्य शङ्कराऽऽचार्योद्धृतस्योपवर्षस्य चाभेदे त्वैकात्म्याधिकरणस्य स्थाने प्रत्यगात्मपरकत्वं न स्यात्। एवं खलु श्रीभाष्यदर्शनेन तयोर्भिन्नता प्रतीयते। वस्तुतस्तु रामानुजाचार्यो बौधायनकृतां ब्रह्मसूत्रवृत्तिं साक्षादाधारीकृत्य श्रीभाष्यं न प्रणिनाय। तेन तु तत्रादौ 'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः। तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति स्पष्टमभिहितं पूर्वाचार्यसंक्षिप्तीकृतबोधायनवृत्त्युपयोगविषये। पूर्वाचार्योऽसौ श्रीकण्ठ एव भवितुमर्हतीति श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायमतम्। अतस्तत्र सर्वत्र श्रीभाष्यमतमेव बोधायनमतमित्यङ्गीकारे संकोचमश्नन्ति

सुधीजनाः । 'भूत्यै न प्रमदितव्यम्' इत्यादिस्थलेषु यत्र शङ्कराचार्य ऐश्वर्यमर्थं निश्चिनोति भूतिशब्दस्य, तत्र बोधायनस्तु बौधायनगृह्यसूत्रे 'भूतिः=भस्म' इत्यैदम्पर्यं निर्धारयतीति श्रीभाष्यसिद्धान्तानैक्यान्महतीं सन्देहपदवीमारोपयति विभेदोऽयम् ।

वस्तुतस्तु ब्रह्मसूत्रवृत्तिकृतो बौधायनात् कल्पसूत्राणां प्रवर्तक आचार्यो भिन्नो वर्तते । बौधायनधर्मसूत्रस्य भाष्यकारेण गोविन्दस्वामिनाऽयं 'काण्वायनः' इति नामान्तरेण स्मृतः । तत्र 'बोधायनः' इति 'बौधायनः' इति चोभयवर्तनीको लभ्यते पाठः । कृष्णानदीप्रदेशे बौधायनशाखीया ब्राह्मणा भूयिष्ठतया दृश्यन्ते । वेदभाष्यकारः सायणोऽपि बौधायनशाखीयो ब्राह्मणोऽभूत् । नन्दिवर्मणो नवमशताब्दीकेषु बहुषु शिलालेखेषु प्रवचनकाराणां कृते प्रदत्तस्य दानस्य समुल्लेखो वर्तते । एवं तावद् दाक्षिणात्यादस्माद् बौधायनाद् ब्रह्मसूत्रवृत्तिकृतः परवर्तिनो बौधायनस्य पार्थक्यं बाढं सिध्यति ।

शुल्बसूत्राणामाद्यः प्रवर्तको नासीद् बौधायनः । तस्मात् पूर्वं बहुभिराचार्यैः शुल्बसूत्राणि सूत्रितान्यासन्निति निर्विवादं शक्यते प्रतिपादयितुम् । बौधायनेनेह शुल्बसूत्रे पूर्ववर्तिनां बहूनामाचार्याणां मतानि 'अपरम्', 'एके', 'एकेषाम्' इत्यादिशब्दैः समुद्धृतानि सन्ति । यथा—'चतुस्त्रिंशत्तिलाः पृथुसंश्लिष्टा इत्यपरम्' ( १,४ ); 'विराट् सम्पन्नेत्येकेषाम्' ( १,६२ ); 'यजमानमात्री चतुःस्रक्तिर्भवतीत्येकेषाम्' ( १,६५ ); एके समामनन्ति ( २,६ ); अथ हैके चिन्वते ( २,६ ); चतुरश्रेत्येकेषाम्, परिमण्डलेत्येकेषाम् ( २,१० ); अथ हैक एकविधप्रभृतीन् प्रउगादीन् ब्रुवते ( ३,१४२ ); समचतुरस्रानेक आचार्याः ( ३, १४३ ) इति । एकत्र स मैत्रायणीब्राह्मणमप्युद्धरति—'दैव्यस्य मानुषस्य च व्यावृत्त्या इति मैत्रायणीब्राह्मणं भवति' ( ३, ६ ) इति । बौधायनीयं शुल्बसूत्रं पाणिनीयसूत्रवत् परिनिष्ठितं नास्ति । तत्रैकस्मिन्नेव सूत्रे सदृश्या क्रियाया आवृत्तिः क्रियते । यथा—

न खण्डामुपदध्यात्,<br>
न भिन्नामुपदध्यात्,<br>
न जीर्णामुपदध्यात्,<br>
न लक्ष्मामुपदध्यात् ( २, २४ ) ।

बौधायनात् पूर्वं शुल्बविषयकाश्छन्दोबद्धा ग्रन्था अभूवन्निति प्रतीयते । बौधायनेन बहुवचनोपन्यासपूर्वकं स्वकीयं मतमित्थमभिव्यक्तम्—'अविशेषात् ते मन्यामहे' (३,१३० ) इति । सूत्रशैल्या लिखितानां ग्रन्थानां विश्लेषणार्थं वार्त्तिकानि भाष्याणि व्याख्याश्च परमोपकाराय सिध्यन्ति । व्याख्याकारस्य ग्रन्थकाराद् बुद्धिमत्तरत्वं विस्तृतपाण्डित्यं च भवत इति प्रसिद्धम् । ग्रन्थग्रन्थिभेदनाय विस्तरशो ग्रन्थकाराशयावबोधाय च व्याख्यानामस्ति कश्चिदनितरसाधारणो महिमा ।

इह व्याख्याद्वये विभिन्नानामाचार्याणां ग्रन्थानां च मतानि ग्रन्थावबोधाय प्रस्तुतानि । यथा—काश्यपीयैः ( शु० मी० ४ ); जैमिनिना ( शु० मी० ६ पृ० ); अस्म-

दाचार्याः ( शु० मी० ६ पृ० ); आपस्तम्बाचार्याः ( शु० मी० ६ पृ० ); कात्यायन आह ( शु० दी० ११ पृ० ); आचार्यैः ( शु० मी० १६ ); आर्यभटीये ( शु० दी० २६ पृ० ); कात्यायनः ( शु० दी० ३४ पृ० ); आपस्तम्बाचार्यैः ( शु० मी० ४७ पृ० ); आचार्याः ( शु० मी० ५३ पृ० ); व्याख्यातमाचार्यैः ( शु० मी० ५६ पृ० ); आपस्तम्बाचार्यवचनादवसीयते ( ५७ पृ० ); तथा चापस्तम्बः ( शु० दी० ६० पृ० ); व्याख्यानमाचार्यैः कृतं वेदितव्यम् ।

कोशेष्वनुपलब्धार्थानां शब्दानामर्था व्याख्ययोरनयोर्यथास्थलं निर्दिष्टाः सन्ति । यथा—वेलायाम्=त्यक्तायाम्, वेलाशब्देनांश उच्यते (३, ११ शु० मी०); विशयस्थाः = मध्यस्थाः (२, १३ शु० मी०); उप्लव- = उपप्लवशब्दोऽन्तपर्यायः (२, १५ शु० मी० ); विशये=एकदेशे । विशयशब्दस्यैकदेशार्थत्वमापस्तम्बेनोक्तम् ( ३, ४३ शु० मी० ); चुबुके=पूर्वस्मिन्नग्रे ( ३, ८३ शु० मी० ); प्रउगः=शकटस्येषयोः संयोगप्रदेशः ( ३, ८१ शु० दी० ); अनीके=पश्चिमान्त्यप्रदेशे ( ३, ८४ शु० मी० ); अनूचीनम्=प्राक्प्रत्यग्दीर्घम् ( ३, १२६ शु० मी० )। यत्र क्वापि व्याख्याकाराभ्यां सन्तोषो नानुभूतो व्याख्याभ्यां तत्र 'पक्षान्तरमप्यस्ति, तदप्यनुसन्धेयम् ( ३२ पृ० ); 'अत्र कल्पोक्तो विधिरनुसन्धातव्यः' ( शु० दी० १४६ पृ० ) इत्याद्युक्तम् ।

बौधायनशुल्बसूत्रस्य शुल्बदीपिकाभिधेया द्वारकानाथयज्वकृता व्याख्या थिबोमहोदयेन संपाद्य पण्डितपत्रिकायां मुद्रापिता । आङ्ग्लभाषानुवादोऽपि तेनैव कृतस्तत्र प्रकाशितः । विलेमकैलैण्डमहोदयसम्पादितं द्वारकानाथयज्वव्याख्यासमेतं बौधायनशुल्बसूत्रं कालिकातातः १६१३ तमे खीस्ताब्दे प्रकाशितमभूत्। एवं सत्यपि व्यङ्कटेश्वरदीक्षितकृता शुल्बमीमांसाऽप्रकाशितैवातिष्ठत् । सरस्वतीभवनपुस्तकालयस्य पुस्तकाध्यक्षचरेण श्रीविभूतिभूषणभट्टाचार्येण भाण्डारकरप्राच्यानुसन्धानसंस्थानस्य पुस्तकालयादस्य प्रतिलिपिः समासादिता । त्रुटितानां पाठानां पूरणम्, अशुद्धीनां च संशोधनं कृत्वा व्याख्येयं पूर्वसम्पादितग्रन्थेन सह कुशलं सम्पादिता । ग्रन्थोपन्यस्तानां प्रस्ताराणां बहुभी रेखाचित्रैर्ग्रन्थोऽयं परिमण्डितो नूनं जिज्ञासुजनानामुपकाराय विद्वज्जनानां च प्रीणनाय सेत्स्यतीति ध्रुवं प्रत्येति ।

| वाराणस्यां<br>मेषसंक्रान्तौ २०३६ वै०<br>( १४-४-१६७६ शनिवासरे ) | भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'<br>निदेशकः<br>अनुसन्धानसंस्थानस्य |
|---|---|

॥ श्रीदुर्गाशरणम् ॥

# भूमिका

बौधायनशुल्बसूत्रमिदं पण्डितपत्रे श्रीमता थिबोमहोदयेन द्वारकानाथयज्व-प्रणीतया टीकया शुल्बदीपिकाख्यया आङ्गलभाषान्तरेण च सह सम्पाद्य प्रकाशितमासीत् । प्रकाशिते आलोचिते चास्मिन् ग्रन्थे पाश्चात्त्येषु भारतीयविद्यालोचकेषु पण्डितेषु महान् बुद्धि-भेदः समुत्पन्नः । पाश्चात्त्या भारतीयविद्यालोचकास्तावत् सामान्यतः प्राचीनानां यवन-पण्डितानां विशेषतश्च पिथागोरस्, युक्लीद्प्रभृतीनां क्षेत्रतत्त्व ( Geometry ) विषयिणी प्रतिभैव असत्प्रतिपक्षतया सर्वातिशायिनीति मन्यमानाः क्षेत्रमितिसम्बन्धिनां प्रायः सर्वेषा-मेव सिद्धान्तानां पिथागोरसादय एवोद्भावका आसन्निति गणितशास्त्रीयेतिहासप्रणयना-दिभिः सडिण्डिमघोषं प्रचारितवन्तः । तन्मूलकमेव केषाञ्चिद् गणितसिद्धान्तानां पिथा-गोरसीयसिद्धान्तादि नामकरणमपि दृश्यते ।

एवम्भूते काले पाश्चात्त्यविद्वद्भिः सुबहुकाललालितस्यास्य पिथागोरसादीनां यवन-पण्डितानां क्षेत्रतत्त्वसम्बन्धिसिद्धान्तोद्भावकत्वप्रवादस्य प्रतिपक्ष इव निबन्धोऽयं पाश्चात्त्य-देशेषु प्राप्त आसीत् ।

परं कूटनीतिपरवशा एते पाश्चात्त्या विद्वांसस्तर्कयुक्तयाद्याभासपरम्परोद्भावनेन शुल्बसूत्रकाराणां बोधायनाद्याचार्याणां क्षेत्रतत्त्वज्ञानमाविष्कर्त्तुं परमनिच्छन्तः ग्रन्थेऽस्मिन् उपपत्तिप्रदर्शनं विनैव यत्

(१) समस्य दीर्घस्य वा चतुरश्रस्य अक्ष्णया ( कर्ण ) रज्जुसम्पादितं समचतुरश्रक्षेत्रं उल्लिखितयोश्चतुरस्रयोः पार्श्वमानीतिर्यङ्मानिभिः ( भुजकोटिभिः ) पृथक् पृथक् सम्पा-दितयोः समचतुरश्रयोः सङ्कलितक्षेत्रफल-तुल्यफलकं भवतीति

(२) वर्गात्मिकानां द्वित्रिपञ्चसप्तप्रभृतीनां संख्यानां रेखात्मकमूलानयनम्

(३) समचतुरश्रस्य मण्डलकरणम्

(४) मण्डलस्य समचतुरश्रकरणम्

(५) दिङ्निर्णयप्रकारश्च

उक्तस्तत्र प्रथमे-द्वितीये वा ग्रन्थकारस्य क्षेत्रतत्त्वज्ञानप्रमापकं किमपि न दृश्यते । तृतीयचतुर्थयोस्तावत् यथार्थफलाजनकत्वम् स्पष्टम् । पञ्चमेऽपिशुद्धफलजनकत्वं सुस्पष्ट-

सापेक्षत्वात् अनन्तरमुपदेश इति मन्तव्यः। आपस्तम्बाचार्येण तु अस्यैव प्रकारस्योपदेशः प्रथमतया कृतो वर्त्तते। तट्टीकाकारेण करविन्दाधिपेनात्र रज्जुग्रहण, तस्यां रज्ज्वन्तरप्रक्षेपः, तत्र च न्यञ्छनादिचिह्नस्थानानाम् आनयनार्थं काचित् पाटीगणितप्रक्रिया ग्रन्थतात्पर्यमनुसृत्य प्रदर्शिता। अनया च प्रक्रियया भूमेः ( कोटेः ), भुजकर्णयोः सङ्कलिते च ज्ञाते जात्यत्र्यस्रोत्पादनार्थं भुजकर्णयोर्मानमानेतुं शक्यते। तत्र पृष्ठ्यैव भूमिः, कोटिर्वा, प्रमाणरज्जुसंज्ञया उच्यते। भुजकर्णयोः सङ्कलिततुल्या प्रमाणरज्ज्वां प्रक्षिप्ता रज्जुरेव अभ्यस्तरज्जुसंज्ञया व्यवह्रियते। तथा च तद्वाक्यम्—

"सर्वेष्वभ्यासेषु साभ्यासस्य प्रमाणस्य आगन्तुपरिमिता यावन्तो भागाः सम्पद्यन्ते तावद्द्विगुणभागं आगन्तुं कृत्वा तस्मिन् भागेनैकेन हीने लक्षणकरणम्" इति। अत्र आगन्तुशब्दस्य प्रमाणरज्ज्वां प्रक्षिप्ता अभ्यस्तरज्जुरेवार्थः। अत एवे प्रसिद्धेन प्रकारेण न्यासे क्रियमाणे—

$$(१)\ \text{प्र} + \frac{\text{आ}}{२\frac{\text{प्र}+\text{आ}}{\text{आ}}} = \text{अक्ष्णया (कर्णः)}$$

$$(२)\ \text{आ} - \frac{\text{आ}}{२\frac{\text{प्र}+\text{आ}}{\text{आ}}} = \text{भुजः ( पार्श्वमानी )}$$

यद्यपि एकयैव प्रक्रियया कर्णोभुजश्चानेतुं शक्यते तथापि वैशद्यार्थम् अस्माभिः प्रक्रियाद्वयं पृथक् लिखितं ज्ञेयम्। अत्र प्र = प्रमाणम्, आ = आगन्तुरिति बोद्धव्यम्। अत्रोदाहरणन्तु—यद्येकस्य जात्यत्र्यस्रस्य भूमिः प्रमाणं वा ४ कल्प्यते, तादृशे जात्ये त्र्यस्रे भुजकर्णयोर्योगे ८ तुल्ये कल्पिते प्रमाणरज्ज्वां प्रक्षिप्ता अभ्यस्तरज्जुः ४ तुल्या कल्पिता। साभ्यासस्य प्रमाणस्य मानं ८ तुल्यं भवति। परं न ज्ञायते कियति कर्णे, भुजे वा कल्पिते जात्यत्र्यस्रं सम्पत्स्यत इति। दृष्टं तावत् भूमिः ४ भुजकर्णयोर्योगः ८ इति। इदानीम् अनया प्रक्रियया न्यासे कृते।

$$4 + \frac{4}{2\frac{4+4}{4}} = \text{कर्णः} = \left| 4 + \frac{4}{2\frac{\not 8\, 2}{\not 4}} = \right| 4 + \frac{\not 4\, 1}{\not 4} = \left| 4 + 1 = 5 \text{ कर्णः} \right.$$

तथा च साभ्यासस्य प्रमाणस्य ५ तुल्यो भागः कर्णः, शेषश्च ३ तुल्यो भुजो भवति। इति भुजः ३ कोटिः ४ कर्णश्च ५ तुल्यो जातस्तेन च जात्यत्र्यस्रं सम्पन्नम्।

द्वितीयेनापि प्रकारेण—

$$4-\frac{4}{2\frac{4+4}{4}}=\text{भुजः} \quad\Big|\quad 4-\frac{4}{2\frac{\cancel{8}\ 2}{\cancel{4}}}=\text{भुजः} \quad\Big|\quad 4-\frac{\cancel{4}\ 1}{\cancel{4}}=\text{भुजः}$$

४—१ = ३ भुजः। शेषः ५ कर्णोभवति। एवं सर्वत्रानुसन्धेयम्।

द्विसमं-त्रिसमं वा त्रिभुजं सम्पाद्य पृष्ठ्योपरि लम्बपातनं ततश्च समचतुरस्रादिकं सम्पादनीयमिति तृतीयः प्रकारः। पृष्ठ्यान्तयोः शङ्कू निहन्यात्। एकैकं शङ्कुमभितः तुल्येऽन्तराले पूर्वपश्चिमयोः शङ्कुद्वयं निखेयम्। प्रमाणभूतां रज्जुम् उभयतःपाशां कृत्वा तन्मध्ये न्यञ्छनार्थं चिह्नं कर्त्तव्यम्। इदानीं पृष्ठ्यान्तशङ्कुमभितः निखातयोः शङ्क्वोः रज्ज्वन्तपाशद्वयं निःक्षिप्य न्यञ्छनेन रज्जुं दक्षिणस्यामुत्तरस्यां वा दिशि आकर्षणीयम्। तेन द्विसमं त्रिसमं वा त्रिभुजं सम्पद्यते। तस्माच्च न्यञ्छनाख्यान्मध्यचिह्नात् पृष्ठ्यान्त-शङ्कोरुपरि रेखा कर्त्तव्या। सा च पृष्ठ्यान्ते लम्बिता भवति। ततः समं दीर्घं वा चतुरस्रं सम्पद्यते।

एते उल्लिखिता उपायाः समकर्णस्य समचतुरस्रस्य तथाविधदीर्घचतुरस्रस्य वा सम्पादने उपयोगिनः। विषमकर्णचतुरस्रं तावदुभयतः प्रउगमित्युच्यते। तादृशञ्च क्षेत्रं प्रउग ( त्रिभुज) क्षेत्रद्वयकल्पनेन विधेयमिति शुल्बसूत्रकाराणां सम्प्रदाय इति मन्तव्यम्। प्रउगं नाम शकटमुखं, समद्विबाहुकं वा त्रिभुजं क्षेत्रमुच्यते। शकटमुखसादृश्यात् तादृशं क्षेत्रमपि तन्नाम्ना ख्यायते शुल्बसूत्रेषु। तथा च एकस्यां भूमौ यदि विपीरतदिशि समद्विबाहुकं त्रिभुजं क्षेत्रद्वयं सम्पद्यते तदा तस्य क्षेत्रस्य विषमकर्ण चतुरस्रत्वमर्थादापन्नं भवति। इष्टक्षेत्रफलतो द्विगुणं समचतुरस्रं, दीर्घचतुरस्रं वा क्षेत्रं सम्पाद्य ततो ग्रन्थोक्तक्रमेण उभयतः प्रउगक्षेत्रनिष्पत्तिरिति ज्ञेयम्।

अथेदानीं चतुरस्रक्षेत्रयोः समासनिर्हारयोः प्रकार आलोच्यते। अयञ्च प्रकारः पाश्चात्त्येषु क्षेत्रव्यवहारगणित ( Mensutation ) ग्रन्थेषु नैव आलोचितो दृश्यते। समासो नाम द्वयोः चतुरस्रयोः क्षेत्रफलसङ्कलित-तुल्यक्षेत्रफलकचतुरस्रनिष्पत्तिरित्युच्यते। निर्हारश्च महतश्चतुरस्रादल्पचतुरस्रस्य निरसनमुच्यते। चतुरस्रशब्देन च समकर्ण-चतुरस्रस्यैव ग्रहणं सूत्रकृदभिमतम्। विषमकर्णसमचतुरस्रस्य तु उभयतः प्रउगक्षेत्रत्वं पूर्वमेवोक्तम्। विषमकर्णविषमचतुरस्रस्य श्रौतकार्येषु उपयोगाभावात् शुल्बसूत्रेऽनधिकृतत्वं मन्तव्यम्। क्रियतेऽनयेति व्युत्पत्त्या करणीनां क्षेत्रफलजनकत्वं अर्थादापन्नम्। अनन्तर-करण्योर्गुणनफलं तावत् क्षेत्रफलमित्युच्यते। क्षेत्रयोः समासे क्षेत्रफलस्य वृद्धिः, निर्हारे च ह्रासः इति पूर्वमेवोक्तम्। क्षेत्रफलस्य ह्रासो वृद्धिर्वा करणीनां यथायथं ह्रासवृद्धिसाध्यमिति

तु तयोः ( करणी-क्षेत्रफलयोः ) स्वरूपादेवावगम्यते । तस्मात् क्षेत्रयोः समासे कर्त्तव्ये उद्दिष्टक्षेत्रकरणीतः समस्तक्षेत्रकरणीनां वृद्धिः, निर्हारे च क्षेत्रकरणीनां ह्रासो भवतीति तात्पर्यम् । करणीनां वृद्ध्यर्थं न्यायस्तावत् ग्रन्थकृता "समचतुरश्रस्याक्ष्णया रज्जुर्द्विस्तावतीं भूमिं करोतीति; दीर्घचतुरश्रस्याक्ष्णया रज्जुः पार्श्वमानी तिर्यङ्मानी च यत् पृथग्भूते कुरुतस्तदुभयं करोतीति" सूत्राभ्यां प्रकाशितो वर्त्तते ।

उल्लिखिते प्रथमे सूत्रे "तावतीं भूमिं द्विः करोति" इति वचनात् क्षेत्रफलस्य द्वैगुण्यसाधिका तावदक्ष्णयारज्जुमिता करणी ( पार्श्वमाणी ) समचतुरस्रे क्षेत्रे भवतीति लभ्यते। तदर्थश्च आलापविषयभूतस्य क्षेत्रस्य अक्ष्णया रज्ज्वा करणीभूतया यदि समचतुरस्रान्तरं क्रियते चेत् तदा तादृशक्षेत्रस्य फलम् आलापविषयभूतक्षेत्रस्य फलतो द्विगुणं भवेदिति । सर्वथा तुल्ययोः समचतुरस्रयोः समासस्थले क्षेत्रफलस्य वृद्धिस्तावत् उभयोः क्षेत्रफलयोः सङ्कलिततुल्या द्विगुणेति यावद् भवतीति गणितेन लभ्यते । इदानीं तादृशसङ्कलिततुल्यक्षेत्रफलजनिका करणी कियन्मिता भवेदिति जिज्ञासायाम् उक्तेन न्यायेन द्विगुणक्षेत्रफलजनकत्वं तु आलापविषय-भूतक्षेत्रस्याक्ष्णयारज्जुमितायाः करण्या एवेति ज्ञायते । तया करण्या क्षेत्रसम्पादनेन च द्विगुणक्षेत्रफललाभः सुकरः ।

अतुल्यसमचतुरस्रयोः समासे तु नायं न्यायः प्रवर्त्तते । क्षेत्रफलसङ्कलितस्य द्वैगुण्या-भावादिति तादृशं स्थलमुद्दिश्य दीर्घचतुरस्रस्येत्यादिवचनमवगन्तव्यम् । तदर्थश्च आलाप-विषयभूतस्य दीर्घचतुरस्रस्याक्ष्णयारज्जुमितया करण्या यदि समचतुरस्रान्तरं क्रियते तदा तादृशसमचतुरस्रस्य क्षेत्रफलं तावत् उक्तस्य दीर्घचतुरस्रस्य, पार्श्वमान्या करणीभूतया सम्पादितस्य समचतुरस्रस्य, तिर्यङ्मान्या च करणीभूतया सम्पादितस्य समचतुरस्रस्य च क्षेत्रफलयोः सङ्कलिततुल्यं भवतीति । अतुल्यसमचतुरस्रयोः क्षेत्रफलसङ्कलितं तावत् तयोरेकस्य पार्श्वमान्या पार्श्वमानीभूतया, अन्यस्य च पार्श्वमान्या तिर्यङ्मानीभूतया सम्पादितस्य दीर्घ-चतुरस्रस्य अक्ष्णया करणीभूतया सम्पादितसमचतुरस्रस्य क्षेत्रफलतुल्यं भवतीति गणितयुक्त्या ज्ञायते । कर्णवर्गस्य भुजवर्ग-कोटिवर्गयोर्योगतुल्यत्वात् । भुजकोट्योरेव शुल्बसूत्रेषु पार्श्वमानी-तिर्यङ्मानीति कर्णस्य च अक्ष्णयेति पारिभाषिकी संज्ञा प्रसिद्धा । करणी तु वर्गमूलस्य वाचिकेति शुल्बसूत्रवित्सु बहुलम् । तस्मात् उक्तस्थले पार्श्वमान्या करणीभूतया सम्पादितसमचतुरस्रस्य क्षेत्रफलं तावद् पार्श्वमानीत्यपराख्यस्य भुजस्य मूलत्वेन करणीभूतस्य वर्गराशितुल्यं भवति । एवं तिर्यङ्मानीत्यपराख्यायाः कोटेर्मूलत्वेन करणीभूतायाः वर्गराशितुल्यमेव तिर्यङ्मान्या करणीभूतया सम्पादितसमचतुरस्रस्य क्षेत्रफलं ज्ञेयम् । तयोर्वर्गराश्योर्योगतुल्यत्वमेव अक्ष्णयेत्यपराख्यस्य कर्णवर्गस्येति । तादृशदीर्घचतुरस्रस्य अक्ष्णया करणीभूतया सम्पादित-समचतुरस्रक्षेत्रस्य फलं उक्तयोः क्षेत्रयोः फलसङ्कलिततुल्यं भवेदिति ।

तस्मादतुल्यसमचतुरश्रयोः समासे कर्त्तव्ये द्वयोरतुल्ययोः समचतुरस्रयोरेकस्य पार्श्वमानीं पार्श्वमानीकृत्य, अपरस्य च पार्श्वमानीं तिर्यङ्मानीकृत्य दीर्घचतुरस्रमेकं सम्पाद्य

तस्याक्षणया तुल्यया पार्श्वमान्या समचतुरस्रे कृते उभयोरतुल्ययोः समचतुरस्रयोः समासो भवेत् ।

ननु शुल्बसूत्रेषु विषमकर्णचतुरस्रस्य उभयतः प्रउगत्वेन विभजनात् चतुरस्रपदेन तेषामग्रहणात् उल्लिखितयोः सूत्रयोः सम-दीर्घपदोपादानमनतिप्रयोजनकम् । तथासति केवलं चतुरस्रपदोपादानेन "चतुरस्रस्याक्षणयारज्जुः पार्श्वमानीतिर्यङ्मानी च यत् पृथगभूते कुरुतस्तदुभयं करोतीति" एकेनैव सूत्रेण सर्वत्र साध्यसिद्धेः सूत्रद्वयकरणे गौरवमिति चेत् । न । तादृशसूत्रकरणेन गणितशास्त्रीयसाध्यसिद्धिसम्भवेऽपि शुल्बसूत्रीयसाध्यसिद्धिर्न स्यात् । शुल्बसूत्रे तु क्षेत्राणामेव साध्यत्वात् उद्दिष्टक्षेत्रतो द्वि-त्रि-पञ्च-षट्-सप्तगुणानां क्षेत्राणां लाघवेन सिद्ध्यर्थं तादृशक्षेत्रस्य द्विगुणक्षेत्रकरण्याः पृथगुपदेशः । तन्मूलकत्वात् त्रि-पञ्च-षट्-सप्तादिगुण-क्षेत्रकरणीनां तत एव लाभसम्भवात् सूत्रद्वयकरणं नासङ्गतम् ।

प्रकृतमनुसरामः । निर्हारश्च महतः समचतुरस्रादल्पसमचतुरस्रस्यापोद्धरणमिति तु पूर्वमेवोक्तम् । निर्हारस्य समासवैपरीत्यात् समासविपरीतक्रमेण निर्हारसिद्धिरिति स्पष्टम् । तथा च समचतुरस्याक्षणया रज्जुर्यदि द्विगुणक्षेत्रफलकं समचतुरस्रं सम्पादयेत् तदा तद्विपरीत-न्यायेन उद्दिष्टसमचतुरस्रस्य पार्श्वमान्या अक्षणयात्वे कल्पिते सम्पन्नस्य समचतुरस्रस्योद्दिष्ट-समचतुरस्रतोऽर्धक्षेत्रफलकत्वं अर्थादापन्नम् ।

एवमेव अतुल्यचतुरस्रयोः महतः समचतुरस्रादल्पस्य निर्हारे कर्त्तव्येऽपि "दीर्घचतुर-स्रस्ये"त्यादि सूत्रोक्तन्यायवैपरीत्येन महतः समचतुरस्रादल्पसमचतुरस्रनिरासः कर्त्तव्यः । तत् प्रकारश्चोदाहरणेन स्पष्टीक्रियते । कल्प्यते एकाशीतिक्षेत्रफलकं नवतुल्यपार्श्वमानीकं तत्तुल्यतिर्यङ्मानीकञ्च समचतुरस्रम् । तस्माद् यदि एकतुल्यक्षेत्रफलनिर्हारेण अशीतिक्षेत्र-फलकं समचतुरस्रं सम्पादनीयं चेत् तदा कल्पितचतुरस्रस्य तिर्यङ्मान्योर्दक्षिणान्ताद् एक-तुल्यान्तरे चिह्नं कार्यम् । एवं पार्श्वमान्योरपि पूर्वान्तादेकतुल्येऽन्तरे चिह्नं कृत्वा रेखया अभिमुखानां चिह्नानां योजनं कार्यम् । तेन महतश्चतुरस्रस्य मध्ये पूर्वदक्षिणकोणे एकं स्वल्पं समचतुरस्रं एकतुल्यक्षेत्रफलकमन्यच्च चतुष्षष्टितुल्यक्षेत्रफलकं अष्टमितपार्श्वमानीकं महत् समचतुरस्रं स्वल्पसमचतुरस्रस्य पश्चिमोत्तरकोणे सक्तपूर्वदक्षिणास्रं लप्स्यते । अथवा तस्य महतः समचतुरस्राद्दक्षिणस्यां दिशि एकतिर्यङ्मानीकं नवपार्श्वमानीकञ्च दीर्घचतुरस्रं सम्पत्स्यते । तत्र पूर्वदक्षिणकोणस्थस्य एकतुल्यक्षेत्रफलकस्य स्वल्पसमचतुरस्रस्य निर्हारेण समचतुरस्रं साधनीयम् । तदर्थं एकतिर्यङ्मानीकनवपार्श्वमानीकस्य दीर्घचतुरस्रस्य पार्श्वमानीम् अक्षणयां परिकल्प्य ह्रस्वे दीर्घचतुरस्रे कर्त्तव्ये । तयोर्दीर्घचतुरस्रयोर्बाह्यांश-परित्यागेन इष्टक्षेत्रफलस्य निर्हारो भवेदिति क्षेत्राङ्कनेन स्पष्टं भविष्यति । न्यायश्चात्र एकतिर्य-ङ्मानीके नवपार्श्वमानीके च दीर्घचतुरस्रे तादृशचतुरस्रस्य ह्रासे कर्त्तव्ये पार्श्वमान्या अक्षण-यात्वे कल्पिते तिर्यङ्मान्या एकतुल्यत्वम् अक्षणयायाश्च नवकरणीत्वं सुव्यक्तम् । इदानीं दीर्घचतुरस्रस्य तस्य अक्षणयारज्जुः एकमितया तिर्यङ्मान्या अज्ञातया च पार्श्वमान्या पृथग-

भूतया यत् क्रियते तदुभयं करोतीति नवमिताया अक्ष्णयायाः समचतुरस्रे कृते एकाशीति तुल्यं क्षेत्रफलं भवति। तस्मात् एकाशीतिमितात् क्षेत्रफलाद् यदि एकमितायास्तिर्यङ्मान्या कृतस्य क्षेत्रस्य फलम् एकमितं निरस्यते तदा अशीतिरेवावशिष्यते। तदेव तादृशदीर्घ-चतुरस्रस्याज्ञातया पार्श्वमान्या कर्त्तुं योग्यस्य समचतुरस्रस्य क्षेत्रफलमर्थादापन्नमिति। सैव पार्श्वमानी अशीतिकरणी ज्ञेया।

दीर्घचतुरस्रस्य समचतुरस्रीकरणेऽपि तुल्यो न्यायः प्रयोक्तव्यः। तद्यथा इष्टस्य दीर्घचतुरस्रस्य ह्रस्वेन भुजेन तदन्तः समचतुरस्रं निष्पाद्य शेषं क्षेत्रं समं द्वेधा विभजेत्। तथा विभक्तयोरेकं पूर्वनिष्पन्नसमचतुरस्रसंलग्नं विहायापरं तत्समीपस्थे समचतुरस्रपार्श्वे योजनीयम्। एवं कृते इष्टस्य दीर्घचतुरस्रस्य पश्चिमभागे यदि तत्तिर्यङ्मान्या समचतुरस्रं कृतं तदा तत्पूर्वभागस्थितं क्षेत्रं समं द्विधा भिन्नं सत् भिन्नयोः सतोः पश्चिमभागस्थं तत्रैव हित्वा पूर्वभागस्थं क्षेत्रं समचतुरस्रस्य दक्षिणपार्श्वे संस्थापितं भवेत्। तेन च समचतुरस्रस्य पूर्वभागे दक्षिणभागे च क्षेत्रद्वयसंयोजनात् तस्य पूर्वदक्षिणदिशि यत् खण्डमवशिष्टं तस्य पूरणम् अधिकक्षेत्रसंयोजनेन कर्त्तव्यम्। तेन समचतुरस्रसिद्धिः। अस्य च अधिकस्य क्षेत्रस्य निर्ह्रासः पूर्ववत् कर्त्तव्यः। तेन इष्टस्य दीर्घचतुरस्रस्य समचतुरस्रत्वं सम्पन्नम्। अन्ये च क्षेत्र-सम्पादनप्रकाराः प्रस्तुतग्रन्थे यथास्थानं सूत्रकृद्भिरुपदिष्टाः बाहुल्यभयेन नात्रालोच्यन्ते।

इदानीं शुल्बसूत्रस्य स्थण्डिलनिर्वृत्त्यौपयिक इष्टकोपधानरूपो विषय एवालोच्यते। स च प्रकारो लौकिकवास्तुशास्त्रीयेष्टकोपधानप्रकारतो भिन्न इति तत्प्रकारस्य शुल्बसूत्र-विषयत्वम्। तत्र विहितक्षेत्रनिष्पत्तेरनन्तरं तस्मिन् इष्टकानां यथाविधि स्थापनमेवोपधान-मित्युच्यते। तदर्थं आदौ इष्टका एव विहितस्वरूपाः सम्पादनीयाः। इष्टकाः स्तावत् प्रथमतः इष्टस्वरूपसम्पादनोपयोगिना काष्ठनिर्मितेन करणाख्येन उपकरणेन सम्पादनीयाः। इष्टकानां स्वरूपं तावत् स्थण्डिलस्याकारविशेषानुविधायि सूत्रेषु यथायथमुपदिष्टम्। सम्पन्नानामिष्ट-कानाम् आर्द्रत्वात् शोषपाकाभ्यां ह्रासो भवतीति यथाप्रमाणमिष्टकानां सम्पादनार्थं किञ्चिद-धिकप्रमाणा आर्द्रेष्टकाः कार्या इति कात्यायनः।

ह्रसते पाकशोषाभ्यां द्वात्रिंशद्भागमिष्टकाः।
तस्मादार्द्रप्रमाणन्तु कार्यं मानाधिकं बुधैरिति ।

महीधरधृत श्लोकादवगम्यते। तथा च आर्द्रेष्टकास्तु विहितप्रमाणतो द्वात्रिंशद्-भागेनाधिकाः कार्याः। करणमपि तथैवाधिकप्रमाणकं कार्यमिति। बौधायने तु—२।२८ सूत्रे "यच्छोषपाकाभ्यां प्रतिह्रसेत पुरीषेण तत्संपूरयेद्" इति करणानां विहितेष्टकाप्रमाणत्वमेवो-पदिष्टम्। इष्टकानामूर्ध्वप्रमाणं तावत् जानोः पञ्चमांशतुल्यमिति तेन ६$\frac{2}{5}$ अङ्गुलमूर्ध्वप्रमाणं, पृथुत्वमित्यर्थः, इष्टकानाम् आयामविस्तारौ तु यथास्थण्डिलं भिद्यत इति तत्तच्चितौ तेषां

प्रमाणं द्रष्टव्यम् । तासां सामान्यतः समचतुरस्राकृतीनामिष्टकानां नामानि तु तृतीया, चतुर्थी पञ्चमी षष्ठीत्याद्यानि बोध्यव्यानि । एतासामेवेष्टकानाम् अर्ध-पादादिप्रमाणेष्टका अर्ध्याः पाद्याः इत्यादिभिर्नामभिरभिधीयत इति तत्रानुसन्धेयम् । यद्यपि लौकिके वास्तुशास्त्रे इष्टकानां उपधानकाले यथावश्यकं खण्डिताभिरिष्टकाभिः स्थानपूरणमप्रतिषिद्धमिति इष्टककरणानां एकरूपत्वमेव दृश्यते तथापि वैदिके शुल्बसूत्रे तु खण्डितानां भिन्नानां, जीर्णानां, पाकातिशयेन कृष्णानां दारुपाषाणादिना चिह्नयुक्तानां वा इष्टकानामुपधानायोग्यत्वकथनात् स्थण्डिल-निर्वृत्तावुपयोगिनीनां सर्वासामेवेष्टकानां करणभेदेन सम्पादितानामेवोपयोगो भवेदिति मन्तव्यम् । तदर्थं तत्तत्स्थण्डिलोपयोगिनीनाम् अर्ध्यापाद्यादीनामपि स्वातन्त्र्येणोपदेशः शुल्बसूत्रेषु भवति ।

सम्पन्नानामिष्टकानां सूत्रकृदुपदिष्टेन प्रकारेण स्थण्डिलाकारसम्पादकं स्थापनमुपधान-मित्युच्यते । यथादिशम् अव्यवधानेन स्थापितानामिष्टकानां श्रेणी रीतिरित्युच्यते । यथो-पदिष्टासु रीतिषु स्थापिता इष्टकाः स्थण्डिलस्य श्येनाद्याकारतां सम्पादयन्ति । सम्पादितायामपि स्थण्डिलस्य श्येनाद्याकारतायां स्थण्डिलस्य विहितमूर्द्धप्रमाणन्तु न लभ्यत इति इष्टका उपर्युपरि तथैव स्थापनीया यावद् विहितोर्ध्वप्रमाणं स्थण्डिलं स्यादिति । तथा कर्त्तव्ये चाधःस्थानामिष्टकानां सन्धयस्तु प्रच्छादनीया भवन्ति । तदेव शुल्बसूत्रेषु भेदवर्जनमित्युच्यते । एतदर्थमेव तत्र अर्ध्यानां, पाद्यानां दीर्घपाद्यानां, शूलपाद्यानां हंसमुखीनां प्रयोगः शुल्बसूत्रेषु दृश्यते । यथावसरमेतासां नानाविधानामिष्टकानामुपधानेन सम्पाद्ये स्थण्डिलादौ सर्वत्र इष्टकानां सन्धयः प्रच्छादिता भवन्ति । लौकिके वास्तुनि पुनर्भेदवर्जनार्थमेकरूपाया एवेष्ट-कायाः खण्डनेनैव अर्ध्यादीनां यथावश्यकं लाभः क्रियते ।

न च शुल्बसूत्रेभ्योऽपि प्राचीनतरं डोरिक् आयोनिकादि यावनभाषासु लिखितं ग्रन्थमुपलभामहे यत्र इष्टकानिर्माणं तासामुपधानप्रकारश्च वर्णितो वर्त्तते । वतुतस्तु इशा-वीयाब्दस्य काल्पनिकात् प्रवर्त्तनकालात् प्रायः पञ्चाशद्वर्षेभ्यः पूर्वं वित्रुव्युः ( Vitruvius ) नामकेन केनचिद् रोमकेन वास्तुशास्त्रमधिकृत्य ग्रन्थ एको विरचितः । अस्मिंश्च ग्रन्थे तेन षष्ठेऽध्याये प्रायः द्वादशानां यावनवास्तुशिल्पविदाम् उल्लेखः कृतो वर्तते । परं तेषु ग्रन्थेषु केवलं तत्तद्वास्तुशिल्पिभिः कल्पितानां निर्म्मितानाञ्च वास्तूनां वर्णनमेव विद्यत इति तत्रैवोल्लिखितम् । ( द्रष्टव्यम् Greek Science Vol. II P. 120-121 ) एतेन सुस्पष्टमिदं यत् बोधायनादीनाम् आचार्याणां ग्रथरचनायाः पूर्वम् आयोनिक् डोरिक् आदिसंज्ञका ां यवनानां वास्तुशास्त्रीयं सिद्धान्तम् अधिकृत्य नासीत् कोऽपि ग्रन्थ इति । बौधायनशुल्बसूत्रादीनां रचनायाः पश्चादपि प्रायः सप्तशतवर्षपर्यंतं केवलं वास्तुसम्बधि-भूतार्थज्ञापकं वर्णनपरं रचनाजातमेव प्रणीतवन्तो यवना इति ।

यथा तथा वा भवतु बौधायनशुल्बसूत्रादिकन्तु निर्विवादं भारतीयानां प्रतिभायां द्योतकमित्यत्र नास्ति सन्देहलेशोऽपि। एतादृशस्य ग्रन्थस्याध्ययनादिकमपि परमावश्यकम्। सुदुर्लभस्यास्य ग्रन्थस्य प्रकाशनं श्रेयस्करमिति मत्वा संस्कृतविश्वविद्यालयाधिकारिभिरादिष्टोऽभवमस्य ग्रन्थस्य सम्पादनार्थम्। तदर्थं टीकान्तरमन्विष्यता मया शुल्बमीमांसाख्यायाः बौधायनशुल्बसूत्रस्य व्यङ्कटेशदीक्षितविरचितायाः व्याख्यायाः भण्डारकर ओरिएन्टल रिसर्च इन्स्टिट्युट् ग्रन्थालयतः एका प्रतिलिपिरासादिता। इयं प्रतिलिपिस्तावत् प्रायशः शुद्धेति कादाचित्कायाः अशुद्धेः परिमार्जनार्थं मत्कल्पिताः पाठाः बन्धनीमध्यगताः प्रश्नचिह्नयुताः कृताः।

छेद्यकानां प्रतिरूपन्तु कस्यचिदज्ञातस्य पुरुषस्याज्ञया ग्रन्थाकृतितो विपुलं निर्मितमिति चितीनां छेद्यकन्तु प्रतिरूपनिर्माणार्थं प्रदत्तमपि नष्टम्। चक्षुरोगवशात् सूक्ष्मवस्तुनि दृष्टिपातस्य चिकित्सकैः प्रतिषिद्धत्वात् पुनः तन्निर्माणेऽशक्तोऽहमिति पाठकैः क्षन्तव्योऽहम्।

विदुषामनुचरः

**विभूतिभूषणभट्टाचार्यः**

# बौधायनशुल्बसूत्रस्य विषयसूचिका

## द्वितीयाध्याये

## तृतीयाध्याये



—:*:—

श्रीगणेशाय नमः ।

# बौधायनीयं शुल्बसूत्रम्

## टीकाद्वयोपेतम्

### अथ शुल्बमीमांसा

कान्तामुखं सन्ततमन्तिकस्थं यस्यावतंसेन्दुरवेक्ष्यमाणः ।
अवाप कार्श्यं किमु पाण्डुताञ्च ददातु देवः स सदा मुदं वः ॥ १ ॥

यस्याङ्गकान्तिप्रकरात् स्वकीयभासोऽभिभूतिं यदि शङ्कमानः ।
शिरस्पदं शीतमरीचिरागाच्छ्रेयोऽभिवृद्धिं शिव एष दद्यात् ॥ २ ॥

सौवनीलतनुकान्तिसङ्गमाद् इन्दिरामनयदेव कृष्णताम् ।
तत्सुवर्णतनुकान्तिसङ्गतेर्योजयामि हरिमाश्रयामि तम् ॥ ३ ॥

येनेन्दुसूर्यौ नयनीकृतौ किं हिरण्यगर्भस्य सुरक्षणाय ।
स्थितस्य नाभीकमलान्तराले निःश्रेयसायास्तु निरन्तरं सः ॥ ४ ॥

पारावारात् प्रोद्भूते चन्द्रलक्ष्म्यौ याभ्यां शश्वन्मौलिवक्षोविभूषे ।
सर्वैर्लोकैः पूजिते सङ्गृहीते वन्दे देवौ वामदेवाच्युतौ तौ ॥ ५ ॥

अबोधकत्वं निखिलेषु वेदेष्वपास्य ये विष्टपमन्वगृह्णन् ।
सूत्रैर्विचित्रार्थचमत्कृतैस्तान् **बोधायनाचार्य**वरान् भजामः ॥ ६ ॥

भट्टोक्ततन्त्रोद्धरणप्रवीणानद्वैतविद्यापरिपालने च ।
नमामि **गोविन्दमखि**प्रवेकान् भक्त्या मुहुः सम्प्रति तातपादान् ॥ ७ ॥

सर्वेषु तन्त्रेषु समं स्वतन्त्रः **श्रीयज्ञनारायण**दीक्षितेन्द्रः ।
अध्यापयद् यो बहुधानवद्यां विद्यामशेषामनुजं यथावत् ॥ ८ ॥

बोधायनोक्तसूत्रं, बुद्ध्वा बहुशो विचार्य नयरीत्या ।
**श्रीवेङ्कटेश्वरमखी** सुगमां तनोति **शुल्बमीमांसाम्** ॥ ९ ॥

इह खलु भगवान् बोधायनाचार्य अग्निचयान् व्याख्यास्यन् शिष्टाचारपरिप्राप्तमथशब्दोच्चारणं मङ्गलं कुर्वन् शिष्यावधानार्थं वक्ष्यमाणार्थं प्रतिजानीते—

**अथेमेऽग्निचयाः ॥ १ ॥**

**अथेम इति** । अग्नीनां श्येनाद्याकारविशिष्टस्थण्डिलविशेषाणां, चयाश्चयनप्रकाराः प्रदर्श्यन्त इति शेषः ।

ननु चयनशब्दो मन्त्रकरणकेष्टकासाधनकस्थण्डिलनिर्वृत्त्यौपयिकव्यापारविशेषवाची । स च व्यापारो नात्र व्युत्पाद्यते, किन्तु सूत्र एव "पुरुषमात्रेण वेणुना सपक्षपुच्छ[१]" मित्यारभ्य "कार्ष्णाजिनीरुपानह उपमुच्यते[२] । कृषति लाङ्गलं पवीरवं "शुनं नः फला[३]" इति द्वाभ्याम्[४] । अथैतामैन्द्रीमिष्टकामाक्रमणं प्रत्युपदधाति[५] । पूर्वामुपदधाति । दक्षिणे विभक्तिमुपदधाति[६] । मध्ये हिरण्मयं पुरुषमुपदधाति[७] । स्रुचावुपदधाति[८] । अथैता दशस्कन्ध्याः प्राचीरायातयति[९] । अवकामानूपदधाति[१०] । मण्डलेष्टकामुपदधाति[११] । मध्ये प्राणभृत उपदधाति[१२] । संयत उपदधाति[१३]। अथाग्नेरङ्गान्युपदधाति[१४] । अथाग्निं सर्वतोमुखं

---

१. बौ. श्रौ. सू. ( प्रश्न. १०; खं. १६ : अध्या ६ : पृ. १७ )
२. ,, ,, ,, प्र. १०।२३; पृ. २१, १०।३६, पृ. ३७ )
३. ,, ,, ,, ( तै. सं ४. २. ५. १८–१६ )
४. ,, ,, ,, ( प्र. १०।२५; पृ. २४ )
५. ,, ,, ,, ( प्र. १०।२४; पृ. २३ )
६. ,, ,, ,, ( प्र. १०।३६; पृ. ३७. पृ. २३ )
७. ,, ,, ,, ( प्र. १०।३०; पृ. २८ )?
८. ,, ,, ,, ( प्र. १०।३०; पृ. २८ )
९. ,, ,, ,, ( प्र. १०।४०; पृ. ३८ ) १०।३२ पृ. २६
१०. ,, ,, ,, ( प्र. १०।४०; पृ. ३८ ) १०।३२ पृ. २६
११. ,, ,, ,, ( प्र. १०।३१; पृ. २६ )
१२. ,, ,, ,, ( प्र० १०।४०; पृ. ३८ )
१३. ,, ,, ,, ( प्र. १०।३५; पृ. ३२ )
१४. ,, ,, ,, ( प्र. १०।३६; पृ. ३३ )

चिनुते[१५]। अथ प्राजापत्यामुपदधाति[१६]। अथापस्या उपदधाति[१७]। अथैताः पञ्चस्कन्ध्याः प्राचीरायातयति[१८]। अथाश्विनीरुपदधाति "ध्रुवक्षितिर्ध्रुवयोनिरि"ति पञ्च[१९]। अथ वालखिल्या उपदधाति[२०]। अथाक्ष्णाया स्तोमीया उपदधाति[२१]। अथासपत्ना उपदधाति[२२]। अथ द्वाभ्यां शताभ्यां प्रोक्षति। अथाग्निमभिमृशति अग्निरसि वैश्वानरोऽसीत्यादिभिः प्रतिपादितम्। तथा च कथमिह प्रतिज्ञा "अथेमे अग्निचया" इति चेत् ?

सत्यम्; तथाप्यत्र चयशब्देन कल्पसूत्रप्रतिपाद्यमान-मन्त्रकरणकेष्टकासाधनकक्रमविशेषस्थण्डिलनिर्वृत्त्यौपयिकव्यापारात्मकचयनोपयुक्तक्षेत्रविशेषोपधेयेष्टकाकरणश्येनाद्याकारपरिज्ञानोपायभूतो व्यापारो विवक्षितः। स चेहैव व्युत्पाद्यते नान्यत्रेति युक्तैव प्रतिज्ञा।

ननूक्तरीत्या चयनशब्दोपपत्तिः। तथापि ज्वलनवाचिनोऽग्निशब्दस्य कथं श्येनाद्याकारविशिष्टस्थण्डिलविशेषपरत्वमिति चेत्, उच्यते—यद्यपि ज्वलनरूढोऽग्निशब्दः तथापि अग्निसंस्काररचयननिवृत्ते अग्न्याधारस्थण्डिलेऽपि लक्षणया अग्निशब्दः प्रयुज्यते। अत एव नवमे[२३] अग्निशब्दस्य स्थण्डिलविशेषपरत्वमभ्युपगम्य विचारितम्। तथा हि "हिरण्यशकलैरग्निं प्रोक्षतीति[२४]" श्रूयते।

---

१५. बौ. श्रौ. सू. ( प्र. १०।४०; पृ. ९ )
१६. „ „ „ ( प्र. १०।३६; पृ. ३४ )
१७. „ „ „ ( प्र. १०।३५; पृ. ३२ )
१८. „ „ „ ( प्र. १०।३८; पृ. ३५ )
१९. „ „ „ ( प्र. १०।३८; पृ. ३५ ) तै. सं. ४.३.४.१-५
२०. „ „ „ ( प्र. १०।४०; पृ. ३६ )
२१. „ „ „ ( प्र. १०।४२; पृ. ४० )
२२. „ „ „ ( प्र. १०।४५; पृ. ४२ )
२३. पू. मी. ६.१.७।
२४. बौ. श्रौ. सू. ( प्र० १०।४७ )

तत्र सन्देहः किं प्रोक्षणं प्रतीष्टकं कर्त्तव्यम् ? उत सकृदेवेति । तदर्थं किमग्निरवयवीष्टकाव्यतिरिक्तो नास्तीति उतास्तीति । यदि नास्ति तदा इष्टकानामेव संभृतानामग्निशब्दवाच्यत्वात् तासाञ्च संस्कार्याणां बहुत्वात् प्रतिप्रधानं गुणावृत्ति[1]रिति प्रतीष्टकं प्रोक्षणं कर्त्तव्यम् । यद्यन्योऽवयव्यस्ति तदा तस्यैकत्वात् सकृदेव प्रोक्षणं कर्त्तव्यमिति । तत्र देवदत्तघटादौ एकावयवाकर्षणे अवयवान्तराकर्षणदर्शनात् अवयवसन्ध्यदर्शनाच्चास्त्यन्योऽवयवी । इह तु एकेष्टकाकर्षणे अन्यङ्गानाकर्षणात् सन्धिदर्शनाच्च नान्योऽवयवी । यद्यपि पुरीषच्छन्नतया न सन्धिदर्शनं तथाप्यनुमानेनावगम्यते सन्धिरिति नान्योऽवयवी । किञ्च पक्वैरामैश्चावयवैर्नान्योऽवयव्यारभ्यत इति **काश्यपीयै**र्दर्शितत्वाच्च । अतो नान्योऽवयवीति प्रतीष्टकं प्रोक्षणमिति प्राप्तेऽभिधीयते देशकालभेदेऽप्यबाधिता एकत्वबुद्धिरेव हि अवयविसद्भावे प्रमाणम् । सा चेहाप्यस्तीत्यस्त्यवयवी । भागान्तरावकर्षणं वृक्षादावनैकान्तिकं, सन्धिदर्शनञ्च पटादावनैकान्तिकमिति प्रमाणबलात् पक्वामैरप्यवयवैरवयव्यारभ्यत इति तस्यैकत्वात् सकृदेव प्रोक्षणमिति ।

नन्वग्निसंस्कारचयनमेवाप्रसिद्धम्, अस्त्येव चयनविधिः । "य एवं विद्वानग्निं चिनुत" इति ।

ननु तत्र अग्निशब्दो यागनामधेयम् । न च प्रत्यक्षयजेरश्रवणाद् यागनामत्वं नास्तीति वाच्यम् । प्रत्यक्षयज्यश्रवणेऽपि "अग्निं कुर्यादिति तावत्संज्ञयैव कर्मान्तरेऽवधारिते "अथातोऽग्निमग्निष्टोमेनानुयजन्ति यदग्निमनुयजन्ति तदग्निष्टोमेनेति" संस्थाविधिपरैर्वाक्यैर्याजनाग्न्यनुवादात्तावदग्निशब्दो यागवचन इति गम्यते । अस्य वाक्यस्य संस्थाविधायकत्वाभावेऽपि "अग्निमनु अग्निष्टोमेन यजन्ती" त्युक्त्याग्ने-

---

१. मीमांसान्यायः ।

र्यागत्वमवगम्यते । यथा देवदत्तमनुगच्छति यज्ञदत्त इत्युक्ते देवदत्तोऽपि गच्छतीति गम्यते । एवमिहाप्यनुयाजनवशादेवाग्नेर्यागत्वमवगम्यत इति ।

चयनम् अप्रमाणकमिति चेत्, अत्राभिधीयते—अग्निशब्दस्य वह्नौ रूढत्वाद् यागवाचित्वं नोपपद्यते । न चात्र "चित्रया यजेत पशुकामः" "आज्यैः स्तुवत" इत्यादाविव वाक्यभेदः । नापि "समिधो यजती"त्यादाविव तत्प्रख्यत्वम् । न वा "श्येनेनाभिचरन् यजेते"त्यादाविव तद्व्यपदेशोऽस्ति येन नामत्वं स्यात् । तस्माज्ज्वलनरूपस्याग्नेरेव संस्कारो विधीयते । तस्य च क्रतुसम्बन्धबोधकानि "अथातोऽग्नि"मित्यादीनि ।

न चाग्निष्टोमादीनाम् अग्निपश्चाद्भावमात्रप्रतीतेः कथं ततः संस्कारस्य क्रतुसम्बन्धसिद्धिरिति वाच्यम्? प्रकरणात्, अग्निशब्दस्य चयनसंस्कारविशिष्टाग्निपरतया तत्संबन्धे बोध्यमाने विशेष्यभूताग्निसम्बन्धस्य यदाहवनीयवाक्येनैव सिद्धतया लोहितोष्णीषादिवद् विशेषणीभूतसंस्कारसम्बन्धविधिपरत्वस्यावश्यं भावात् । अत एवाग्निशब्दस्य द्रव्यवचनतयाऽनुशब्दस्य क्रियापश्चाद्भावप्रतिपादकस्यानुपपत्तिरित्यपास्तम् । उक्तरीत्याग्निशब्दस्य चयनपरत्वाग्निपरत्वे विशेषणीभूतचयनक्रियापेक्षया पश्चाद्भावप्रतिपादकत्वोपपत्तेः । तदयमत्र "अथातोऽग्नि" मित्यादिवाक्यस्य निर्गलितोऽर्थः । चयननिर्वृत्तस्थण्डिलस्थापनसंस्कृतेऽग्नावग्निष्टोमादिभिर्यजेतेति ।

न च तुल्यरूपाणामेव पौर्वापर्यनियमः । पाकमनुभुङ्क्त इति विजातीयानामपि तद्दर्शनात् । तस्मादस्त्यग्नेश्चयनलक्षणः संस्कारः क्रत्वङ्गभूत इति तन्निरूपणप्रतिज्ञोपपन्नैवेति ।

नन्वेवमपीयं प्रतिज्ञाऽनुपपन्ना । यतो "अथेमे अग्निचया" इति अग्निचयनप्रदर्शनं प्रतिज्ञाय चतुरस्रपरिमण्डलादिकरणमादावुच्यते । न च चतुरस्रादीनामग्निचयनोपयोगितया नासंगतिरिति वाच्यम् । तस्य वेद्यादिसाधारणत्वेन वेद्या अपि प्रतिपादनस्यादौ प्रतिज्ञाप्रसङ्गात् । अग्निचयनस्य वेद्युत्तरमेव प्रतिपादनेन तत्प्रतिज्ञायाश्चैवोचितत्वा-

दिति चेन्न। इहाग्निप्रतिपादनस्यैव भूयस्तया प्राधान्यात्तदानुषङ्गिका-नामन्येषामपि पूर्वं प्रतिपादनेऽपि न तेषामिह प्रतिज्ञा। यथा **जैमिनिना** कृत्स्नवेदस्य धर्मे प्रामाण्येऽपि चोदनायाः प्राधान्यात् "चोदनालक्षणोऽर्थो धर्मः" इति निर्देशः कृतः।

नन्वर्थवादादीनां सिद्धबोधकत्वेनाप्रामाण्यादेव चोदनाया एव प्रामाण्यमुक्तम्, न तु प्राधान्यादिति चेन्न। "स्वाध्यायोऽध्येतव्य" इत्य-ध्ययनविधेः कृत्स्नस्वाध्यायाध्ययनविधायिनः प्रयोजनवदर्थपरतामन्त-रेणानुपपत्तेः। अर्थवादादीनामपि विधिवाक्यैकवाक्यतया धर्मप्रमितिजन-कत्वेन प्रामाण्यस्यार्थवादाधिकरणे व्युत्पादितत्वात्। यथा वा प्रमाणादि-षोडशपदार्थप्रतिपादकस्यापि शास्त्रस्यानुमानप्रधानत्वादनुमानवाचकन्यायप-देनैव न्यायशास्त्रमिति व्यपदेशः। यथा लोके मल्लप्रचुरे ग्रामे मल्लग्राम इति व्यवहारः॥ १॥

अथ शुल्बदीपिका

बौधायनीयशुल्बस्य प्रव्याख्याः प्रेक्ष्य यज्वना।
टीका भट्टात्मजेनेयं क्रियते शुल्बदीपिका॥

अथेति। अथ गृह्यानन्तरम्। अग्निचयग्रहणं वेद्या अप्युपलक्षणार्थम्॥ १॥

**तेषां भूमेः परिमाणविहारान् व्याख्यास्यामः॥ २॥**

**तेषामिति**। तेषामग्नीनाम्। भूमेः क्षेत्रस्य। परिमाणविहारान् परिमाणानि विहाराश्च परिमाणविहारा इति इतरेतरयोगे द्वन्द्वः। परि-माणशब्देन अङ्गुल-क्षुद्रपद-प्रादेशादीनां ग्रहणम्। विहारशब्देन भूमे-श्चतुरस्रादिरूपेण करणस्य ग्रहणम्॥ २॥

तेषामिति। परिमाणविशेषान् विहारान्। विहरणं नाम चतुरस्रादिरूपेण भूमेः करणम्॥ २॥

**अथाङ्गुलप्रमाणं चतुर्दशाणवः॥ ३॥**

अङ्गुलस्य सर्वशेषित्वादादौ तद्दर्शयति **अथाङ्गुलेति**। अणवो धान्य-विशेषा अन्योन्यदीर्घाकारसंश्लिष्टाश्चतुर्दश अङ्गुलप्रमाणं अङ्गुल्याख्यं प्रमाणं वेदितव्यम्॥ ३॥

अथेति। सर्वप्रमाणशेषत्वादङ्गुलप्रमाणमुच्यत इति शेषः। चतुर्दशेति। अणुर्धान्यविशेषः। परस्परसंश्लिष्टाश्चतुर्दशाणवो यावत्प्रमाणं तावदङ्गुलप्रमाणमित्यर्थः॥ ३॥

**चतुस्त्रिंशत्तिलाः पृथुसंश्लिष्टा इत्यपरम्॥ ४॥**

**चतुस्त्रिंशदिति**। कोशे यथावत् स्थितास्तथा संश्लिष्टा ( चतुस्त्रिंशत् तिलाः ) अङ्गुलप्रमाणमित्यपरं मतमित्यर्थः॥ ४॥

चतुस्त्रिंशदिति। कोशसंस्थानवत् पृथुप्रदेशेन संश्लिष्टाश्चतुस्त्रिंशत्तिला अङ्गुलप्रमाणमित्यपरं मतम्॥ ४॥

**दशाङ्गुलं क्षुद्रपदम्॥ ५॥**

**दशाङ्गुलमिति**। दशानामङ्गुलानां समाहारो दशाङ्गुलम्। पात्रादित्वान्न ङीप्। ( दशाङ्गुलं ? ) "द्वादशप्रत्यञ्चि क्षुद्रपदानि ( बौ. श्रौ सू. ६।२२ ) इत्यादिषु ( दशाङ्गुलं ) क्षुद्रपदमिति वेदितव्यमित्यर्थः॥ ५॥

दशेति। द्वादश प्रत्यञ्चि क्षुद्रपदानि ( बौ० श्रौ० सू० ६।२२ ) इत्येवमादिषु दशाङ्गुलं क्षुद्रपदं विद्यात्॥ ५॥

**द्वादश प्रादेशः॥ ६॥**

**द्वादश इति**। "तमवस्ताद् प्रादेशेन वर्धयेत्" ( बौ. शु. सू. ३।१० ) इत्यादिषु द्वादशाङ्गुलम् इति पूर्ववत्समाहारः। ( तत् ? ) प्रादेशमिति वेदितव्यमित्यर्थः॥ ६॥

द्वादशेति। तमवस्तात् प्रादेशेन वर्धयेत् ( बौ० शु० सू० ३।१०। ) इत्येवमादिषु द्वादशाङ्गुलः प्रादेश इति विद्यात्॥ ६॥

**पृथोत्तरयुगे त्रयोदशिके॥ ७॥**

**पृथोत्तरेति**। "पृथमात्राद् वेदी तु असंभिन्ने भवत" ( बौ. श्रौ. सू. ५।५ ) उत्तरयुगेनोत्तरनाभिः" ( बौ. श्रौ. सू. २०।२५ ) इत्यादिषु पृथम् उत्तरयुगञ्च त्रयोदशिके। अतइनिठनाविति मत्वर्थष्ठन् प्रत्ययः। पृथोत्तरयुगे त्रयोदशाङ्गुल्युक्ते वेदितव्येत्यर्थः॥ ७॥

पृथोत्तरेति। "पृथमात्राद् वेदी असंभिन्ने भवत" "उत्तरयुगेनोत्तरनाभिः"(बौ० श्रौ० सू० ५।५,२०।२५ ) इत्यादिषु त्रयोदशाङ्गुलप्रमाणे पृथोत्तरयुगे विद्यात्॥ ७॥

## पदं पञ्चदश ॥ ८ ॥

**पदमिति** । "त्रिशत्पदानि पश्चात्" ( बौ. शु. सू. १।६९ ) इत्यादिषु पञ्चदशाङ्गुलानि पदमिति वेदितव्यम् ॥ ८ ॥

पदमिति । त्रिंशत् पदानि ( बौ० शु० सू० १।६९ ) इत्यादिषु पञ्चदशाङ्गुलप्रमाणं पदं विद्यात् । क्षुद्रपदादीनां पदान्तानां क्रमविध्युपादानात् परस्परसंबन्धः ॥ ८ ॥

## अष्टाशीतिशतमीषा ॥ ९ ॥

**अष्टाशीतीति** । "अन्तरेणेषे तिष्ठन् पलाशशाखां धारयन्" ( बौ. श्रौ. सू. ३०।४ ) इत्यादिषु अष्टाशीत्यधिकं शतमङ्गुलानि ईषेति वेदितव्यम् ॥ ९ ॥

अष्टाशीतीति । रथसंमितेत्येकेषाम् ( बौ० शु० सू० १।६१ सू० ) इत्यादिषु ईषाप्रमाणमष्टाशीतिशताङ्गुलप्रमाणं विद्यात् ॥ ९ ॥

## चतुःशतमक्षः ॥ १० ॥

**चतुःशतमिति** । "रथाक्षान्तराला यूपावटा भवन्ति" ( बौ. शु. सू. १।७९) इत्यादिषु चतुरधिकशताङ्गुलानि (अक्ष इति वेदितव्यम् ?) ॥१०॥

चतुरिति । तत्रैव रथाक्षान्तराला यूपावटा भवन्ति ( बौ० शु० सू० १।७९ ) इत्येवमादिषु चतुरधिकशताङ्गुलमक्षप्रमाणं विद्यात् ॥ १० ॥

## षडशीतिर्युगम् ॥ ११ ॥

**षडशीतीति** । "विपथयुगेन पुरस्तात्" ( बौ. श्रौ. सू. २०।२५ ) इत्यादिषु षडशीत्यङ्गुलं युगमिति विद्यात् ॥ ११ ॥

षडेति । तत्रैव षडधिकाशीतिप्रमाणं युगं विद्यात् । ईषादीनां रथावयवापेक्षया संगतिः ॥ ११ ॥

## द्वात्रिंशज्जानुः ॥ १२ ॥

**द्वात्रिंशेति** । "ऊर्ध्वप्रमाणमिष्टकानां जानोः पञ्चमेन कारयेत्" ( बौ. शु. सू. २।६ ) इत्यादिषु द्वात्रिंशदङ्गुलानि जानुरिति विद्यात् ॥ १२ ॥

द्वात्रिंशेति । ऊर्ध्वप्रमाणाभ्यासं जानोः पञ्चमस्य ( बौ० शु० सू० २।६ ) इत्यादिषु द्वात्रिंशदङ्गुलप्रमाणं जानोः प्रमाणं भवति ॥ १२ ॥

षट्त्रिंशच्छम्याबाहू ॥ १३ ॥

**षट्त्रिंशदिति ।** "शम्यामात्री चतुःस्रक्तिर्भवति" ( बौ. शु. सू. ३।३ ) प्राञ्चं बाहुं मित्वा लोके न्यस्य गर्त्तं खानति" (बौ. श्रौ. सू. १ ) इत्यादिषु । शम्या च बाहुरिति इतरेतरयोगे द्वन्द्वः । षट्त्रिंशदङ्गुलानि शम्याबाहू वेदितव्याविति ॥ १३ ॥

षट्त्रिंशेति । "शम्यामात्री चतुःस्रक्तिर्भवति" ( बौ० शु० सू० ) "तस्माद् बाहुमात्राः" खायन्ते ( बौ० श्रौ० सू० ? ) इत्यादिषु षट्त्रिंशदङ्गुलप्रमाणे शम्याबाहू विद्यात् ॥ १३ ॥

द्विपदः प्रक्रमः ॥ १४ ॥

**द्विपद इति ।** "प्राग्वंशः षोडशप्रक्रमायामः" ( बौ. शु. सू. १।६८ ) इत्यादिषु । द्वे पदे यस्य सः द्विपदः । द्वे पदे प्रक्रम इति वेदितव्य-मित्यर्थः ॥ १४ ॥

द्विपद इति । प्राग्वंशः षोडशप्रक्रमायामः ( बौ० शु० सू० १।६८ ) इत्यादिषु प्रक्रमप्रमाणं द्विपदं विद्यात् ॥ १४ ॥

द्वौ प्रादेशावरत्निः ॥ १५ ॥

**द्वौ प्रादेशाविति ।** "द्वावित्यरत्निना पक्षौ द्राघीयांसौ ( बौ. श्रौ. सू. १०।१९ ) इत्यादिषु द्वौ प्रादेशावरत्निरिति वेदितव्यम् ॥ १५ ॥

द्वाविति । उदक् सप्तविंशत्यरत्नयः ( बौ० शु० सू० १।१३० ) इत्यादिषु द्वौ प्रादेशावरत्निरिति विद्यात् । एतेषामपि परस्परसंबन्धोऽन्वेषणीयः ॥ १५ ॥

अथाप्युदाहरन्ति—पदे युगे प्रक्रमेऽरत्नावियति शम्यायाश्च मानार्थेषु याथाकामीति ॥ १६ ॥

**अथाप्युदाहरन्तीति ।** एके आचार्याः मानार्थेषु चोदितेषु पदा-दिषु याथाकामीति । प्रक्रमचोदनायां पदं, शम्याचोदनायामरत्निमित्यादि, यथेच्छं गृह्णीयादिति । सर्वप्रमाणेषु विकल्पो द्रष्टव्य इति ।

यद्वा पदादिप्रमाणे बहुविधानि शास्त्राणि दृश्यन्ते । द्विपदः प्रक्रम इति अस्मदाचार्याः । द्विपदस्त्रिपदो वा प्रक्रम इत्यापस्तम्बाचार्याः ।

तत्र "प्राग्वंशः षोडशप्रक्रमायाम" ( बौ. शु. सू. ) इत्यत्र द्विपदस्त्रिपदो वा प्रक्रमो ग्राह्यः । एवं पदादिषु । तथा च प्रक्रमादिशब्दार्थानामेव मिथो विकल्प इत्यर्थः ॥ १६ ॥

अथेति । पक्षान्तरमिदम् । अत्र कात्यायनः "द्वादशाङ्गुलं पदं चत्वारोऽष्टकाः शम्येति" च ( का० शु० ) । आपस्तम्बः "प्रक्रमो द्विपदस्त्रिपदो वेति" ( आप० शु० ) । पदादिषु मानार्थेषु चोदितेषु लोकसिद्धैः शास्त्रान्तरोक्तैश्च विकल्पन्ते । तत्रापस्तम्बः "यजमानस्याध्वर्योर्वैष हि चेष्टानां कर्त्ता भवति" इति ॥ १६ ॥

**पञ्चारत्निः पुरुषः ॥ १७ ॥**

**पञ्चारत्निः पुरुष इति ।** पञ्च अरत्नयो यस्य सः पञ्चारत्निः पुरुष इत्यर्थः । "पुरुषमात्रेण वेणुना विमिमीत" ( बौ. श्रौ. सू. १०।१९ ) इत्यादिषु पञ्चारत्निः प्रमाणं पुरुष इति वेदितव्यम् ॥ १७ ॥

पञ्चेति । "पुरुषमात्रेण विमिमीते" इत्यादिषु पञ्चारत्निं पुरुषं विद्यात् ॥ १७ ॥

**व्यामश्च ॥ १८ ॥**

**व्यामेति ।** "व्याममात्रौ पक्षौ" ( बौ. शु. सू. २।२० ) इत्यादिषु पञ्चारत्निप्रमाणो व्याम इति वेदितव्यम् ॥ १८ ॥

व्यामेति । व्याममात्रौ पक्षौ ( बौ० शु० सू० २।२० ) इत्यादिषु व्यामश्च पञ्चारत्निः ॥ १८ ॥

**चतुररत्निर्व्यायामः ॥ १९ ॥**

**चतुररत्निरिति ।** चत्वारोऽरत्नयो यस्य सः । "व्यायाममात्री भवतीति गार्हपत्यचितेर्विज्ञायते" ( बौ. शु. सू. २।६० ) इत्यादिषु चतुररत्निप्रमाणो व्यायाम इति वेदितव्यम् ॥ १९ ॥

चतुरिति । "व्यायाममात्री भवतीति गार्हपत्यचितेः" ( बौ० शु० सू० २।६० ) इत्यादिषु चतुररत्निर्व्यायामः ॥ १९ ॥

[ इति रेखामानपरिभाषा ]

**चतुरश्रं चिकीर्षन् यावच्चिकीर्षेत् तावतीं रज्जुमुभयतःपाशां कृत्वा मध्ये लक्षणं करोति ॥ २० ॥**

अग्न्याहवनीयादिकरणोपयुक्तत्वेन प्रथमं चतुरस्रकरणप्रकारमाह—

**चतुरस्रमिति**। चतुरस्रं चिकीर्षन् यावच्चिकीर्षेत् यावत् प्रमाणं चतुरस्रं कर्त्तुमिच्छेत् तावतीं रज्जुमभिलषितसमचतुरस्रस्य पार्श्वकरण्या समामेकां रज्जुं संपाद्य तामुभयतःपाशां शङ्क्वादिप्रवेशानुकूल-ग्रन्थिद्वययुक्तां कृत्वा, ग्रन्थ्योरन्तरालम् उक्तप्रमाणं यथा भवति तथा कृत्वेत्यर्थः। तस्या रज्जोर्मध्ये लक्षणं चिह्नं करोतीत्यर्थः॥ २०॥

चतुरश्रमिति। प्राचीज्ञानोपायाः कर्मान्त उक्ताः। "कृत्तिकाः खल्विमाः प्राचीं दिशं न परिजहति। तासां संदर्शनेन मापयेदित्येतदेकं, श्रोणासंदर्शनेन मापयेदि-त्येतदेकं, चित्रास्वात्योरन्तरालेन मापयेदित्येतदपरमिति ( बौ० श्रौ० सू० कर्मान्त० २५।५ पृ० २३३ पं० ३ )। एतानि लक्षणानि देशविशेषेषु व्यवतिष्ठन्ते। सर्वदेश-साधारणं कात्यायन आह—"समे शङ्कुं निखाय शङ्कुसम्मितया रज्ज्वा मण्डलं परिलिख्य यत्र लेखयोः शङ्क्वग्रच्छाया निपतति सा प्राचीति"। लेखयोरिति मण्डललेखयोरित्यर्थः।

षडङ्गुलपरीणाहं द्वादशाङ्गुलमुच्छ्रितम्।
जठरं चाव्रणं चैव शङ्कुं कुर्याद् विशेषतः॥

एकतः क्ष्णुदृजुस्तीक्ष्णः खादिरः सम आयतः।
शङ्कुः समशिराः कार्यस्तस्याधं गमयेन्महीम्॥

इति शङ्कुलक्षणम्॥ २०॥

**लेखामालिख्य तस्या मध्ये शङ्कुं निहन्यात्। तस्मिन् पाशौ प्रतिमुच्य लक्षणेन मण्डलं परिलिखेत्। विष्कम्भान्तयोः शङ्कू निहन्यात्॥ २१॥**

**लेखामिति**। तां रज्जुं प्राक् प्रत्यक् दीर्घां निधाय अनुरज्जु रेखा-मालिखेत्। तस्या मध्यचिह्नप्रदेशे एकं शङ्कुं निहन्यात्। तस्मिन् शङ्कौ पाशौ प्रतिमुच्य ग्रन्थ्यन्तरालद्वयं शङ्कौ प्रवेश्य लक्षणेन चिह्नेन मण्डलं परिलिखेद्। विष्कम्भान्तयोः शङ्कू निहन्यात् दीर्घरेखा-मण्डलरेखयोः सन्ध्योः शङ्कुद्वयं निहन्यात्॥ २१॥

विष्कम्भेति। पूर्वापरीभूता लेखा विष्कम्भः। तस्या मण्डलसंगमो विष्क-म्भान्तः॥ २१॥

**पूर्वस्मिन् पाशं प्रतिमुच्य पाशेन मण्डलं परिलिखेदेवमपरस्मिन्। ते यत्र समेयातां तेन द्वितीयं विष्कम्भमायच्छेत्। विष्कम्भान्तयोः शङ्कू निहन्यात् ॥ २२ ॥**

**पूर्वस्मिन्निति।** पूर्वस्मिन् प्राच्ये शङ्कौ पाशमेकं प्रतिमुच्य पाशेन मण्डलं परिलिखेत्। **एवमिति।** एवमपरस्मिन् शङ्कावपि मण्डलं परिलिखेत्। ते मण्डले यत्र समेयातां संयुज्येते तेन सन्धिना द्वितीयं विष्कम्भमायच्छेत् कुर्यात्। **विष्कम्भान्तयोरिति।** विष्कम्भान्तयोर्दक्षिणोत्तरपार्श्वयोः शङ्कुद्वयं निहन्यात्। आहत्य पञ्च शङ्कवो निखाताः ॥ २२ ॥

अथ दक्षिणोत्तरदिग्ज्ञानार्थमाह। पूर्वस्मिन्निति। पाशो रज्ज्वन्तः प्रतिमोचनसमर्थः। तेन द्वितीयमिति। मत्स्यमुखपुच्छानुसारेण लेखां कुर्यादित्यर्थः। विष्कम्भान्तयोरिति। दक्षिणोत्तरलेखायाः प्रथममण्डलस्य च संगमो विष्कम्भान्तः ॥ २२ ॥

**पूर्वस्मिन् पाशौ प्रतिमुच्य लक्षणेन मण्डलं परिलिखेदेवं दक्षिणत एवं पश्चादेवमुत्तरतस्तेषां येऽन्त्याः संसर्गास्तच्चतुरश्रं संपद्यते ॥ २३ ॥**

**पूर्वस्मिन्निति।** तेषु पूर्वस्मिन् शङ्कौ पाशौ प्रतिमुच्य लक्षणेन चिह्नेन मण्डलं परिलिखेत्।

**एवमिति।** एवं दक्षिणे प्रतीच्ये उत्तरे शङ्कौ पाशं प्रतिमुच्येत्। चिह्नेन मण्डलानि परिलिखेत्। तेषां मण्डलानां येऽन्त्याः संसर्गाः अवान्तरदिक्षु संयोगाः तेष्वपि शङ्कून् निहन्यात्। तेषामष्टानां शङ्कूनां मध्यप्रदेशश्चतुरश्रक्षेत्रं सम्पद्यत इत्यर्थः ॥ २३ ॥

अथ कोणदिक्परिज्ञानोपायार्थमाह। पूर्वस्मिन्निति। इत उत्तरं मध्यममण्डलचिह्नानि लक्ष्यीकृत्योच्यते। एवमिति। तेषामिति। अन्त्या इति अवान्तरदिक्षु ॥२३॥

**अथापरम्—प्रमाणाद् द्विगुणां रज्जुमुभयतःपाशां कृत्वा मध्ये लक्षणं करोति स प्राच्यर्थः ॥ २४ ॥**

समचतुरश्रकरणे प्रकारान्तरमाह—**अथापरमिति।** करणमिति

शेषः। **प्रमाणादिति**। अभिमतचतुरश्रस्य पार्श्वमानीप्रमाणकात् द्वादशाङ्गुलादिकात् द्विगुणांश्चतुर्विंशत्यङ्गुलायतां रज्जुमुभयतःपाशां कृत्वा द्वादशाङ्गुले लक्षणं चिह्नं करोति। **स इति**। स रज्जुखण्डः प्राच्यर्थः प्राक्पार्श्वमानी परिज्ञानार्थः ॥ २४ ॥

उपायान्तरमाह। अथापरमिति। करणमिति शेषः। प्रमाणादिति। द्वादशाङ्गुलप्रमाणां द्विगुणां चतुर्विंशत्यङ्गुलप्रमाणां रज्जुमुभयतःपाशां कृत्वा मध्ये लक्षणं करोति। प्राच्यर्थ इति। प्राच्यर्थः पार्श्वमानीपरिज्ञानार्थः खण्डः ॥ २४ ॥

**अपरस्मिन्नर्धे चतुर्भागोने लक्षणं करोति तन्न्यञ्छनम् ॥ २५ ॥**

**अपरस्मिन्निति**। पूर्वकृतलक्षणसमीपे चतुर्भागेन अङ्गुलेन ऊने लक्षणं करोति। आदित आरभ्य पञ्चदशाङ्गुले चिह्नं करोतीति यावत्। **तन्न्यञ्छनमिति**। तिर्यक्-दीर्घपरिज्ञानोपायः ॥ २५ ॥

अपरस्मिन्निति। उपरिक्षिप्तद्वादशाङ्गुले अर्धचतुर्भागोने त्र्यङ्गुलेऽतीते आदित आरभ्य पञ्चदशाङ्गुल इति यावत्। न्यञ्छनमिति। अपसारकम् ॥ २५ ॥

**अर्धेंऽसार्थम् ॥ २६ ॥**

**अर्धेंऽसार्थमिति**। अपरस्य द्वादशाङ्गुलस्यार्धे षडङ्गुले आदित आरभ्याष्टादशाङ्गुल इति यावत्। अंसार्थं चिह्नं करोति। अंसग्रहणं श्रोण्योरप्युपलक्षणम् ॥ २६ ॥

अर्धेंइति। आदितोऽष्टादशाङ्गुलेंऽसार्थम् ॥ २६ ॥

**पृष्ठ्यान्तयोः पाशौ प्रतिमुच्य न्यञ्छनेन दक्षिणापायम्यार्धेन श्रोण्यंसान्निर्हरेत् ॥ २७ ॥**

एवं चिह्नकरणमप्युक्त्वा विहरणप्रकारमाह—**पृष्ठ्यान्तयोरिति**। पृष्ठ्यान्तयोः अभिमतचतुरश्रमध्यप्रदेशपूर्वापरान्तयोः शङ्कू निहत्य तत्र पाशौ प्रतिमुच्य न्यञ्छनेन दक्षिणापायम्य न्यञ्छनं गृहीत्वा दक्षिणतो विकृष्य अर्धेन श्रोण्यंसान्निर्हरेत्। षडङ्गुलेन कृतेन चिह्नेन श्रोण्यौ च

अंसौ च कुर्यात्। यथा दक्षिणश्रोण्यंसौ कुर्यात् एवमुत्तरापायमनेन उत्तरौ श्रोण्यंसौ कुर्यात् । तथा च श्रोणीद्वयमंसद्वयं च कृत्वा समचतुरस्रं कुर्यादिति समचतुरस्रकरणे प्रकारद्वयम् ॥ २७ ॥

पृष्ठ्येति । अभीष्टक्षेत्रायामसंमिता सर्वमानेषूभयतःपाशा प्राची । पूर्वापरयोः शङ्कोर्निहिता भवति । सैव मध्ये भवतीति पृष्ठ्या । संप्रसार्य षडङ्गुलेन श्रोण्यंसान्निहरेत् कुर्यात् । एतत्करणद्वयं समचतुरस्रविषयम् ॥ २७ ॥

[ इति समचतुरश्रकरणोपायः । ]

**दीर्घचतुरश्रं चिकीर्षन् यावच्चिकीर्षेत् तावत्यां भूमौ द्वौ शङ्कू निहन्यात् । द्वौ द्वावेकैकमभितः समौ ॥ २८ ॥**

**दीर्घचतुरश्रमिति** । अभिलषितदीर्घचतुरश्रायां भूम्यां प्राक्पश्चिमान्तयोः शङ्कुद्वयं निहन्यात् । **द्वौ द्वाविति** । प्राङ् निखातस्य शङ्कुद्वयस्य प्राग्भागपश्चिमभागेषु समान्तरालौ द्वौ द्वौ । **एकैकमभित इति** । प्रत्येकैकस्य शङ्कोः पार्श्वद्वये शङ्कुद्वयं निहन्यात् । "अभितः परितः समया निकषा हा प्रति योगेष्वि"ति षष्ठ्यर्थे द्वितीया । आहत्य पृष्ठ्यान्तयोः प्रत्येकं शङ्कुत्रयं निखातं भवति ॥ २८ ॥

भूमाविति । अभीष्टक्षेत्रायामपृष्ठ्यान्तयोः । अभित इति । अभितः पश्चात् पुरस्ताच्च समान्तरालौ ॥ २८ ॥

**यावती तिर्यङ्मानी तावतीं रज्जुमुभयतःपाशां कृत्वा मध्ये लक्षणं करोति । पूर्वेषामन्त्ययोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे लक्षणं करोति ॥ २९ ॥**

**यावतीति** । अभिलषितदीर्घचतुरश्रस्य दक्षिणोत्तरयोः पार्श्वयोर्मानहेतुरज्जुर्यावती द्वादशाङ्गुलाद्यात्मिका तावतीमुभयतःपाशां कृत्वा मध्ये लक्षणं करोति । **पूर्वेषामिति** । पूर्वेषां प्राच्यानां शङ्कूनां मध्ये अन्त्ययोः प्राक्पश्चात् स्थितयोः शङ्कोः पाशौ प्रतिमुच्य

लक्षणेन दक्षिणापायम्य लक्षणं गृहीत्वा दक्षिणभागे विकृष्य लक्षणे लक्षण-सङ्गतप्रदेशे लक्षणं करोति चिह्नं करोति ॥ २९ ॥

पूर्वेषामिति । पृष्ठ्यान्त्ययोस्त्रयस्त्रयः शङ्कवः । अन्त्ययोः त्रयाणां पाश्चात्यपौरस्त्ययोः ॥ २९ ॥

**मध्यमे पाशौ प्रतिमुच्य लक्षणस्योपरिष्टाद् दक्षिणापायम्य लक्षणे शङ्कुं निहन्यात् । सोंऽसः । एतेनोत्तरोंऽसो व्याख्यातस्तथा श्रोणी ॥ ३० ॥**

**मध्यम इति** । अथ तेषामेव मध्यमे शङ्कौ पाशौ प्रतिमुच्य लक्षणस्य पूर्वकृतस्योपरिष्टाद् दक्षिणापायम्य लक्षणसङ्गतप्रदेशे शङ्कुं निहन्यात् । **सोंऽस इति** । एवं चिह्नतो दक्षिणोंऽसो भवति । **एतेनेति** । एतेनोत्तरापायम्य उत्तरमंसं कुर्यात् । **तथेति** । तथा श्रोणी पाश्चात्येषु उक्तरीत्या श्रोणीद्वयं कुर्यादित्यर्थः ॥ ३० ॥

मध्यम इति । उपरिष्टात् समीपेन ॥ ३० ॥

[ इति दीर्घचतुरश्रकरणोपायः । ]

**यत्र पुरस्तादंहीयसीं मिनुयात् तत्र तदर्धे लक्षणं करोति ॥ ३१ ॥**

एकतोऽणिमद्दीर्घचतुरश्रप्रकारमाह—**यत्रेति** । पुरस्तात् प्राग्भागे अंहीयसीं अल्पीयसीमित्यतः पश्चाद् भागे बृहतीं भूमिं मिनुयात् । तत्र तदर्धे अणिमत्प्रदेशतिर्यङ्मान्या मध्ये लक्षणं करोति । शेषं पूर्ववत् । तथाच अंसार्थमेका रज्जुः, श्रोण्यर्थमपरा रज्जुरिति रज्जुद्वयं भवति ॥ ३१ ॥

यत्रेति । यत्र अंहीयसीमेकतोऽणिमत् चिकीर्षति । तदर्धे चिकीर्षिताणिमत् तिर्यङ्मान्यर्धे ॥ ३१ ॥

[ इति एकतोऽणिमद्दीर्घचतुरश्रकरणोपायः । ]

**अथापरम्—प्रमाणादध्यर्धां रज्जुमुभयतःपाशां कृत्वापरस्मिंस्तृतीये षड्भागोने लक्षणं करोति तन्न्यञ्छनमिष्टेंऽसार्थम् ॥ ३२ ॥**

दीर्घचतुरस्रकरणे एकतोऽणिमद्दीर्घचतुरस्रकरणे च प्रकारान्तरमाह—**अथापरमिति** । **प्रमाणादिति** । प्रमाणादभिलषितात् अपरस्मिन् अधिकतया संयोजिते तृतीयांशे षष्ठेन एकाङ्गुलेन ऊने आदित आरभ्य त्रयोदशाङ्गुल इति यावत् लक्षणं करोति ।

**तन्न्यञ्छनमिति** । अपसारकम् । **इष्ट इति** । इष्टे अभिलषित-प्रदेशे । अंसार्थमिति उपलक्षणम् । स श्रोण्यर्थ्या अपि ॥ ३२ ॥

प्रमाणादिति । द्वादशाङ्गुले षडङ्गुलं प्रक्षिप्य पञ्चाङ्गुले लक्षणम् । न्यञ्छनमिति । अपसारकम् ॥ ३२ ॥

**पृष्ठ्यान्तयोः पाशौ प्रतिमुच्य न्यञ्छनेन दक्षिणापायम्येष्टेन श्रोण्यंसान्निर्हरेत् ॥ ३३ ॥**

**पृष्ठ्यान्तयोरिति** । **निर्हरेदिति** । उत्पादयेत् । अत्र च द्वादशाङ्गुला पार्श्वमानी न्यञ्छनेन आकर्षणे अक्ष्णया रज्जुस्त्रयोदशाङ्गुला । अवशिष्टा तिर्यङ्मानी पञ्चाङ्गुला । तत्र चतुरङ्गुले कृतेन चिह्नेन श्रोण्युत्पादनेन, त्र्यङ्गुले कृतेन ( चिह्नेन वा ) एकतोऽणिमद्दीर्घचतुरस्रं भवति । उभयत्रापि तुल्येन निष्पादने समतिर्यङ्मानीकं दीर्घचतुरस्रं भवति ॥ ३३ ॥

पृष्ठ्यान्तयोरिति । पञ्चाङ्गुला तिर्यङ्मानी त्रयोदशाङ्गुलाक्ष्णया रज्जुः द्वादशाङ्गुला पार्श्वमानी । इष्टेन इष्टप्रमाणकृतलक्षणेन । निर्हरेत् उत्पादयेत् ॥ ३३ ॥

[ इति प्रकारान्तरेण दीर्घचतुरश्रैकतोऽणिमद्दीर्घचतुरश्रकरणोपायः । ]

**समचतुरश्रस्याक्ष्णयारज्जुर्द्विस्तावतीं भूमिं करोति ॥ ३४ ॥**

अथ द्विकरणीमाह—**समचतुरश्रस्येति** । समचतुरश्रस्य चतुरश्रीकृतस्य क्षेत्रस्य अक्ष्णया रज्ज्वा पार्श्वमान्या तयैव च तिर्यङ्मान्या मितं क्षेत्रं पूर्वचतुरश्रक्षेत्राद् द्विगुणं समचतुरस्रं क्षेत्रं सम्पद्यते ॥ ३४ ॥

अथ द्विकरणीमाह—समचतुरश्रेति । कर्णरज्ज्वा समचतुरस्रे कृते प्रमाणक्षेत्राद् द्विगुणं भवति ॥ ३४ ॥

[ इति द्विकरण्यानयनम् । ]

**प्रमाणं तिर्यग् द्विकरण्यायामस्तस्याक्ष्णयारज्जुस्त्रिकरणी ॥३५॥**

अथ त्रिकरणीमाह—**प्रमाणमिति** । प्रमाणमभिमतद्वादशाङ्गुलं तिर्यङ्मानीं कृत्वा पूर्वोक्तां द्विकरणीं रज्जुं पार्श्वमानीं कृत्वा यद्दीर्घचतुरस्रं भवति तस्याक्ष्णया रज्जुः पार्श्वमानी तिर्यङ्मानी च यदि भवेत् सा त्रिकरणी। पूर्वोक्तप्रमाणक्षेत्राद् द्वादशाङ्गुलात् त्रिगुणसमचतुरस्रं क्षेत्रं करोति ॥ ३५ ॥

अथ त्रिकरणीमाह—प्रमाणमिति । प्रमाणं द्वादशाङ्गुलं तिर्यक् । तस्य द्विकरणी तिलोनसप्तदशाङ्गुला पार्श्वमानी । एवं भूतस्य दीर्घचतुरस्रस्याक्ष्णयारज्जु विंशतिरङ्गुलयः सप्तविंशतिः तिलाश्च । सा त्रिकरणी प्रमाणविमितक्षेत्रत्रिगुणं क्षेत्रं करोति ॥ ३५ ॥

**तृतीयकरण्येतेन व्याख्याता । नवमस्तु भूमेर्भागो भवतीति॥३६॥**

प्रमाणक्षेत्रस्य गुणवृद्धिमुक्त्वा उक्तन्यायेन ह्रासेन तृतीयांशकरणमाह—**तृतीयेति** । एतेन न्यायेन तृतीयकरणी व्याख्याता । प्रमाणक्षेत्रं नवधा विभज्य एकस्य भागस्य या करणी सा तिर्यङ्मानी, तस्य द्विकरणीं पार्श्वमानीं कृत्वा तस्याक्ष्णयारज्जुस्तृतीयकरणी भवति । प्रमाणक्षेत्राद् अंशद्वयहीनं तृतीयमंशं क्षेत्रं करोतीत्यर्थः ॥ ३६ ॥

तृतीयेति । एतेन न्यायेन तृतीयकरणी व्याख्याता । प्रमाणक्षेत्रं नवधा विभज्य एकभागस्य करणी तिर्यङ्मानी तद्द्विकरणी पार्श्वमानी । तस्याक्ष्णयारज्जुः तृतीयकरणी । प्रमाणपरिमितात् क्षेत्रात् तृतीयं क्षेत्रं करोति । एषा फलकरण्यास्तृतीयभागा । अनेन सूत्रेणेदमपि सूचितं भवति—

१. प्रमाणं तिर्यक् त्रिकरण्यायामस्तस्याक्ष्णयारज्जुश्चतुष्करणी ।

२. प्रमाणानि त्रीणि तिर्यग् द्विकरण्यायामस्तस्याक्ष्णयारज्जुरेकादशकरणी । एकादशभेदकरण्येतेन व्याख्याता । विभागास्तु एकविंशाधिकशतधेत्यर्थः ॥ ३६ ॥

[ इति त्रिकरणीतृतीयकरण्योरानयनम् । ]

**दीर्घचतुरश्रस्याक्ष्णयारज्जुः पार्श्वमानी तिर्यङ्मानी च यत्पृथग्भूते कुरुतस्तदुभयं करोति ॥ ३७ ॥**

**दीर्घचतुरस्रेति** । दीर्घचतुरस्रस्य पार्श्वमान्या सर्वतो मित्वा यत्

क्षेत्रं तस्य तिर्यङ्मान्या च सर्वतो मित्वा यत् क्षेत्रं तदुभयं दीर्घचतुरश्रस्याक्षणयारज्जुः ( क्षिप्त्वा तदुभयं ? ) करोतीत्यर्थः ॥ ३७ ॥

दीर्घचतुरश्रेति। दीर्घचतुरस्रपार्श्वमान्या समचतुरस्रे कृते यत् क्षेत्रं संपद्यते, यच्च तिर्यङ्मान्या, तदुभयमक्ष्णयारज्ज्वा समचतुरस्रे कृते संपद्यते।

त्रिकचतुष्कयोः पञ्चिकाक्ष्णयारज्जुरित्युदाहरणम्। तासां त्रिकरणेऽप्ययमेव प्रकारः। समचतुरस्रविषयः पूर्वसूत्रोक्तः ॥ ३७ ॥

**तासां त्रिकचतुष्कयोर्द्वादशिकपञ्चिकयोः पञ्चदशिकाष्टिकयोः सप्तिक चतुर्विंशिकयोर्द्वादशिकपञ्चत्रिंशिकयोः पञ्चदशिकषट्त्रिंशिकयोरित्येतासूपलब्धिः ॥ ३८ ॥**

तत्रोदाहरणमाह—**तासामिति**। त्र्यरत्न्यादिप्रमाणया तिर्यङ्मान्या चतुररत्न्यादिप्रमाणया पार्श्वमान्या यद्दीर्घचतुरश्रं क्रियते तस्याक्षणयारज्ज्वा सर्वतोमान्या मितं क्षेत्रं प्रत्येकं तिर्यङ्मान्या पार्श्वमान्या च सर्वतोमान्या यत् द्विविधं क्षेत्रं, तदुभयात्मकं क्षेत्रं भवति। तथा हि अनया तिर्यङ्मान्या कृतं नवप्रमाणं क्षेत्रं भवति, पार्श्वमान्या च षोडशप्रमाणम्। उभयं मिलितं पञ्चविंशतिप्रमाणं क्षेत्रम्, अक्षणयारज्जुरपि तत्प्रमाणा भवति, तथा च सर्वतोमानेन पञ्चविंशतिप्रमाणं क्षेत्रम्। तथा च त्रिक-चतुष्कयोः प्रमाणयोस्तिर्यङ्मान-पार्श्वमान्योः सत्योरित्यर्थः। एवं द्वादशिक-पञ्चिकयोरित्यादावपि। तासामक्षणयारज्जूनामुभयविधक्षेत्रकरणीनामुपलब्धिः अवगतिर्भवतीति। कुत्रेत्याकांक्षायाम् उक्तं **त्रिकचतुष्कयोरि**त्यादि। त्रिक-चतुष्कस्थलेऽक्षणयारज्जुः पञ्चिका भवति। द्वादशिक-पञ्चिकयोरुभयविधं क्षेत्रम् एकोनसप्तत्यधिकशत (१६९) प्रमाणकं क्षेत्रं, तस्याक्षणयारज्जुस्त्रयोदशिका त्रयोदशप्रमाणा भवति। सा च सर्वतः क्षिप्त्वा एकोनसप्तत्यधिकशत (१६९) प्रमाणकं क्षेत्रमेव करोति। एवं तृतीयोदाहरणे पञ्चदशिका पार्श्वमानी, अष्टिका तिर्यङ्मानी, ताभ्यां च प्रत्येकम् एकोननवत्यधिकद्विशत ( २८९ ) प्रमाणं क्षेत्रं, तत्राक्षणयारज्जुः सप्तदशिका भवति। एवं चतुर्थोदाहरणे सप्तिका तिर्यङ्मानी चतुर्विंशिका पार्श्वमानी, तदुभयक्षेत्रं पञ्चविंशत्यधिकषट्-

शतानि (६२५)। तत्राक्षणयारज्जुः पञ्चविंशतिका तत्क्षेत्रं करोति। एवं पञ्चमोदाहरणे द्वादशिका तिर्यङ्मानी पञ्चत्रिंशिका पार्श्वमानी। तदुभयं क्षेत्रं सहस्रं त्रीणि शतानि एकोनसप्तति(१३६९)श्च भवति। तत्राक्षणयारज्जुः सप्तत्रिंशिका। एवं षष्ठोदाहरणे पञ्चदशिका तिर्यङ्मानी षट्त्रिंशिका पार्श्वमानी तदुभयं क्षेत्रं सहस्रं पञ्चशतानि एकविंशतिः(१५२१)। तत्राक्षणयारज्जुःएकोनचत्वारिंशतिका तत्क्षेत्रं करोतीत्याद्युदाहरणैः स्पष्टीकृतमाचार्यैः ॥ ३८ ॥

तासामिति। प्रमाणं तिर्यग् ( बौ० शु० सू० १।३५ ) इत्येवमादिना अवगतानामक्ष्णयारज्जूनां त्रिकचतुष्कयोरित्यादिषु दीर्घचतुरस्रकरणीषूपलब्धिः अवगतिः। त्रिकचतुष्कयोः पञ्चिकाक्ष्णयारज्जुः। पञ्चदशिकषट्त्रिंशिकयोरेकोनचत्वारिंशिकाक्ष्णयारज्जुरित्यादि।

एवं तासां द्वयोर्ज्ञातयोस्तृतीया ज्ञातुं शक्यते। यथा पार्श्वमानीतिर्यङ्मान्योर्ज्ञातयोः पृथग् वर्गयित्वा संयोज्य वर्गमूलं अक्ष्णयारज्जुः। तथा पार्श्वमान्यक्ष्णयारज्ज्वोर्ज्ञातयोरक्ष्णयारज्जुवर्गात् पार्श्वमानीवर्गं विशोध्य शिष्टस्य मूलं तिर्यङ्मानी। एवं तिर्यङ्मानीवर्गं विशोध्य पार्श्वमानी। एवं सर्वत्र द्रष्टव्यम् ॥ ३८ ॥

[ इत्यन्यासामिष्टकरणीनामानयनम्। ]

**नाना चतुरश्रे समस्यन् कनीयसः करण्या वर्षीयसो वृध्रमुल्लिखेद् वृध्रस्याक्ष्णयारज्जुः समस्तयोः पार्श्वमानी भवति ॥ ३९ ॥**

नानाप्रमाणकचतुरश्रयोः संयोजनप्रकारमाह—**नानाचतुरश्र** इति। नानाप्रमाणके चतुरश्रके द्वे समस्यन् संयोजयन् कनीयस अनयोर्मध्ये अल्पप्रमाणकस्य चतुरश्रस्य करण्या रज्ज्वा वर्षीयस अधिकप्रमाणस्य चतुरश्रस्य तदवधिकमंशमुल्लिखेत्। अल्पप्रमाणकरणीं तिर्यङ्मानीं कृत्वा वर्षीयसः करणीं पार्श्वमानीं कृत्वा दीर्घचतुरस्रमुल्लिखेदित्यर्थः। वृध्रस्य एवं कृतस्य दीर्घचतुरश्रस्याक्ष्णयारज्जुः समस्तयोर्भवति, सर्वतो मानं भवति, तया सर्वतो मित्वा समचतुरश्रे कृते तयोरुभयोः क्षेत्रं संपद्यत इत्यर्थः ॥ ३९ ॥

नानेति। नानाकारे समचतुरस्रे समस्यन् ह्रसीयसः करणीं तिर्यङ्मानीं कृत्वा वर्षीयसः संबन्धिनं सकलमुल्लिखेत्। वर्षीयसः करण्येव पार्श्वमानी। एवं कृतस्य

दीर्घचतुरस्रस्याक्ष्णयारज्जुः समस्तयोः करणी भवति। तदुक्तम् "दीर्घचतुरस्रस्याक्ष्णयारज्जुः" (१।३७) इत्यादिना। अत्र लघूपायः। बृहच्चतुरस्रकरणीं अल्पचतुरस्रकरणीञ्च पृथग् वर्गयित्वा संयोज्य तस्य मूलमानीय तत्प्रमाणया रज्ज्वा समचतुरस्रे कृते उभे चतुरस्रक्षेत्रे समस्ते भवतः ॥ ३९ ॥

( इति समचतुरश्रयोः समसनप्रकारः । )

**चतुरश्राच्चतुरश्रं निर्जिहीर्षन् यावन्निर्जिहीर्षेत्तस्य करण्या वर्षीयसो वृध्रमुल्लिखेत्। वृध्रस्य पार्श्वमानीमक्ष्णयेतरत्पार्श्वमुपसंहरेत्। सा यत्र निपतेत् तदपच्छिन्द्यात् छिन्नया-निरस्तम् ॥ ४० ॥**

महाचतुरश्रादल्पचतुरश्रस्यापोद्धारप्रकारमाह—**चतुरश्रादिति**। चतुरश्रात् पुरुषचतुष्टयमितक्षेत्रादिकात् चतुरश्रं एकपुरुषप्रमाणादिकं निर्जिहीर्षन् अपोद्धरन् यावन्निर्जिहीर्षेत् तस्य करण्या अपजिहीर्षितस्य चतुरश्रस्य करण्या पार्श्वमान्या वर्षीयसमधिकस्य वृद्धमुल्लिखेद्। वृद्धस्य महाचतुरश्रस्य करणीं पार्श्वमानीं कृत्वा अपजिहीर्षितस्य चतुरश्रस्य करणीं तिर्यङ्मानीं कृत्वा, वृद्धस्य पार्श्वमानीकृतस्य दीर्घचतुरश्रस्य दक्षिणाप्राचीकोणादारभ्य पश्चिमोत्तरकोणं प्रति अक्ष्णया कर्षेत्। सा एवं कृत्वा प्रकृतायाः पार्श्वमान्याः यत्र प्रदेशे निपतेत् समाप्ता भवति, तदपच्छिन्द्यात् करणीमिति शेषः। **छिन्नयेति**। छिन्नया करण्या समचतुरश्रे कृते अपजिहीर्षितं चतुरश्रं निरस्तम्। पुरुषप्रमाणे चतुरश्रे निरस्ते अवशिष्टं क्षेत्रं त्रिपुरुषप्रमाणकमवतिष्ठत इत्यर्थः ॥ ४० ॥

चतुरस्रादिति। निर्हारो निरसनम्। यथा त्रिविधाग्नौ क्रियमाणे द्विपुरुषेण चतुरस्रे कृते चतुःपुरुषो भवति। तत्र एकत्यागार्थं पुरुषमात्र्या तिर्यङ्मान्या वृध्रमुल्लिख्य इतरस्योत्तरां पार्श्वमानीं दक्षिणाप्राचीमितरत्पार्श्वं गमयेत्। सा च तत्र द्विपुरुषप्रमाणायां चत्वारिंशच्छतद्वयाङ्गुलायां पञ्चतिलोने अष्टशतद्वयाङ्गुले निपतति। ततः पुरस्ताद् द्वात्रिंशदङ्गुलं पञ्च तिलांश्च अपच्छिन्द्यात्। परिशिष्टया करण्या चतुरस्रे कृते पुरुषो निरस्तो भवति ॥ ४० ॥

[ इति महाचतुरश्रादल्पचतुरश्रापोद्धारप्रकारः । ]

**समचतुरश्रं दीर्घचतुरश्रं चिकीर्षंस्तदक्ष्णयापच्छिद्य भागं द्वेधा विभज्य पार्श्वयोरुपदध्याद् यथायोगम् ॥ ४१ ॥**

**समचतुरश्रमिति** । तत्समचतुरश्रमक्ष्णयापच्छिद्य द्वेधा कृत्वा भागं द्वेधा विभज्य, अक्ष्णयापच्छिन्नम् एकं भागं द्वेधा कृत्वा पार्श्वयोरुपसंदध्यात् यथायोगमित्यर्थः । प्राक् समभूतं दीर्घचतुरश्रं चिकीर्षन् समचतुरश्रं महादिक्षु यथा स्रक्तयो भवन्ति तथा कृत्वा तदक्ष्णया द्वेधा कृत्वा पुनस्तयोरेकं भागं द्वेधा कृत्वा पार्श्वयोर्यथायोगं प्राक् प्रत्यक् दीर्घचतुरश्रं यथा संपद्यते तथोपदध्यात् योजयेत् ॥ ४१ ॥

समचतुरस्रमिति । महादिक्षु यथा स्रक्तयो भवन्ति तथा समचतुरस्रं कृत्वा चतुरस्रं पूर्वापरमपच्छिद्य दक्षिणभागार्धं द्वेधा विभज्य अक्ष्णया दक्षिणोत्तरमपच्छिद्य एकं चतुर्भागं उत्तरापरकोणेऽन्तर्दीर्घपार्श्वं उत्तराप्रत्यगग्रं उपदध्यात् । अपरं चतुरस्रार्धभागं उत्तरपूर्वकोणेऽन्तर्दीर्घपार्श्वं उत्तरपूर्वाग्रं उपदध्यात् । पार्श्वयोः पूर्वपश्चिमयोरुपसंदध्यात् ।

अन्यश्च प्रकारः । यावदिच्छं पार्श्वमान्या प्राच्यौ वर्धयित्वा उत्तरपूर्वा कर्णरज्जुमायच्छेत् । सा दीर्घचतुरस्रमध्यस्थायां समचतुरस्रतिर्यङ्मान्यां यत्र निपतति तत उत्तरं हित्वा दक्षिणांशं तिर्यङ्मानीं कुर्यात् । तद्दीर्घचतुरस्रं भवति ।

दीर्घस्य दीर्घकरणेऽप्ययमेव प्रकारः । समचतुरस्रविषयः पूर्वसूत्रोक्तः ॥ ४१ ॥

[ इति स ,चतुरश्रस्य दीर्घचतुरश्रकरणोपायः । ]

**अपि चैतस्मिंश्चतुरस्रं समस्य तस्य करण्यापच्छिद्य यदतिशिष्यते तदितरत्रोपदध्यात् ॥ ४२ ॥**

समचतुरश्रस्य दीर्घचतुरश्रीकरणे प्रकारान्तरमाह—**अपि चैतस्मिन्निति** । एतस्मिन् दीर्घचतुरश्रस्य करण्या तिर्यङ्मान्या तत्समचतुरश्रं करिष्यमाणदीर्घचतुरश्रं समस्य संयोज्य । तत्संयोजनप्रकारमाह—**तस्य करण्येत्यादिना** । तस्य करिष्यमाणस्य दीर्घचतुरश्रस्य करण्या तिर्यङ्मान्या तत्समचतुरश्रमपच्छिद्य, पार्श्वमान्या अपच्छेदे अतिशेषासंभवात् करण्या तिर्यङ्मान्येव विवक्षितेति गम्यते । **यदतिशिष्यत** इति । तिर्यङ्मानीतः अधिकं भवति तदितरत्र पुरस्तात्पश्चाच्चोपसंदध्यात् । यावत्संयोजयितुं शक्यते तावत्संयोज्यावशिष्टं

चेदस्ति तदपि तत्रैव "नानाचतुरश्रे समस्यन्निति" न्यायेन योजयेत् ॥ ४२ ॥

अपिचेति । दीर्घचतुरस्रं कृत्वा यदतिशिष्यते अनन्तभूतं भवति यत् क्षेत्रं तदितरत्र दीर्घचतुरस्रस्य पूर्वपार्श्वे पश्चिमपार्श्वे चोपदध्यात् ॥ ४२ ॥

[ इति समचतुरश्रस्य दीर्घचतुरश्रकरणे प्रकारान्तरम् । ]

**दीर्घचतुरश्रं समचतुरश्रं चिकीर्षंस्तिर्यङ्मानीं करणीं कृत्वा शेषं द्वेधा विभज्य पार्श्वयोर्विपर्यस्येतरत्रोपदध्यात् । खण्डमावापेन तत्संपूरयेत् । तस्य निर्हार उक्तः ॥ ४३ ॥**

**दीर्घचतुरश्रमिति ।** दीर्घचतुरश्रस्य तिर्यङ्मानीं करणीं कृत्वा दीर्घचतुरश्रान्न्यूनं ह्रस्वचतुरश्रं कृत्वा यदतिशिष्यते तं द्वेधा विभज्य विपर्यस्य पार्श्वयोरुपसंदध्यात् । दीर्घचतुरस्रस्य तिर्यङ्मान्यापच्छेदे पूर्वभागे यावदवशिष्टं भवति तद् द्वेधा कृत्वा दक्षिणप्रत्यक्पार्श्वयोर्वा उत्तरप्रत्यक्पार्श्वयोर्वा योजयेत् । अन्यथा योजने समचतुरश्रकरणासंभवात् । **खण्डमिति ।** तत्खण्डमावापेनाधिकक्षेत्रसंयोजनेन पूरयेत् । यथा समचतुरश्रं तथा कुर्यात् । एवं सति दीर्घचतुरश्रात् किञ्चिदधिकमावापेन भवति । तस्यापोद्धारमाह—**तस्येति ।** चतुरश्राच्चचतुरश्रं निर्जिहीर्षन्नि ( १।४० ) त्यादुक्तन्यायेन आवापेनाधिकं क्षेत्रं तत उद्धरेदित्यर्थः ॥ ४३ ॥

दीर्घचतुरश्रमिति । तिर्यङ्मानीप्रमाणेन पार्श्वमानीमपच्छिद्य समचतुरस्रं कृत्वा शेषं विभज्य पुरस्तादुत्तरतश्चोपदध्यात् । यथा उत्तरपूर्वकोणेऽयं चतुरस्रागन्तुखण्डो भविष्यति । तस्य निर्हारः चतुरस्राच्चतुरस्रं ( बौ. शु. सु. १।४० ) इति । तदीशानकोणक्षेत्रमित्यर्थः ॥ ४३ ॥

[ इति दीर्घचतुरश्रस्य समचतुरश्रीकरणोपायः । ]

**चतुरश्रमेकतोऽणिमच्चिकीर्षन्नणिमतः करणीं तिर्यङ्मानीं कृत्वा शेषमक्ष्णया विभज्य विपर्यस्येतरत्रोपदध्यात् ॥ ४४ ॥**

दीर्घचतुरश्रस्य समचतुरश्रस्य च एकतोऽणिमच्चतुरश्रतया करणमाह—

**चतुरश्रमेकत इति।** पुरस्ताद्ध्रस्वतिर्यङ्मानीकं, पश्चात्ततोऽधिकतिर्यङ्मानीकमित्यर्थः। अभिमतह्रस्वप्रमाणतिर्यङ्मानीं कृत्वा शेषमवशिष्टमक्ष्णया द्वेधा विभज्य विपर्यस्य व्यत्यासं कृत्वा दक्षिणोत्तरयोः पार्श्वयोरेकैकं भागमुपदध्यात्। अयमर्थः—समचतुरश्रशेषमुदग्भागस्थं दीर्घचतुरश्रं प्रागूदक्षिणकोणादारभ्याक्ष्णया विभजेत्। तत्र विभक्तयोर्भागयोर्मध्ये दक्षिणं भागं तथैव स्थापयेत्। उत्तरभागमुद्धृत्य विपर्यस्य दीर्घचतुरश्रस्य दक्षिणभागे पूर्वभागे सूक्ष्मं पश्चाद्भागे विस्तीर्णं योजयेदिति॥ ४४॥

चतुरस्रमिति। अणिमत्पार्श्वस्य करणीं तिर्यङ्मानीकरणीं कृत्वा प्रमाणपार्श्वमानीकं अणिमत्पार्श्वतिर्यङ्मानीकं दीर्घचतुरस्रं कृत्वा अवशिष्टं क्षेत्रं अक्ष्णया परिच्छिद्य एकं तत्रैव स्थापयित्वापरमादाय विपर्यस्य पार्श्वान्तर उपदध्यात्॥ ४४॥

[ इति चतुरस्रस्यैकतोऽणिमत्करणोपायः। ]

**चतुरश्रं प्रउगं चिकीर्षन् यावच्चिकीर्षेत् द्विस्तावतीं भूमिं समचतुरश्रां कृत्वा पूर्वस्याः करण्या मध्ये शङ्कुं निहन्यात्। तस्मिन् पाशौ प्रतिमुच्य दक्षिणोत्तरयोः श्रोण्योर्निपातयेत्। बहिःस्पन्द्यमपच्छिन्द्यात्॥ ४५॥**

चतुरश्रस्य प्रउगकरणमाह—**चतुरश्रमिति।** अभिमतचतुरश्रस्याक्ष्णया रज्ज्वा सर्वतो मित्वा तद्द्विगुणां भूमिं समचतुरश्रां कृत्वा तत्प्राग्देशस्थितायाः करण्या मध्ये शङ्कुं निहत्य तस्मिन् शङ्कौ पाशद्वयं प्रतिमुच्य श्रोणीभूतयोः स्रक्त्योर्निपातयेत्। तत्र स्पन्द्ययोरुभयोरपि बहिः क्षेत्रं विसृजेत्। स्पन्द्यान्तःस्थितं क्षेत्रं प्रउगाकारं सम्पद्यत इत्यर्थः॥ ४५॥

चतुरस्रं प्रउगमिति। प्रउगं शकटमुखम्। द्विकरण्या समचतुरस्रं कृत्वा पूर्वस्यास्तिर्यङ्मान्या मध्ये शङ्कुं निहत्य तस्मिन् पाशौ प्रतिमुच्य चतुरस्रश्रोण्योर्निपातयेत्। स्पन्द्ययोर्बहिर्भूतमपच्छिन्द्यात् निरस्येत्॥ ४५॥

[ इति चतुरस्रस्य प्रउगकरणोपायः। ]

**चतुरश्रमुभयतःप्रउगं चिकीर्षन् यावच्चिकीर्षेद् द्विस्तावतीं भूमिं दीर्घचतुरश्रां कृत्वा पूर्वस्याः करण्या मध्ये शङ्कुं निहन्यात्।**

**तस्मिन् पाशौ प्रतिमुच्य दक्षिणोत्तरयोर्मध्यदेशयोर्निपातयेत् । बहिः स्पन्द्यमपच्छिन्द्यात् । एतेनापरं प्रउगं व्याख्यातम् ॥ ४६ ॥**

**चतुरश्रमुभयत इति ।** अभिमतचतुरश्रक्षेत्रमुभयतःप्रउगाकारं कर्त्तुमिच्छन् अभिमतक्षेत्रं समचतुरश्रं कृत्वा तस्याक्षणया रज्ज्वा तद्द्विगुणां भूमिं समचतुरश्रां सम्पाद्य तां पुनः "समचतुरश्रम्" (सू.१।४१,४२) इति न्यायेन दीर्घचतुरश्रं कृत्वा पूर्वभागस्थितकरण्या मध्ये शङ्कुं निहत्य तत्र पाशद्वयं प्रतिमुच्य दक्षिणोत्तरयोः करण्योर्मध्ये निपातयेत् । स्पन्द्याद्-बहिःक्षेत्रनिरासे एकं प्रउगं संपद्यते । एवं प्रत्यग्भागस्थितकरण्या मध्ये शङ्कुं निहत्य तत्रापि पाशद्वयं प्रतिमुच्य दक्षिणोत्तरश्रोणिमध्ये पातयेत् । बहिःस्पन्द्यमपच्छिन्द्यात् अपरं प्रउगं सम्पन्नम् । तथा च प्रागग्रमेकं प्रत्यगग्रमपरं प्रउगमिति उभयतःप्रउगं सम्पद्यत इत्यर्थः ॥ ४६ ॥

चतुरस्रमुभयत इति । द्विस्तावतीं प्रमाणतिर्यङ्मानीकां द्विप्रमाणपार्श्वमानीकां दीर्घचतुरस्रां कृत्वा पूर्वस्याः करण्या मध्ये शङ्कुं निहत्य तस्मिन् पाशौ प्रतिमुच्य दक्षिणोत्तरयोः पार्श्वमान्योर्मध्यदेशयोः स्पन्द्यां निपातयेत् । बहिःस्पन्द्यं निरस्येत् । एतेन प्रकारेण अपरं प्रउगं व्याख्यातम् ॥ ४६ ॥

[ इति चतुरस्रस्योभयतःप्रउगकरणोपायः । ]

**चतुरश्रं मण्डलं चिकीर्षन्न् अक्ष्णयार्धं मध्यात् प्राचीमभ्यापातयेत् । यदतिशिष्यते तस्य सह तृतीयेन मण्डलं परिलिखेत् ॥ ४७ ॥**

**चतुरश्रं मण्डलमिति ।** चतुरश्रं मण्डलं चिकीर्षन् कर्त्तुमिच्छन् अक्ष्णयाप्रमाणार्धं मध्यात् चतुरश्रस्य मध्यादारभ्य प्राचीं दिशं प्रति आर्जवेन अभ्यापातयेत् निपातयेत् । यदतिशिष्यते चतुरश्रस्य बहिः-प्रदेशे अक्ष्णयार्धप्रमाणं यदतिशिष्यते तस्य अवशिष्टस्य तृतीयेन भागेन सह मण्डलं परिलिखेत् ।

अयमर्थः—अभिमतचतुरश्राक्षणयार्धप्रमाणं रज्जुं चतुरश्रस्य मध्य-

देशादारभ्य चतुरश्रप्राकृतिर्यङ्मान्या मध्ये निपात्य चतुरश्रस्य बहिः प्रदेशे अवशिष्टां रज्जुं त्रेधा संभुज्य पुनरेताद्दशं तृतीयांशं तैः सह योजयित्वा तत्प्रमाणया रज्ज्वा मण्डलं कुर्यात् ॥ ४७ ॥

चतुरश्रं मण्डलमिति। चतुरस्रस्य अक्ष्णयार्धं चतुरस्रमध्यादारभ्य कोट्यां निपात्य चिह्नं कृत्वा चतुरस्रस्य पूर्वपार्श्वमध्ये प्राचीं निपात्य चिह्नं कृत्वा चिह्नयोरन्तरालं त्रेधा विभज्य एकभागसहितेन चतुरस्रार्धेन मण्डलं परिलिखेत्। साऽनित्या मण्डलं करोति ॥ ४७ ॥

[ इति चतुरस्रस्य मण्डलकरणोपायः। ]

**मण्डलं चतुरश्रं चिकीर्षन् विष्कम्भमष्टौ भागान् कृत्वा भागमेकोनत्रिंशधा विभज्याष्टाविंशतिभागानुद्धरेत् भागस्य च षष्ठमष्टमभागोनम् ॥ ४८ ॥**

**मण्डलमिति।** अभिमतमण्डलं चतुरश्रं करिष्यन् विष्कम्भप्रमाणां रज्जुम् अष्टौ भागान् कृत्वा अष्टधा संभुज्य भागमेकोनत्रिंशद्धा विभज्य अष्टसु भागेषु एकं भागम् एकोनत्रिंशद्धा संभुज्य अष्टाविंशतिभागानुद्धरेत् एकोनत्रिंशद्धा विभक्तेषु भागेषु एकं निधाय अवशिष्टान् अष्टाविंशतिभागानुद्धरेत् विसृजेदित्यर्थः। भागस्य च षष्ठमष्टमभागोनं, सप्तानां भागानां मध्ये एकस्य भागस्य षष्ठभागम् अष्ठमभागोनम् उद्धरेदित्यनुषङ्गः।

अयमर्थः—विष्कम्भमष्टधा संभुज्य तेष्वेकं एकोनत्रिंशद्धा विभज्य, तेषु एकं निधाय अष्टाविंशति भागान् विसृजेत्। पुनः सप्तसु भागेष्वेकं भागं षडधा विभज्य षट्सु भागेषु एकं भागं पुनरष्टधा विभज्य, अष्टसु भागमुद्धरेत्। एवं कृतेन प्रमाणेन समचतुरश्रे क्रियमाणे तत्र मण्डलसमं क्षेत्रं भवति ॥ ४८ ॥

मण्डलमिति। भागस्योद्धृतशिष्टस्य षष्ठम्। कीदृशम्? स्वीयाष्टमभागोनम्। कस्मादुद्धरेत्? उद्धृताष्टविंशतिभागात्।

एतदुक्तं भवति। विष्कम्भमष्टधा कृत्वा एकं भागं द्विनवतिशतत्रयाधिक सहस्रभागान् कृत्वा तेषां एकचत्वारिंशद्भागान् विष्कम्भभागसप्तके संयोज्य एकपञ्चाशच्छतत्रयाधिकसहस्रभागान् कृत्वा तेषामेकं भागं जह्यादित्यर्थः ॥ ४८ ॥

**अपि वा पञ्चदशभागान् कृत्वा द्वावुद्धरेत्। एषाऽनित्या चतुरश्रकरणी ॥ ४९ ॥**

पक्षान्तरमाह—**अपि वेति**। विष्कम्भं पञ्चदशभागान् कृत्वा द्वौ भागौ निरस्येत्। अवशिष्टत्रयोदशभागपरिमाणा एका चतुरश्रकरणी। इयञ्च अनित्या अननुगता क्वचित् प्रमाणं, विरोधादिति द्रष्टव्यम् ॥४९॥

अपिवेति। एषा परिशिष्टत्रयोदशभागप्रमाणा अनित्या स्थूला चतुरस्रकरणी। अनयोरनित्यत्वं ज्ञायते गणितविरोधात्। परस्परविरोधाच्च।

तथाहि सप्तविधस्य सारत्निप्रादेशस्याग्नेः क्षेत्रं लक्षमष्टौ च सहस्राण्यङ्गुलयः १०८०००। तस्य चतुरस्रीकृतस्य करणी त्रीणि शतानि अष्टाविंशतिश्चाङ्गुलयोऽर्धद्वाविंशाश्च ३२८।२१$\frac{१}{२}$ तिलाः।

तस्मिन् उक्तेन मार्गेण मण्डलीकृते त्रीणि शतानि चतुःसप्ततिश्चाङ्गुलयो ( ३७४ अं० ) विष्कम्भो भवति। तस्य परिणाहः सहस्रपञ्चसप्ततिशतञ्चाङ्गुलयः ( ११७५ )। यथाहुः "चतुरधिकं शतमष्टगुणं द्वाषष्टिस्तथा सहस्राणाम्।
अयुतद्वयविष्कम्भस्यासन्नो वृत्तपरिणाहः" ॥ (आर्यभटीये) इति।

तस्य मण्डलस्य फलं लक्षं नवसहस्राण्यष्टौशतानि षष्टिश्चाङ्गुलयो १०९८६० दृश्यन्ते। उक्तञ्च "समपरिणाहस्यार्धं विष्कम्भार्धहतमेव वृत्तफलम्" ( आर्यभटीये )।

एवमग्निक्षेत्रे रथचक्रादौ मण्डलीकृते परस्परविरोधः। अर्धद्वाविंशतितिलसहितस्य अष्टाविंशतिशतत्रयाङ्गुलिकरणीकस्याग्नेर्मण्डलीकृतस्य विष्कम्भः चतुसप्ततिशतत्रयाङ्गुलयुक्तः। तस्यैव मण्डलस्योक्तेन मार्गेण चतुरस्रकरणे त्रीणि शतानि चतुर्विंशतिश्चाङ्गुलयोऽर्धपञ्चमाश्च तिलाः करणी भवति। पूर्वोक्तायाः करण्याः सार्धाश्चतस्रोऽङ्गुलयो हीयन्ते।

तस्मात् सूक्ष्ममिच्छता चतुरस्रस्य मण्डलकरणे सूत्रोक्तादतिशयतृतीयसहिताद् विष्कम्भार्धाद् अष्टादशशतांशस्त्याज्यः। एवं कृते रथचक्रचितौ विष्कम्भः षट्तिलोनैकसप्ततिशतत्रयाङ्गुलयो ३७०।२८ भवन्ति। परिणाहश्च पञ्चषष्टिः शतसहस्राङ्गुलयः ११६५। अस्य मण्डलस्य "समपरिणाहस्य", इत्यादिना पूर्वोक्तेनानीतं फलं लक्षमष्टौ च सहस्राणि भवन्ति १०८०००। मण्डलस्यापि चतुरस्रकरणे सूत्रोक्तविष्कम्भश्च स्यात्। त्रिगुणात् त्रयस्त्रिंशच्छतांशं युञ्ज्यात् ॥ ४६ ॥

[ इति मण्डलस्य चतुरश्रकरणोपायः। ]

**प्रमाणं तृतीयेन वर्द्धयेत् तच्च चतुर्थेनात्मचतुस्त्रिंशोनेन। सविशेषः ॥ ५० ॥**

उक्ताया द्विकरण्याः परिज्ञानोपायमाह—**प्रमाणमिति** । प्रमाणं समचतुरश्रस्य द्वादशाङ्गुलादिकं पार्श्वप्रमाणं तृतीयेन अङ्गुलचतुष्टयेन वर्धयेद्, तच्चाङ्गुलचतुष्टयं चतुर्थेनैकाङ्गुलेन आत्मनश्चतुर्थभागस्य एकाङ्गुलादेः चतुस्त्रिंशो यो भाग एकतिलाद्यात्मकस्तेन न्यूनेन एकतिलोनसप्तदशाङ्गुलादिरूपेण वर्धयेदित्यर्थः । अस्य सविशेष इत्यपि संज्ञेत्याह—**सविशेष** इति ॥ ५० ॥

द्विकरण्युक्ता । तस्या ज्ञानोपायमाह । प्रमाणमिति । द्वादशाङ्गुलं चतुरङ्गुलेन वर्धयेत् । तत्तृतीयं स्वीयचतुर्थेन स्वचतुस्त्रिंशांशोनेन तिलोनेनैकाङ्गुलेन वर्धयेत् । एवं तिलोनसप्तदशाङ्गुला भवति । तस्य सविशेष इत्यपि संज्ञा ॥ ५० ॥

[ इति द्विकरणीपरिज्ञानोपायः । ]

**अथाग्न्याधेयिके विहारे गार्हपत्यादाहवनीयस्यायतनं विज्ञायतेऽष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीतैकादशसु राजन्यो द्वादशसु वैश्य इति ॥ ५१ ॥**

चतुरश्रादिकरणमुक्त्वा आग्न्याधेयिकवेदिमाह—**अथाग्न्याधेयिक** इति । अथ शब्दोऽधिकारार्थः । अग्न्याधेयिके विहारे गार्हपत्यस्य पुरस्तादाहवनीयस्यायतनं विज्ञायते श्रुत्या गम्यत इत्यर्थः । सैव श्रुतिः कदा श्रूयते अष्टास्वित्यादिका । गार्हपत्यस्य पुरस्तादष्टासु प्रक्रमेष्वन्तरालभूतेषु ब्राह्मणोऽग्निमादधीतेत्यर्थः । एवमुत्तरयोरपि ॥ ५१ ॥

अथाग्न्याधेयिक इति । अथेत्यधिकारे । गार्हपत्यात् गार्हपत्यस्य पुरस्तात् । अन्तरालमधिकृत्य श्रुतिरवगम्यते । अष्टासु प्रक्रमेष्वन्तरालभूतेष्वित्यर्थः । एवमुत्तरयोरपि कल्पयोः । द्वादशसु प्रक्रमेष्वग्निमादधीतेति सार्ववर्णिकः । चक्षुर्निमित आदधीतेति दण्डादिना माननिषेधः । इयदष्टौ प्रक्रमा इयदेकादश इयद्द्वादशेति चक्षुषा यावन्तं देशं परिच्छिनत्ति तस्यावधेः समीप आधेय इत्यर्थः ॥ ५१ ॥

**आयामतृतीयेन त्रीणि चतुरस्राण्यनूचीनानि कारयेत् ॥५२॥**

**आयामतृतीयेनेति** । पूर्वोक्तं गार्हपत्याहवनीययोरन्तरालं तत्तद्वर्णव्यवस्थयोक्तं त्रेधा विभज्य तृतीयांशप्रमाणया करण्या सर्वतो मित्वा

चतुरश्रत्रयं पूर्वपश्चिमतया कुर्यात्। एकं प्रत्यक् ततः पुरस्ताद् द्वितीयम् ततः पुरस्तात् तृतीयमित्येवं समचतुरश्रत्रयं कुर्यात् ॥ ५२ ॥

आयामेति। पूर्वोक्तगार्हपत्याहवनीयमध्ययोरन्तरालायामतृतीयकरणीप्रमाणेन त्रीणि चतुरस्रान्यनूचीनानि प्राञ्चि, पश्चिमस्य पुरस्ताद् द्वितीयं, द्वितीयस्य पुरस्तात् तृतीयमिति कारयेत् ॥ ५२ ॥

**अपरस्योत्तरस्यां श्रोण्यां गार्हपत्यः ॥ ५३ ॥**

**अपरस्येति**। तत्र पश्चिमस्य चतुरश्रस्य उत्तरश्रोण्यां गार्हपत्यमध्यशङ्कुं निहत्य "धिष्ण्यानां द्विप्रादेशो विष्कम्भ" (बौ० शु० सू० १।७६) इति वक्ष्यमाणत्वात्तस्मिन् शङ्कौ पाशं प्रतिमुच्य सार्धचतुस्तिलसार्ध ( सत्र्यंशद्वाविंशतितिलसहित ? ) त्रयोदशाङ्गुलया रज्ज्वा ( मण्डलं लिखेत् ? ) तद्गार्हपत्यायतनं भवति ॥ ५३ ॥

अपरस्येति। अपरस्य चतुरस्रस्य उत्तरस्यां श्रोण्यां गार्हपत्यमध्यशङ्कुः। "धिष्ण्याणां द्विप्रादेशो विष्कम्भः" ( बौ. शु. सू. १।७६ ) इति वक्ष्यति। तस्मिन् प्रादेशेन मण्डलं परिलिखेत्। पृथिवीसंस्तवान्मण्डलाकृतिर्गार्हपत्यः ॥ ५३ ॥

**तस्यैव दक्षिणेंऽसेऽन्वाहार्यपचनः ॥ ५४ ॥**

**तस्यैवेति**। तस्यैव पश्चिमस्य चतुरश्रस्य दक्षिणपूर्वस्यां स्रक्तौ शङ्कुं निहत्य तस्मादुदग् द्वादशतिलसहितद्व्यङ्गुलेऽन्यं शङ्कुं निहत्य तस्मिन् पाशं प्रतिमुच्य तिलद्वयसहितपञ्चदशाङ्गुलया रज्ज्वा मण्डलं परिलिखेत्, पञ्चदशाङ्गुलयैव रज्ज्वाऽन्यत् परिमण्डलं करोति, मण्डलसंसर्गयोः शङ्कुं निहत्य स्पन्द्यां नियम्य उत्तरार्धं त्यजेत् स दक्षिणाग्निः ॥ ५४ ॥

तस्यैवेति। तस्यैव अपरस्य दक्षिणेंऽसे अन्वाहार्यपचनमध्यशङ्कुः। "मण्डलं चतुरस्रं चिकीर्षन्" ( बौ. शु. सू. १।४८ ) इत्यादिना आनीतनवतिलसहितैकविंशत्यङ्गुलचतुरस्रद्विकरण्या चतुस्तिलसहितत्रिंशदङ्गुलया समचतुरस्रं कृत्वा मण्डलं कृत्वा दक्षिणविहारविष्कम्भः चतुस्त्रिंशदङ्गुलयो दश तिलाश्च। दक्षिणविहारमध्यशङ्कोरुत्तरतो विष्कम्भचतुर्भागमात्रे शङ्कुं स्थापयित्वा तस्मिन् विष्कम्भार्धं प्रतिमुच्य मण्डलं परिलिख्य मण्डलमध्ये प्राक्प्रतीचीं स्पन्द्यां नियम्यानुस्पन्द्यां लेखामालिख्य उत्तरार्धं त्यजेत्। सोऽन्वाहार्यपचनः। अन्तरिक्षसंस्तवाद्धनुराकृतिः ॥ ५४ ॥

**पूर्वस्योत्तरेंऽस आहवनीयः ॥ ५५ ॥**

**पूर्वस्येति** । प्राक्चतुरश्रस्य उत्तरेंऽसे आहवनीयस्य मध्यशङ्कुं निहत्य द्विप्रादेशप्रमाणं समचतुरश्रं कुर्यात्, स आहवनीयः । अग्रेणाहवनीयं पदत्रयं संचरमवशिष्य आहवनीयवच्चतुरश्रः सभ्यस्तस्य पुरस्ताच्च पदत्रयमवशिष्याऽवसथ्यः, सोऽप्याहवनीयवच्चतुरश्रः ॥ ५५ ॥

पूर्वस्येति । पूर्वस्य उत्तरस्याः श्रोण्या उत्तरेणोत्करः । पूर्वस्य चतुरस्रस्य उत्तरेंऽसे आहवनीयमध्यशङ्कुः । तस्य नवतिलसहितैकविंशत्यङ्गुलं चतुरस्रं कुर्यात् । द्युलोकसंस्तवात् चतुरस्र आहवनीयः । आंगारो वा । सभायामेव सभ्यं व्यपदिशेत् । आवसथ आवसथीयमिति ॥ ५५ ॥

**अपिवा गार्हपत्याहवनीययोरन्तरालं पञ्चधा षोढा वा संभुज्य षष्ठं सप्तमं वा भागमागन्तुकमुपसमस्य समं त्रैधं विभज्य पूर्वस्मादन्ताद् द्वयोर्भागयोर्लक्षणं करोति । गार्हपत्याहवनीययोरन्तौ नियम्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं निहन्ति । तद्दक्षिणाग्नेरायतनं भवति ॥ ५६ ॥**

दक्षिणाग्न्यायतनविकल्पमाह—**अपिवेति** । गार्हपत्याहवनीययोरन्तरालप्रमाणां रज्जुं पञ्चधा षोढा वा विभज्य तत्रागन्तुमन्यं भागं संयोज्य पञ्चधा विभागपक्षे पञ्चमांशेनान्यं षष्ठं भागं योजयेत् , षोढा संविभागपक्षे षष्ठांशसमानप्रमाणमन्यं सप्तमभागं योजयेत् । भागान्तरसंयुक्तमिदं लक्षणेन दक्षिणत आकृष्य लक्षणे शङ्कुं निहन्ति । स शङ्कुर्दक्षिणाग्नेर्मध्यम् । विपर्यस्योत्करः । आहवनीयसम्बद्धमग्रं गार्हपत्यसंबद्धं कृत्वा गार्हपत्यसम्बद्धं आहवनीयसमीपे नियम्य लक्षणेन उत्तरतोऽपायम्य शङ्कुं निहन्ति, स उत्करः ॥ ५६ ॥

अपीति । अपि वा पक्षः । "आयामतृतीयेन" ( १।५२ ) इत्यादि सर्वं कल्पोक्तेन विकल्पते । दक्षिणाग्न्यायतनदेशविकल्पार्थमाह–संभुज्य संवेष्ट्य । आगन्तुकमधिकं प्रक्षिप्य । समं सर्वम् । द्वयोर्भागयोरिति । तयोर्गार्हपत्याहवनीयमध्यशङ्क्वोः । दक्षिणाग्नेरिति । दक्षिणाग्नेरायतनमध्यं भवति । विपर्यस्योत्करः ॥ ५६ ॥

**अपिवा प्रमाणं पञ्चमेन वर्द्धयेत् । तत्सर्वं पञ्चधा संभुज्या-परस्मादन्ताद् द्वयोर्भागयोर्लक्षणं करोति । पृष्ठ्यान्तयोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं निहन्ति । तद्दक्षिणाग्नेरायतनं भवति ॥ ५७ ॥**

दक्षिणाग्न्यायतने पक्षान्तरमाह—**अपि वा प्रमाणमिति** । आहवनीयगार्हपत्यमध्यदेशप्रमाणं तदीयपञ्चमांशेन युक्तं कृत्वा तत्सर्वं पञ्चधा विभज्य पश्चिमाग्रादारभ्य भागद्वयेऽतीते लक्षणं कृत्वा, पूर्वापरशङ्क्वोः पाशौ प्रतिमुच्य पूर्ववल्लक्षणेन दक्षिणापायम्य तत्र शङ्कुं निहन्यात्, तद्दक्षिणाग्नेर्मध्यम ॥ ५७ ॥

अपिवेति । लक्षणे शङ्कुं निहन्ति । पूर्वस्मादन्त्याद् भागत्रयेऽतीते ॥५७॥

[ इति गार्हपत्यदक्षिणाहवनीयाग्नीनां स्थानानयनप्रकारः । ]

**विपर्यस्यैतेनोत्करो व्याख्यातः ॥ ५८ ॥**

**विपर्यस्येति** । पूर्ववदग्रविपर्यासेन उत्तरतोऽपायम्योत्करः कर्त्तव्यः । विपर्यस्येत्येतत् अपि वेति पक्षद्वयस्यापि शेष इति द्रष्टव्यम् ॥ ५८ ॥

विपर्यस्येति । पूर्वोत्तरकल्पयोः साधारणमिदम् । "दक्षिणतो विषुवत्यन्वाहार्यपचनस्ये"ति ( बौ. श्रौ. सू. २।१२ पृ: ५४।८ ) कल्पोक्तोऽप्यनुसन्धेयः । तथा सति उत्तरतो मध्य उत्करः ॥ ५८ ॥

[ इत्युत्करस्थानानयनम् । ]

**अपरेणाहवनीयं यजमानमात्री भवतीति दार्शपौर्णमासिकाया वेदेर्विज्ञायते । तस्यास्त्रिभागोनं पश्चात्तिरश्ची । तस्या एवार्धं पुरस्तात् तिरश्ची । एवं दीर्घचतुरस्रमेकतोऽणिमद् विहृत्य स्रक्तिषु शङ्कून् निहन्यात् । यावती पार्श्वमानी द्विरभ्यस्ता तावतीं रज्जुमुभयतः पाशां कृत्वा मध्ये लक्षणं करोति । दक्षिणयोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं निहन्यात् । तस्मिन् पाशौ प्रतिमुच्य लक्षणेन दक्षिणं पार्श्वं परिलिखेत् । एतेनोत्तरं पार्श्वं व्याख्यातम् । पूर्वं पार्श्वं तया द्विरभ्यस्तया परिलिखेत् । एवमपरम् ॥ ५९ ॥**

**अपरेणेति** । भवतीत्यनया श्रुत्या दर्शपूर्णमाससम्बन्धिन्या वेदेर्विज्ञायते प्रमाणमिति शेषः । **यजमानमात्रीति** । षण्णवत्यङ्गुलप्रमाणेत्यर्थः । तस्या मानमाह—**तस्या** इति । तस्याः षण्णवत्यङ्गुलायास्तृतीयेन भागेन ऊनं चतुःषष्ट्यङ्गुलानि प्रत्यक्प्रदेशतिर्यङ्मानी कार्या । तस्या एवार्धम् अष्टचत्वारिंशदङ्गुलानि पुरस्तात्तिर्यङ्मानी कार्या । एवं प्रकारेण पूर्वभागे अणु पश्चाद्भागे विशालं प्राक्पश्चिमदीर्घम् एकतोऽणिमद्दीर्घचतुरश्रं कृत्वा तस्य चतसृषु स्रक्तिषु शङ्कुचतुष्टयं निहन्यात् । तस्याः संमानमाह— **यावतीति । दक्षिणयोरिति** । दक्षिणयोः दक्षिणस्रक्तिद्वयनिखातशङ्कोरित्यर्थः । **एतेनेति** । "यावती पार्श्वमानी" त्यादिना उत्तरतोऽपायम्य लक्षणे शङ्कुं निहत्य तत्र पाशौ प्रतिमुच्य उत्तरपार्श्वं परिलिखेदित्यर्थः । **पूर्वमिति** । प्राक्तिर्यङ्मान्या द्विगुणीकृताया मध्ये लक्षणं कृत्वा प्रागपायम्य लक्षणे शङ्कुं निहत्य तत्र पाशं प्रतिमुच्य लक्षणेन पूर्वं पार्श्वं परिलिखेत् । **एवं मिति** । प्रत्यक्तिर्यङ्मान्या द्विगुणीकृताया मध्ये लक्षणं कृत्वा प्रत्यगपायम्य लक्षणे शङ्कुं निहत्य तत्र पाशौ प्रतिमुच्य लक्षणेन पश्चिमं पार्श्वं परिलिखेदित्यर्थः ।

अत्र कर्मान्ते । अथेयं दार्शपौर्णमासिकी वेदी यजमानमात्री भवत्यपरिमिता वा यथासन्नानि हविंषि सम्भवेदेवं तिरश्चीप्राश्चौ वेद्यंसावुन्नयत्याहवनीयस्य परिगृहीत्यै प्रतीची श्रोणी निरूहति गार्हपत्यस्य परिगृहीत्यै पुरस्तादंहीयसी पश्चात् प्रथीयसी मध्ये सन्नततरा भवतीति पक्षान्तरमुक्तम्, तदप्यत्रानुसन्धेयम् ।

अपरिमिता षण्णवत्यङ्गुलाधिका । विकृति ( प्रकृतिषु ? ) आसन्नानि हवींषि यथा संगृह्णीयात्, प्राश्चौ वेद्यंसावुन्नयति आहवनीयस्य परिगृही षाय ( त्यै ? ) । प्रतीची श्रोणी गार्हपत्यपरिग्रहाय । पुरस्ताच्छ्रोणीप्रमाणात् संकुचिता, पश्चादंसप्रमाणाद् विस्तृता, मध्ये अतिकृशा । दक्षिणोत्तरायतं गार्हपत्यागारम् । पूर्वापरायतमाहवनीयागारम् । आहवनीयागारस्य पुरस्तात् त्रिप्रक्रममवशिष्य सभ्यागारं, ततः पुरस्तात्

त्रिप्रक्रममवशिष्यावसथ्यागारं, यावति कृष्णमृग उपविशेत् तावदूर्ध्वो विहार इति कर्मान्ते उक्तम् ॥ ५९ ॥

अपरेणेति । यजमानमात्री षण्णवत्यङ्गुला । तस्या मानमाह—तस्या इति । त्रिभागोनं चतुःषष्ट्यङ्गुलानि । तस्या इति । तस्या एवार्धं अष्टाचत्वारिंशदङ्गुलानि ।

अष्टषष्टिशते सूत्रे चतुर्विंशे निरञ्छनम् ।
द्वात्रिंशे चतुःसप्तत्यां संख्येयान्यङ्गुलानि तु ॥
षण्णवत्यङ्गुला पृष्ठ्या प्रथमेनांसयोर्मितिः ।
श्रोण्योर्द्वितीयेन मानमेवमेकतः ...... ॥

तस्यानयन माह—एवमिति । तस्मिन्निति । यावती दक्षिणपार्श्वमानी परिलिखेत् । दक्षिणायाः श्रोणेर्दक्षिणमंसमालिखेत् । एतेनेति । यावती पार्श्वमानीत्यादिना । एवमिति । तिर्यङ्मान्योरपि द्विगुणीकृत्य मध्ये लक्षणं कृत्वा श्रोण्यंसयोश्च अन्तौ नियम्य पश्चात् पुरस्ताच्च अपच्छिन्द्यात् इति द्रष्टव्यम् । "अपरिमिता वा यथा सन्नानि हवींषि संभवेदेवं तिरश्चीप्राञ्चौ वेद्यंसावुन्नयति" प्रतीची श्रोणी पुरस्ताद्ंहीयसी पश्चात् प्रथीयसि मध्ये सन्नततरा भवति ( बौ. श्रौ. २४।२४ पृ. २०९।२ ) इति कर्मान्ते पक्षान्तरमप्यस्ति । तदप्यनुसन्धेयम् । अपरिमिता षण्णवत्यङ्गुलादधिका । यथासन्नानि हवींषि संभवेत् प्रकृतिषु संगृह्णीयात् । प्राञ्चौ वेद्यंसावुन्नयति आहवनीयस्य परिग्रहणाय । प्रतीची श्रोणी गार्हपत्यस्य परिग्रहणाय । पुरस्तात् श्रोणी प्रमाणात् संकुचिता । पश्चात् अंसप्रमाणाद् वितता । मध्येऽतिकृशा । दक्षिणोत्तरायतं गार्हपत्यागारम् । आहवनीयागारं पूर्वापरायतं तत्र वेदिकरणात् । आहवनीयस्य पुरस्तात् त्रिप्रक्रममवशिष्य सभ्यागारम् । एवं आवसथीयस्य गृहम् । यावति कृष्णमृग उपविशेत् तावदपरार्धोर्ध्वंगते विहार ( बौ. श्रौ. सू. २४।१३ पृ. २०७।७ ) इति कर्मान्त उक्तम् ॥ ५९ ॥

[ इति दार्शिक्या वेदेर्विहरणोपायः । ]

**दशपदा पश्चात्तिरश्ची द्वादशपदा प्राच्यष्टापदा पुरस्तात्तिरश्चीति पाशुबन्धिकाया वेदेर्विज्ञायते । मानयोगस्तस्या व्याख्यातः ॥ ६० ॥**

**दशपदेति** । **विज्ञायत** इति । प्रमाणमिति शेषः । **मानयोग** इति । एकतोऽणिमद्दीर्घचतुरश्रात्मिकायास्तस्या मानप्रकारः प्रमाणादध्यर्धां रज्जुमित्यादिना व्याख्यात इत्यर्थः ॥ ६० ॥

मानयोग इति । अथापरं प्रमाणादध्यर्धाम् ( १।३२ ) इत्यादिना ॥ ६० ॥

**रथसम्मितेत्येकेषाम् ॥ ६१ ॥**

**रथसम्मितेत्येकेषामिति**। मतमिति शेषः। तत्रायं क्रमः— रथाक्षमात्री पश्चात्तिरश्ची ईषामात्री प्राची युगेन पुरस्तात्तिरश्ची मातव्येति ॥ ६१ ॥

रथेति। मतमिति शेषः। "रथाक्षमात्री पश्चात् तिर्यक्। ईषया प्राची। विपथयुगेन पुरस्तात्" ( बौ. श्रौ. सू. २०।५ पृ: ५६।५७ ) इत्यादि द्रष्टव्यम्। विपथयुगं षडशीत्यङ्गुलम्। चक्षुर्निमिता वा ॥ ६१ ॥

**विराट् सम्पन्नेत्येकेषाम् ॥ ६२ ॥**

**विराडिति**। मतान्तरं। दशाक्षरा विराडिति व्यवहाराद् विराट् शब्दः दशसंख्यापरः। ततश्च सर्वतो दशपदेत्यर्थः ॥ ६२ ॥

विराडिति। मतम्। दशपदा वा ॥ ६२ ॥

[ इति पाशुबन्धिकवेदिविहरणोपायः। ]

**शम्यामात्रो चतुःस्रक्तिर्भवतीत्युत्तरवेदेर्विज्ञायते। समचतुरश्राविशेषात् ॥ ६३ ॥**

**शम्यामात्रीति**। **विज्ञायत** इति। प्रमाणमिति शेषः।

उत्तरवेदेर्विशेषाश्रवणात् समचतुरश्रेत्याह—**समचतुरश्रेति**। विशेषविधिरहितस्थले सर्वत्रायं विधिर्द्रष्टव्यः ॥ ६३ ॥

शम्यामात्रीति। अन्ततो हि देवानामाधीयत इति श्रुतेः। पूर्वान्ते यूपावटस्यार्धप्रक्रममवशिष्योत्तरवेदिः। षट्त्रिंशदङ्गुला शम्या। उत्तरयुगप्रमाणेनोत्तरनाभिस्त्रयोदशाङ्गुलेन। समचतुरश्रेति। सार्वत्रिकोऽयं विधिः। यत्र विशेषविधिर्नास्ति तत्र सर्वत्र समचतुरस्रकरणम् ॥ ६३ ॥

[ इत्युत्तरवेदिविहरणोपायः। ]

**वितृतीया वेदिर्भवतीति पैतृक्या वेदेर्विज्ञायते। महावेदेस्तृतीयेन समचतुरस्रकृतायास्तृतीयकरणी भवतीति। नवमस्तु भूमेर्भागो भवति ॥ ६४ ॥**

**वितृतीयेति**। सौमिकी महावेदिर्वितृतीया त्रिधा विभक्तस्य स्वक्षेत्रस्य

एकभागतृतीयांशरूपा महापितृयज्ञवेदिप्रमाणमित्यर्थः । तस्या मानोपायमाह—**महावेदेरिति** । अष्टाविंशत्यूनसहस्रपदक्षेत्राया महावेदेः समचतुरश्रीकृतायाः करण्याः षड्विंशतितिलाधिकद्व्यङ्गुलोत्तरमेकत्रिंशत्पद ( पद ३१।२।२६ ति० ) प्रमाणायास्तृतीयेन भागेन समचतुरश्रीकृताया भूमेः करणी तृतीयकरणीति । तया मीयमाने महावेदिभूमेर्नवमो भागः अष्टोत्तरशतपदक्षेत्रात्मकः सिद्ध्यतीत्यर्थः ॥ ६४ ॥

वितृतीयेति । वितृतीया भागाद्यरूपेण (?) विभज्य महावेदेर्नवमभागेनेत्यर्थः । तस्य ग्रहणोपायमाह—महावेदेरिति । अष्टाविंशत्यूनं पदसहस्रं महावेदिः । तस्याः समचतुरस्रकृतायाः करणी एकत्रिंशत् पदं अङ्गुलद्वयं षड्विंशतितिलाश्च । तस्याः तृतीयेन समचतुरस्रकृतायाः करणी दशपदानि पञ्चाङ्गुलं एकत्रिंशत् तिलास्तृतीय करणी भवति । नवम इति । महावेद्या भूमेर्नवमभागो भवति । समचतुरस्रकृतायाः महावेद्याः करण्यास्तृतीयेन समचतुरस्रकृताया भूमेः करणीत्यन्वयः । अत्र ज्ञानप्रकारः । अष्टाविंशत्योनपदसहस्रं पञ्चदशाङ्गुलस्य पदस्य वर्गेण पञ्चविंशत्यधिकशतद्वयेन हत्वा लब्धं चतुस्त्रिंशत्प्रमाणस्याङ्गुलस्य वर्गेण षट्पञ्चाशदङ्गुलाधिकसहस्रेण हत्वा जातं २५२८१७२०० । तस्य मूलमानीय लब्धं चतुस्त्रिंशता विभजेत् । लब्धाङ्गुलानि ४६७ तिलाश्च २६ भवन्ति । तत्र तिलान् स्थापयित्वा पञ्चदशभिरङ्गुलीभिर्विभजेत् । तानि एकत्रिंशत्पदानि अङ्गुलद्वयं षड्विंशति तिलाश्च भवन्ति । पुनस्त्रिभिर्विभक्ते तृतीयकरणी भवति । एवं कृते अष्टोत्तरशतं नवमो भागो भवति ॥ ६४ ॥

**यजमानमात्री चतुःस्रक्तिर्भवतीत्येकेषाम्** ॥ ६५ ॥

**यजमानमात्रीति** । मतान्तरं । सर्वतः षण्णवत्यङ्गुलेत्यर्थः ॥ ६५ ॥

यजमानेति । मतम् । षण्णवत्यङ्गुला ॥ ६५ ॥

**दिक्षु स्रक्तयो भवन्ति** ॥ ६६ ॥

**दिक्ष्विति** । महादिक्षु स्रक्तयो भवन्तीत्यर्थः ॥ ६६ ॥

दिक्ष्विति । महादिक्षु स्रक्तयः । दक्षिणा प्राक् पृष्ठ्या । अत्र लघूपायमाह कात्यायनः । "पैतृक्यां द्विपुरुषचतुरस्रं कृत्वा करणीमध्येषु शङ्कवः समाधि"रिति । तत्र प्रकारः । अन्वाहार्यपचनमग्रेण संचरमवशिष्य पुरुषद्विकरण्या दशतिलोनया सप्ततिंशताङ्गुलया

वितृतीयद्विकरण्या अर्धाधिकविंशतिशतद्वयाङ्गुलया वा समचतुरस्रं कृत्वा करणीनां मध्ये शङ्कून् निहत्य प्रमाणद्विगुणयो रज्ज्वोः पाशान् पूर्वापरयोः प्रतिमुच्य तयोर्मध्यं दक्षिणोत्तरयोर्नियम्य बहिःस्पन्द्यमपच्छिन्द्यात् । हविरासादनसौकर्यार्थं पश्चारत्निर्वा यजमानमात्री ॥ ६६ ॥

[ इति पैतृक्या वेदेर्विहरणोपायः । ]

**वेदितृतीये यजेतेति सौत्रामणिकीं वेदिमभ्युपदिशन्ति । महावेदेस्तृतीयेन समचतुरस्रकृताया अष्टादशपदा पार्श्वमानी भवति । तस्यै दीर्घकरण्यामेकतोऽणिमत्करण्याश्च यथाकामीति ॥ ६७ ॥**

**वेदिवितृतीय** इति । महावेदितृतीयक्षेत्रे चतुर्विंशत्यधिकपदशतत्रयात्मकक्षेत्रे यजेतेति श्रुतेरर्थः । वेदितृतीयक्षेत्रस्य मानोपायमाह—**महावेदेरिति** । महावेदेस्तृतीयक्षेत्रेण चतुर्विंशत्यधिकपदशतत्रया ३२४ त्मकेन समचतुरस्रकृताया भूमेः पार्श्वमानी अष्टादश ( पद १) प्रमाणा भवतीति । तथा मीयमाना भवतीति । महावेदेस्तृतीयक्षेत्रात्मकसौत्रामणीवेदिनिष्पत्तिर्भवतीत्यर्थः । सौत्रामण्याः पशुविकारत्वादतिदेशात् एकतोऽणिमद्दीर्घचतुरश्राकारप्रमाणं कर्तव्यमित्यपेक्षायामाह—**तस्यै** इति । षष्ठ्यर्थे चतुर्थी । तस्या सौत्रामणीवेद्या दीर्घकरण्यामेतावद्दीर्घकरण्यामित्यत्र एकतोऽणिमत्करण्यामणिमत्पुरस्तात् पार्श्वप्रमाणमेतावदित्यत्र च चकारात् पश्चात्पार्श्वप्रमाणमेतावदित्यत्र च इच्छैव नियामिका । विशेषे प्रमाणाभावादित्यर्थः ।

अत्र च विराट् सम्पन्नेत्येकेषामिति मते सर्वतो दशपदसमचतुरश्रात्मिकाया वेदेः पश्वङ्गत्वाद् यथाप्रकृति समचतुरश्राकारापि महावेदितृतीयक्षेत्रप्रमाणा सौत्रामणीवेदिर्मातुं शक्यत इति ॥ ६७ ॥

वेदितृतीय इति । त्रीणि चतुर्विंशाधिकानि पदशतानि वेदितृतीयम् । महावेदेरिति । महावेदेस्तृतीयेन चतुर्विंशत्यधिकशतत्रयपदेन समचतुरस्रकृताया भूमेरष्टादशपदा करणी भवति । सापि वेदितृतीयसमचतुरस्रकरणी । चतुर्विंशत्यधिकशतत्रयस्य मूलमष्टादशपदानीत्यर्थः । सौत्रामण्याः पशुबन्धप्रकृतित्वाद् विराट्संपन्ना वा कार्या । तत्र सप्तविंशत्यङ्गुलं प्रवृद्धं पदम् । तेन दशपदा ।

तस्यै इति । तस्या दीर्घकरण्या अग्रतोऽणिमत्करण्यां दीर्घकरण्यामित्यर्थः । चकारः पूर्वेण समचतुरस्रधर्मेण समुच्चयार्थः । एकतोऽणिमद्दीर्घचतुरस्रं वा कुर्यादित्यर्थः । पदप्रक्रमप्रमाणानामन्यतमत्रिकरण्याष्टिकदशिके तिर्यङ्मान्यौ द्वादशिका पृष्ठ्या । अन्यतमतृतीयकरण्या वा त्रिंशत्पदानीत्यादि सौमिकवेदिवन्मानम् । तत्र दशाङ्गुलस्य पदस्य तृतीयकरणी पञ्चाङ्गुलयः सार्धसप्तविंशाश्च तिलाः । तत्त्रिगुणा त्रिकरणी । द्वादशाङ्गुलस्य षडङ्गुलयो द्वात्रिंशत् तिलाश्च । तत्त्रिगुणा त्रिकरणी । पञ्चदशाङ्गुलस्य पदस्य त्रयोविंशतितिलसहिता अष्टाङ्गुला तृतीयकरणी । तत्त्रिगुणा त्रिकरणी । एवं प्रक्रमाणामपि द्रष्टव्यम् । सौमिकात् प्रक्रमात् तृतीयोंऽशः प्रक्रमः स्यात् "तेन वेदिं विमिमीत" इति काठकाग्नीनामुक्तम् । तस्यार्थः सौमिकात् प्रक्रमपरिमितात् क्षेत्रात् तृतीयोंऽशो यस्तस्य करणी प्रक्रमस्य तृतीयकरणीत्यर्थः ॥ ६७ ॥

[ इति सौत्रामणीवेदिविहरणोपायः । ]

**प्राग्वंशः षोडशप्रक्रमायामो द्वादशव्यासः । अपिवा द्वादशप्रक्रमायामो दशव्यासः । तस्य मध्ये द्वादशिको विहारः ॥ ६८ ॥**

सौत्रामणीवेदिमुक्त्वा अग्निष्टोमवेदिप्रकारमाह—**प्राग्वंश** इति । प्राग्वंशयुक्तिः गार्हपत्याग्नित्रयसंरक्षको गृहविशेषः प्राग्वंश इत्युच्यते । सः प्राक्प्रत्यक् षोडशप्रक्रमदीर्घः दक्षिणोत्तरं द्वादशप्रक्रमव्यासः । एवंभूतः प्राग्वंशः कुर्यात् ।

पक्षान्तरमाह—**अपिवेति** । द्वादशप्रक्रमायामो दशव्यासः । द्वादशप्रक्रमदीर्घं दशप्रक्रमव्यासं प्राग्वंशं कुर्यादित्यर्थः । पूर्वोक्तं पक्षद्वयं केवलक्रतौ उपपद्यते । साग्नौ तु षोडशप्रक्रमायामपक्ष एव नियतः । "व्यायाममात्री चतुःस्रक्तिर्भवतीति गार्हपत्यचितेर्विज्ञायत" (२।२९) इत्याहवनीयस्य व्यायामपरिमाणत्वं द्वादशप्रक्रमायामपक्षे नोपपद्यत इति षोडशप्रक्रमायामपक्ष एव नित्य इति निगद्यते ।

**तस्येति** । तस्य प्राग्वंशस्य मध्ये द्वादशिको द्वादशप्रक्रमपरिमितो देशो विहार इत्यर्थः ।

अयमत्र प्रयोगः—षोडशप्रक्रमपरिमिते प्राग्वंशे पुरस्तात् सार्धैकप्रक्रममवशिष्य पश्चात् सार्धप्रक्रमद्वयमवशिष्य अवशिष्टे मध्ये द्वादश-

प्रक्रमपरिमिते देशे विहारः कर्तव्यः। तथा हि विहारार्थनिहितक्षेत्र-प्रागग्रे प्रक्रमद्वयप्रमाणेन समचतुरश्रं कुर्यात् स आहवनीय इत्युच्यते। एवं पश्चिमाग्रदेशे ( उक्तप्रमाणकं ? ) चतुरश्रं कृत्वा 'चतुरश्रं मण्डलं चिकीर्षन्" (१।४७) इति न्यायेन परिमण्डलं कुर्यात्, स गार्हपत्य इत्युच्यते। "गार्हपत्याहवनीययोरन्तरालं पञ्चधा षोढा वा संभुज्य" (१।५६) इति न्यायेन दक्षिणाग्नेरायतनं कुर्यात्। तत्प्रमाणन्तु—तत्र आहवनीयचतु-रस्रस्याक्ष्णयारज्ज्वा समचतुरश्रं कृत्वा तच्चतुरश्रं परिमण्डलं कृत्वा प्राक् प्रत्यक् द्वेधा विभज्य उत्तरार्धं धनुराकारं क्षेत्रं त्यजेत्, अवशिष्टं धनुराकारदक्षिणार्धक्षेत्रं दक्षिणाग्निरित्युच्यते। आहवनीयस्य पश्चाद्देशे "यजमानमात्री वेदिर्भवती" ( १।५९ ) त्युक्तन्यायेन वेदिं कुर्यात्। एवं च प्राग्वंशे प्राग्देशे सार्धप्रक्रम(द्वय)प्रदेशः आहवनीयार्थः ( प्रक्रमद्वयपरिमितोदेशः ? )। गार्हपत्याहवनीययो र्मध्यदेशः अष्टप्रकम-परिमितः। प्रक्रमद्वयपरिमितः गार्हपत्यदेशः गार्हपत्यस्य पश्चात्प्रदेशः सार्धप्रक्रमद्वयपरिमितः। आहृत्य प्राक्-प्रत्यक्-षोडशप्रक्रमः संपद्यते ॥६८॥

प्राग्वंश इति। साग्निके षोडश अन्यत्र द्वादशेति व्यवस्थया विकल्पमिच्छन्ति केचित्।

तस्येति। षोडशप्रक्रमपक्षे द्वादशप्रक्रमप्रमाणकः। प्रक्रमद्वयेन गार्हपत्यादीनि आयतनानि कुर्यादित्यर्थः। आग्न्याधेयिकान्यपि प्रक्रमद्वयेनेति केचित्। पश्चात्पुर-स्ताच्च सञ्चरार्थं प्रक्रमद्वयम्। मध्येऽष्टौ प्रक्रमाः। अपरेणाहवनीयं यजमानमात्री वेदिः। वेदेः पश्चात् परिशिष्टो विशयः॥ ६८॥

[ इत्यग्निष्टोमवेदिविहरणोपायः। ]

**त्रिंशत्पदानि प्रक्रमा वा पश्चात्तिरश्चो भवति। षट्त्रिंशत् प्राची। चतुर्विंशतिः पुरस्तात् तिरश्चीति महावेदे र्विज्ञायते। मानयोगस्तस्या व्याख्यातः। आहवनीयात् षट्प्रक्रमान्म-हावेदिः॥ ६९॥**

प्राग्वंशवेदिमुक्त्वा सौमिकमहावेदिप्रमाणमाह—**त्रिंशत्पदानीति**। पश्चिमदेशे दक्षिणोत्तरं त्रिंशत्पदप्रमाणं, प्रक्रमप्रमाणं वा, ( पूर्वापरं षट्-

त्रिंशत् प्रक्रमप्रमाणं, पदप्रमाणं वा १ ) प्राग्देशे दक्षिणोत्तरं चतुर्विंशतिपद-प्रमाणं, प्रक्रमप्रमाणं वा एकतोऽणिमद्दीर्घचतुरश्रं कुर्यादित्यर्थः। **मान-योग** इति। "प्रमाणादध्यर्धा रज्जु" (१।३२) मित्यादिना तस्याः प्रमाणं व्याख्यातमित्यर्थः। इयं वेदिः कुत्र कर्तव्येत्याकांक्षायामाह— **आहवनीयादिति**। आहवनीयमारभ्य प्राक्प्रदेशे षट्प्रकमान् मित्वा ततः प्राग्देशे महावेदिः कर्तव्येत्यर्थः ॥ ६९ ॥

मानयोग इति। प्रमाणादध्यर्धा रज्जु(१।३२)मित्यादिना। एतदुक्तं भवति-षट्-त्रिंशिकायामष्टादशोपसमस्यापरस्मादन्ताद् द्वादशसु लक्षणं पञ्चदशसु लक्षणम्। पृष्ठ्यान्तयोरन्तौ नियम्य पञ्चदशिकेन श्रोणी द्वादशिकेनांसाविति।

आहवनीयादिति। आहवनीयमध्यादारभ्य षट्प्रक्रमसंचरं त्यक्त्वा महावेदेरारम्भः। प्रक्रमशब्दः पदस्याप्युपलक्षणम् ॥ ६९ ॥

[ इति सौमिकमहावेदिविहरणोपायः । ]

**तत एकस्मिन्त्सदः। तद्दशकम्। उदक् सप्तविंशत्यरत्नयः। अष्टादशेत्येकेषाम् ॥ ७० ॥**

सदसो देशविशेषकरणमाह—**तत** इति। ततः ( षट्प्रक्रमाद् ) एकस्मिन् पदे प्रक्रमे वा विसृष्टे सति तत्प्राक्प्रदेशे सदः कर्तव्य इत्यर्थः।

**तद्दशकमिति**। तत्सदः पूर्वापरेण दशपदप्रमाणं, दशप्रक्रमप्रमाणं वा। **उदगिति**। दक्षिणोत्तरेण सप्तविंशत्यरत्नयः। इदं प्रक्रमपक्षे। **अष्टादशेति**। पक्षे अष्टादशारत्नयः दक्षिणोत्तरमित्यर्थः ॥ ७० ॥

तत इति। तत्रैवारम्भः। तदिति। पूर्वापरेण। उदगिति। प्रक्रमपक्षे दक्षिणोत्तरेण सप्तविंशत्यरत्नयः। अष्टादशेति। उदगित्येव। पदमानपक्षेऽष्टादशारत्नयः। पृष्ठ्याया दक्षिणतोऽर्धमुत्तरतोऽर्धम्। अपिवा द्वौ भागावुदक् स्पन्द्यायै स्यातामेको दक्षिणत इति पक्षोऽपि। प्रक्रमपक्षे वेद्यवयवत्वात् सदसो बहिर्भावायोगात् ॥ ७० ॥

[ इति सदोविहरणोपायः । ]

**ततश्चतुर्षु हविर्धानम्। तद्दशकं द्वादशकं वा ( सम-चतुरश्रम् ) ॥ ७१ ॥**

**तत** इति। ततः सदश्चतुर्षु पदेषु प्रक्रमेषु वा त्रिसृष्टेषु हविर्धानं कर्तव्यम्। **तदिति**। तत्सर्वतो दशप्रक्रमप्रमाणं वा, सर्वतो द्वादशप्रक्रमप्रमाणं वा कर्तव्यम्॥ ७१॥

**मानयोगस्तयोर्व्याख्यातः॥ ७२॥**

**मानयोग** इति। तयोः सदोहविर्धानयोर्मानयोगः पूर्वमुक्त इत्यर्थः॥ ७२॥

तत इति। मानयोग इति। प्रमाणादध्यर्धा (१।३२) मित्यादिना। सदस उदीची पृष्ठ्या॥ ७१–७२॥

[ इति सदोहविर्धानविहरणोपायः। ]

**यूपावटीयाच्छङ्कोरर्धप्रक्रममवशिष्योत्तरवेदिं विमिमीते। दशपदोत्तरवेदिर्भवतीति सोमे विज्ञायते। मानयोगस्तस्या व्याख्यातः॥ ७३॥**

**यूपावटीयाच्छङ्कोरिति**। एकतोऽणिमद्दीर्घचतुरश्रात्मिकाया वेदेः प्राक्तिर्यङ्मान्या मध्ये शङ्कुं निहन्यात् स शङ्कुर्यूपावटीय इत्युच्यते। तस्य पश्चिमप्रदेशे अर्धप्रक्रममवशिष्य ततः पश्चिमप्रदेशे उत्तरवेदिं विमिमीते। तस्याः प्रमाणप्रतिपादकं ब्राह्मणमाह—**दशपदोत्तरवेदिरिति**। सर्वतो दशपदेन दण्डेन मीयमाना शतपदक्षेत्रेत्यर्थः। यद्वा दशपदक्षेत्रेत्यर्थः। "पदं तिर्यक् त्रिपदा पार्श्वमानी तस्याक्ष्णयारज्जुर्दश करणी। दशपदोत्तरवेदिर्भवती"ति **कात्यायन**वचनात्। चतुर्दशतिलोनाङ्गुलत्रयसहितपदत्रयमाणेन दण्डेन सर्वतो मीयमाना दशपदक्षेत्रोत्तरवेदिर्वेदितव्या।

केचित्तु "तां युगेन, यजमानस्य वा पदैर्विमाये"ति वचनाद्युगमपि स्वतन्त्रप्रमाणमाहुः। तस्मिन् पक्षे कल्पसूत्रोक्तं क्षुद्रपदैर्मानमपि लभ्यत इति एकतोऽणिमद्दीर्घचतुरश्ररूपाप्युत्तरवेदिरनुसन्धेया।

**मानयोग** इति। स्फुटम्॥ ७३॥

यूपावटीयादिति। तस्याः प्रमाणमाह—दशपदेति। सर्वतो दशपदा क्षेत्रतः शतपदा। क्षेत्रतो दशपदा वा। अत्र कात्यायनः। पदं तिर्यक् त्रिपदा पार्श्वमानी

तस्याक्ष्णया रज्जुर्दशकरणी ( का. शु. सू. ) दशपदोत्तरवेदिर्भवतीत्यत्रापि वितृतीया वेदिर्भवतीत्यत्रोक्तन्यायेन चतुर्दशतिलाभियुतमङ्गुलित्रयं पदत्रयञ्च करणीति केचित्। तां युगेन यजमानस्य वा पदैर्विमायेति (?) वचनात्। युगमिति बाहुप्रमाणमाहुः। कल्पोक्तक्षुद्रपदमानमपि लभ्यते। तस्मिन् पक्ष एकतोऽणिमद्दीर्घचतुरस्रमुत्तरवेदिः॥ ७३॥

[ इति सौमिकोत्तरवेदिविहरणोपायः । ]

**चात्वालः शम्यामात्रोऽपरिमितो वा॥ ७४॥**

**चात्वाल** इति। उत्तरांसादुदश्चं प्रक्रमं प्रक्रम्य ततः सर्वतः षट्त्रिंशदङ्गुलयः, यथेच्छं वा चात्वालः कार्य इत्यर्थः। उत्तरांसप्रभृति भागतृतीयेऽतीते उदक् प्रक्रमेऽतीते उत्करः॥ ७४॥

चात्वाल इति। उत्तरस्मादंसात् त्रीन् प्रतीचः प्रक्रमान् प्रक्रम्योदञ्चं चतुर्थं प्रक्रम्य तच्चात्वालस्य मध्यं कुर्यात्।

उत्तरांसप्रभृति भागतृतीयेऽतीत उदक् प्रक्रमेऽतीत उत्करः॥ ७४॥

**अथोपरवाः प्रादेशमुखाः प्रादेशान्तरालाः। अरत्निमात्रं समचतुरश्रं विहृत्य स्रक्तिषु शङ्कून् निहन्यात्। अर्धप्रादेशेनार्धप्रादेशेनैकैकं मण्डलं परिलिखेत्॥ ७५॥**

**अथोपरवा** इति। उपरवा गर्तविशेषाश्चत्वारः। प्रादेशपरिमितमुखप्रदेशाः प्रादेशपरिमितपरस्परमध्यदेशाश्च कार्याः। एवं करणोपायः **अरत्निमात्र**मित्यादिना प्रदर्श्यते। सर्वतोऽरत्निप्रमाणं चतुरश्रं कृत्वा तस्य चतसृषु स्रक्तिषु चतुःशङ्कून्निहत्य शङ्कुष्वर्धप्रादेशप्रमाणा रज्जुः प्रतिमुच्य तया मण्डलानि परिलिख्य गर्तेषु क्रियमाणेषु प्रादेशमुखत्वं प्रादेशान्तरालत्वं च गर्तानां संपद्यत इत्यर्थः॥ ७५॥

अथेति। मध्यमादौत्तरवेदिकाच्छङ्कोरनुस्पन्द्यं षट्पदानि प्रक्रम्य दक्षिणा सप्तममित्यत्रोपरवदेशस्योत्तरकाल इत्यादि योजयितव्यम्।

पृष्ठ्याया दक्षिणतः प्रक्रमं विहाय दक्षिणहविर्धानस्याक्षस्य पुरस्तादनसोऽधस्तादुपरवा भवन्ति। एषां समीपे ग्रावाणो रवं कुर्वन्तीत्युपरवाः।

प्रादेशमुखाः प्रादेशान्तराला भवन्तीति श्रुत्यर्थः सिध्यति। उत्तरवेद्याः क्षुद्रपदादिप्रमाणविकल्पेष्वपि सर्वत्रोपरवदेशस्यैकरूप्यमापाद्यम्। पुरस्ताद् वितृतीयदेशात् स्तम्बयजुर्हरतीति स्तम्बयजुर्हरणदेशनियमादुपरवाणां कालात् स्तम्ब-

यजुर्हरतीति वचनाच्च। त्र्यग्नावपि "चतुरः प्रतीचः प्रक्रमान् प्रक्रामति दक्षिणा पञ्चममि"ति। पञ्चमान्त उपरवानामुत्तरोंऽसो ज्ञातव्यः। ज्योतिष्टोमे षट् प्रतीच इति वचनाद् अग्नौ चतुरः प्रक्रमान् प्रतीच इति वचनात् सूत्रकारेण परित्यक्ताभ्यां सह उत्तरवेदिप्रमाणमग्नेः पूर्वापरा परित्यज्य पूर्वक्षेत्रं षट्त्रिंशधा विभज्य प्रक्रमवृद्धिः।

प्राग्वंशमानेऽपि आहवनीयार्थप्रक्रमद्वयं प्राग्वंशपूर्वापरा परित्यज्य पूर्वं षोडशधा विभज्य प्रक्रमवृद्धिः।

दक्षिणोत्तरायतेष्वग्निषु सर्वं चतुर्विंशतिधा विभज्य एकोभागः प्रक्रमः ॥ ७५ ॥

[ इति चात्वालोपरवयोर्विहरणोपायः। ]

**सदसः पूर्वार्धाद् द्विप्रक्रममवशिष्य धिष्ण्यानां द्विप्रादेशो विष्कम्भस्तथान्तरालाः ॥ ७६ ॥**

**सदस** इति। सदः दक्षिणोत्तरं द्वेधा विभज्य द्वयोः पूर्वार्धात् पूर्वार्धे प्राग्देशे प्रक्रमद्वयमवशिष्य विहाय ततः पश्चाद् धिष्ण्यानां द्विप्रादेशो विष्कम्भः अरत्निपरिमितः। **तथान्तराला** इति। सदसः प्रा (ग् ?) देशे अरत्नि (प्रक्रम ?) द्वयं विहाय ततः पश्चिमदेशे षड् धिष्ण्यान् सर्वतोऽरत्निप्रमाणान् चतुरश्रान्मध्ये अरत्निमात्रान्तरालं मित्वा विहृत्य "चतुरश्रं मण्डलमि"(१।४७)"त्यादिना परिमण्डलं कुर्यादिति ॥ ७६ ॥

सदस इति। प्रक्रमद्वये गते धिष्ण्यानां पूर्वावधिः। तेषां प्रादेशतो भ्रमः। पृष्ठ्यायां होत्रीयं तं दक्षिणेन प्रशास्त्रीयमुत्तरेण होत्रीयमितरानुदीच आयातयति ब्राह्मणाच्छंसिनः पोतुर्नेष्टुरच्छावाकस्येति ॥ ७६ ॥

[ इति धिष्ण्यानां विहरणम्। ]

**आग्नीध्रागारस्य पार्श्वमानी पञ्चारत्निः ॥ ७७ ॥**

**आग्नीध्रागारस्येति**। कल्पसूत्रोक्तप्रकारेण महावेद्या उत्तरादंसादारभ्य प्रतीच अष्टादशप्रक्रमान् मित्वा तत्राग्नीध्रस्यागारं गृहं पूर्वतः पञ्चारत्निप्रमाणकं यथा अन्तर्वेद्यर्धं बहिर्वेद्यर्धं भवतीति तथा कृत्वा तस्य दक्षिणं द्वारं कुर्वन्ति ॥ ७७ ॥

आग्नीध्रेति। महावेद्या उत्तरादंसादारभ्य उत्तरपार्श्वस्यार्धे गत आग्नीध्रीयागारं पञ्चारत्निसमचतुरस्रम्। तस्य दक्षिणा (?) द्वारं कुर्वन्ति ॥ ७७ ॥

**एतेन मार्जालीयो व्याख्यातः। तस्योदीचीं द्वारं कुर्वन्ति ॥ ७८ ॥**

**एतेनेति** । एवमेव दक्षिणप्रदेशे मार्जालीयं कृत्वा तस्योदीचीं द्वारं कुर्यादित्यर्थः ॥ ७८ ॥

एतेनेति । दक्षिणादंसादारभ्य दक्षिणपार्श्वमध्ये मार्जालीयमध्यम् । मार्जालीयागारोऽपि पञ्चारत्निः समचतुरस्रः ।

तयोरागारमध्ययोर्मध्ये द्विप्रादेशावाग्नीध्रमार्जालीयौ ॥ ७८ ॥

[ इति आग्नीध्रमार्जालीयागारविहरणम् । ]

**रथाक्षान्तराला यूपावटा भवन्तीत्येकादशिन्यां विज्ञायते। तस्या दशानाञ्च रथाक्षाणामेकादशानाञ्च पदानामष्टाङ्गुलस्य च चतुर्विंशं भागमाददीत। स प्रक्रमः स्यात्। तेन वेदिं विमिमीते ॥ ७९ ॥**

यूपैकादशिन्यां यूपावटान्तरालप्रमाणप्रतिपादकब्राह्मणमाह—**रथाक्षेति** । यूपावटानामन्तराला मध्यदेशा रथाक्षपरिमाणाश्चतुरधिकशताङ्गुलप्रमाणा इत्यर्थः । एवञ्च अन्तरालार्थं रथाक्षप्रमाणं, यूपावटार्थं एकादशपदप्रमाणञ्च प्राग्देशे दक्षिणोत्तरं यथा भवति तथा वेदिः कार्या । एतदनुसारेण पश्चाद्देशे दक्षिणोत्तरं पार्श्वद्वयेऽपि प्राक् प्रत्यक् वेदिं कुर्यादित्यर्थः ।

नन्वेतर्हि "त्रिंशत् पदानि प्रक्रमा वा पश्चादि"त्यादिश्रुतिविरोध इत्याशंक्याह—**तस्या** इति । तस्या यूपैकादशिन्याः दशानां रथाक्षाणां चत्वारिंशदधिकसहस्राङ्गुलानामेकादशानाञ्च पदानां पञ्चषष्ट्युत्तरशताङ्गुलानां, अष्टाङ्गुलस्य च योगे त्रयोदशोत्तरशतद्वयाधिकसहस्राङ्गुलयः सम्पन्नाः । तासां चतुर्विंशभागं चतुर्विंशांशसहिताष्टादशतिलानि (तिलचतुर्विंशांश सहितं सार्धपादतिलार्धांगुलोत्तर ) १ पञ्चाशदङ्गुलञ्च प्रमाणमाददीत गृह्णीयात् । स एवंभूतो भागः प्रक्रम इत्युच्यते ।

अयमर्थः—एवंभूतप्रमाणेन प्रक्रमेण "त्रिंशत् पदानि प्रक्रमा वे"त्यादिप्रकारेण महावेदिं कुर्यात् ॥ ७९ ॥

रथेति । तत्र प्रकारमाह । तस्या इति । दशानाञ्च रथाक्षाणां चत्वारिंशदधिकसहस्राङ्गुलानाम् । एकादशानाञ्च पदानां यूपावटविष्कम्भाणां पञ्चषष्ट्यधिकशताङ्गुलानाम् । अष्टाङ्गुलस्य च । कल्पे एकादशिनीविधावग्निष्ठस्य दक्षिणोत्तरेण यूपौ चतुरङ्गुलेन विप्रकृष्टौ भवत इत्युक्तम् । तस्मादष्टाङ्गुलस्य च । एतेषां त्रयाणां चतुर्विंशभागमष्टादशतिलसहितं पञ्चाशदङ्गुलमाददीत । स इति । एकादशिनीवत्या महावेदेः । तेनेति । त्रिंशत् पदानीत्यादि ॥ ७९ ॥

**अथाश्वमेधे विंशत्याश्च रथाक्षाणामेकविंशत्याश्च पदानामष्टाङ्गुलस्य चतुर्विंशं भागमाददीत । स प्रक्रमः स्यात् । तेन वेदिं विमिमीते ॥ ८० ॥**

**अथाश्वमेध** इति । अथाश्वमेधे "यूपैकादशिनो" न्यायेन एकविंशतियूपावटानामन्तरालदेशाः रथाक्षपरिमाणा भवन्ति । तत्र विंशतिरथाक्षाणामशीत्युत्तरद्विसहस्राङ्गुलानामेकविंशतिपदानां पञ्चदशाधिकत्रिशताङ्गुलानामष्टाङ्गुलस्य च आहत्य त्र्यङ्गुलाधिकचतुःशताङ्गुलाधिकद्विसहस्राङ्गुलयः । तासां चतुर्विंशभागः सपादचतुस्तिलसहितशताङ्गुलप्रमाणः प्रक्रम इत्युच्यते । अयमर्थः—एवं प्रमाणकेन प्रक्रमेण "त्रिंशत् पदानि प्रक्रमा वा वेदि"न्यायेन महावेदिं कुर्यादिति ॥ ८० ॥

अथेति । पूर्वेण व्याख्यातम् । एकविंशतिर्यूपा भवन्तीति वचनात् । तस्य चैकादशिनीप्रकृतित्वादेवमुक्तम् । अत्र तिलचतुष्टयाधिकशताङ्गुलयः प्रक्रमः । तेन त्रिंशत् पदानीत्यादि दक्षिणोत्तरैकादशिन्यामुक्तः ॥ ८० ॥

**अथ प्राच्यैकादशिन्यां यूपार्थं वेदेः पूर्वार्धात् पदार्धव्यासमपच्छिद्य तत्पुरस्तात् प्राञ्चं दध्यात् । नात्राष्टाङ्गुलं विद्यते । न व्यतिषङ्गः ॥ ८१ ॥**

**अथेति** । प्राच्यैकादशिनीपक्षे वेदेः पूर्वार्धात् सार्धसप्ताङ्गुलव्यासमपच्छिद्य वेदेः पुरस्तात् पृष्ठ्यान्यायेन दध्यात् । तत्र च सर्वत्र वेदिसंस्काराः उद्धननादयः कर्तव्याः, "यावद्यूपं वेदिमुद्धन्ति" इति

वचनात् । अप्राच्यैकादशिन्याम् अष्टाङ्गुलाधिकस्य संयोजनं विद्यते, तद्विनापि वेद्यंस-योगसंभवाद् । दक्षिणोत्तरैकादशिन्यान्तु अधिकाष्टाङ्गुल-समयोजनं विना वेद्यंसयोरसंभवात् तदावश्यकम् । व्यतिषङ्गश्च न विद्यते । पशूनां व्यतिषङ्गः "सारस्वतीमुत्तरा"मित्यादिकः प्राच्यैका-दशिन्यां नास्ति । किन्तु आग्नेयप्रभृतीन् पशूनग्निष्टान् प्रभृति यूपेषु क्रमेण नियोजयेत् ॥ ८१ ॥

अथेति । महावेदेः पूर्वभागे यूपार्थं स्थापितं पञ्चशतद्वयाधिकसहस्राङ्गुलायत पदार्धन्यासमपच्छिद्य तत्पुरस्तात् प्राञ्चं दध्यात् । यावद् यूपं वेदिमुद्धन्तीति वचनात् । तत्रापि वेदिसंस्काराः क्रियन्ते । प्राची यूपपङ्क्तिः । नेति । अष्टाङ्गुलं न विद्यते । अथेमावुपस्तावानौ चतुरङ्गुलमात्रेण विप्रकृष्टौ स्यातामिति । नेति ॥ ८१ ॥

**यूपावटाः पदविष्कम्भाः ॥ ८२ ॥**

**यूपावटा** इति । अर्धपदेन परिलेखनम् । यूपावटा अर्धपदेन परि-लेखनेन पदविस्कम्भा भवन्ति ॥ ८२ ॥

यूपेति । अर्धपदेन परिलेखनम् ॥ ८२ ॥

**त्रिपदपरिणाहानि यूपोपराणीति ॥ ८३ ॥**

**त्रिपदेति** । यूपोपराणि यूपमूलानि त्रिपदपरिणाहानीति त्रिपद-विशालानि भवन्ति ॥ ८३ ॥

इति श्रीमदद्वैतविद्याचार्यसाग्निचित्यसर्वतोमुखातिरात्रसाग्निचित्याप्त-वाजपेययाजि**गोविन्ददीक्षित**वरनन्दनस्य, सर्वतन्त्रस्वतन्त्रसाग्निचित्यसर्व-पृष्ठाप्तोर्यामयाजि**श्रीयज्ञनारायणदीक्षिता**नुजस्य, तच्छिष्यतालब्धसमस्त-विद्यावैशद्यस्य, साग्निचित्याप्तवाजपेययाजि**श्रीव्यङ्कटेश्वरदीक्षितस्य** कृतिषु **बोधायनशुल्बमीमांसायां** प्रथमोऽध्यायः ॥

त्रिपदेति । उपराणि मूलानि ॥ ८३ ॥

[ इति प्रक्रमादिविशेषनिर्णयः । ]

इति बौधायनीयशुल्बसूत्रव्याख्यायां शुल्बदीपिकायां प्रथमोऽध्यायः ॥

# अथ द्वितीयोऽध्यायः

**अर्धाष्टमाः पुरुषाः प्रथमोऽग्निः। अर्धनवमा द्वितीयः। अर्धदशमास्तृतीयः। एवमुत्तरोत्तरः। विधाभ्यास ऐकशतविधात्। तदेतत् सप्तविधप्रभृत्येकशतविधान्तम्॥ १॥**

क्षेत्रादिमानोपायादीन् दर्शयित्वा सर्वाग्निसाधारण्येनाग्निधर्मानाह— **अर्धाष्टमा** इति। अर्धपुरुषा अष्टमो येषां ते अर्धाष्टमाः। सार्धसप्तपुरुषप्रमाणक्षेत्रः प्रथमोऽग्निश्चेतव्य इति इत्यर्थः।

नन्वत्र सार्धसप्तपुरुषप्रमाणः प्रथमोऽग्निरित्युच्यते। **कल्पसूत्रे** तु "षड्विधं वा सप्तविधं वा द्वादशविधं वा यावद्विधं वा चेष्यमाणो भवति" इत्युच्यते। तत्र षड्विधादिकथनं किं प्रथमाग्न्यभिप्रायम्? उत द्वितीयाद्यभिप्रायम्? नाद्य "अर्धाष्टमाः पुरुषाः प्रथमोऽग्नि"रित्येतत्सूत्रविरोधात्। न द्वितीयः सार्धसप्तपुरुषप्रमाणप्रथमाग्निचयनानन्तरं "न ज्यायांसं चित्वा कनीयांसं चिन्वीते"ति श्रुतिविरोधेन षड्विधसप्तविधयोरनुष्ठानायोगात्। द्वादशविधस्य वक्ष्यमाणपुरुषाभ्यासप्रकारेषु कदाऽप्यप्रसक्तेः। "यावद्विधं वे"त्येतच्चात्यन्तमनुपपन्नं "एकशत विधान्त"मिति सूत्रोक्तनियमविरोधात्। "अर्धाष्टमाः पुरुषाः प्रथमोऽग्निरि"त्युपक्रम्य तस्मात् सप्तविध एव प्रथमोऽग्निरित्युपसंहारविरोधाच्च। न सार्धसप्तपुरुषाग्निप्राथम्यकथनं सपक्षपुच्छाग्निविषयम्। षड्विधाद्यग्निस्तु अपक्षपुच्छ इति तस्य प्राथम्येऽपि न विरोधः। "न ज्यायांस"मिति श्रुतेः सपक्षपुच्छाग्निप्रकरणस्थत्वेन तद्विषयतया षड्विधादीनां द्वितीयादिभावेऽप्यविरोधः सावित्र-गार्हपत्याद्यग्नेरिव। एवं षड्विधं तदप्युपपन्नं सप्तविधानन्तरम् एकैकपुरुषाभ्यासे द्वादशविधः संभवत्येव। "एकशतविधान्त"मिति नियमस्य "अर्धाष्टमाः पुरुषाः प्रथमोऽग्नि"रित्युप-

क्रमानुरोधेन सपक्षपुच्छाग्निविषयतया "यावद्विधं वे"त्येतदप्युपपन्नतरमिति वाच्यम्। इहैवाग्रे सूत्रकारेण "नापक्षपुच्छः श्येनो विद्यत" इति तस्य सपक्षपुच्छतानियमस्य प्रतिपादयिष्यमाणत्वेन षड्विधादेरपि सपक्षपुच्छताया अवश्यवक्तव्यत्वेन पूर्वोक्तविरोधस्य षड्विधप्रभृति एकैकपुरुषाभ्यासे सार्धसप्तपुरुषप्रभृति एकैकविधाभ्यासः। एवं प्रमाणाभावेन द्वादशविधासंभवस्यापक्षपुच्छविषयत्वासंभवेनावश्यं सपक्षपुच्छविषयतया पूर्वोक्तानुपपत्तेश्च तादवस्थ्यात्। न च श्रुतौ "व्याममात्रौ पक्षौ च पुच्छश्च भवती"त्युक्त्या "अरत्निना पक्षौ द्राघीयांसौ भवत" इत्युक्त्या सार्धसप्तविध एव सपक्षपुच्छः न षड्विधो नापि सप्तविध एवेति न पूर्वविरोध इति शङ्क्यम। षड्विधादावपि सार्धद्विपुरुषेण सार्धत्रिपुरुषेण वा आत्मादिमानं कृत्वा पुरुषत्रयेण पक्षपुच्छे मीयमाने अवशिष्टेन श्रुत्यर्थनिर्वाहोपपत्तेः। न च श्येनाग्निमानकथनोपसंहारवाक्ये "एवं सारत्निप्रादेशः सप्तविधः संपद्यत" इति वक्ष्यमाणत्वेन षड्विधादिकथनस्यापक्षपुच्छविषयत्वमेवोचितम्, न तु सपक्षपुच्छविषयत्वमिति वाच्यम्। षड्विधादिकमपि पुरुषप्रमाणह्रासेन सार्धसप्तविधं कृत्वा स्वाभाविकात्मशिरः प्रभृतिषु विनियोगसंभवात्।

न चैवं सपक्षपुच्छस्य व्याममात्रत्वानुपपत्तिरिति वाच्यम्। सार्धनवमादौ पुरुषप्रमाणाधिक्येऽपि व्याममात्रत्वाद्युपपत्तिश्चेत् न्यूनत्वेऽपि तदुपपत्तेः। न च अर्धनवमादौ "यदन्यत्कृते"रित्यादिवचनबलाद् व्याममात्रत्वाद्युपपत्तिरिति वाच्यम्। इहापि "पुरुषमात्रेण वेणुना सपक्षपुच्छ" मित्याद्युपदिश्य षड्विधं सप्तविधं वेत्यनुक्रमणस्य प्रमाणस्य सद्भावात्। उक्तं चाप**स्तम्बाचार्यैः**—सपक्षपुच्छेषु विधाभ्यासेऽपचये च विधासप्तमकरणीं पुरुषस्थानीयां कृत्वा निर्हरे"दिति[1]। तस्मात् पूर्वोक्तविरोध इति चेद्—

अत्रोच्यते—अर्धाष्टमाः पुरुषा अग्निरिति प्राथम्यकथनं सपक्षपुच्छविष-

१. आप. शु. सू. ८ मःखण्डः।

यम्। षड्विधस्तु अपक्षपुच्छ इति तस्य प्राथमिकत्वेऽपि न प्राथमिकोक्ति विरोधः। न च षड्विधस्यापि सपक्षपुच्छत्वमुक्तमिति वाच्यम्। तस्य हि सपक्षपुच्छत्वं सूत्रे सपक्षपुच्छमानमुपक्रम्य षड्विधादेरनुक्रमेण न (च ?) सौत्राग्निधर्मोपदेशं साधारणं कल्पयित्वोच्यते ? उत **तैत्तिरीया-** दिशाखागतं "व्याममात्रौ पक्षौ पुच्छं च भवती"त्यादिधर्मोपदेशं साधारणं कल्पयित्वोच्यते ? नाद्यः, द्वादशविधस्येव विकृतिभूतस्यापि षड्विधस्य मध्येऽनुक्रमणोपपत्त्या धर्मोपदेशसाधारण्यकल्पनायां प्रमाणा- भावात्। न द्वितीयः। तैत्तिरीयशाखादिगतधर्मोपदेशस्य सप्तविधश्येन- विषयत्वेन सर्वैर्वेदवादिभिरभ्युपेततया तत्साधारण्यकल्पनासंभवात्। उक्तं **चापस्तम्बाचार्यैः**—"एकविधप्रभृतीनां न पक्षपुच्छानि भवन्ति, सप्तविधवाक्यशेषत्वा"दिति[१]।

नन्वेवमपि षड्विधस्य सविकृतितयातिदेशतरधर्मवत्पक्षपुच्छं प्राप्नो- तीति चेन्न, प्रउग-कूर्मादाविव पक्षाद्यप्राप्तिसंभवात्। न च तत्र वाच- निकप्रउग-कूर्माकारबाधापत्त्या पक्षाद्यप्राप्तिः स्यादिति वाच्यम्। "एक विधप्रभृतीन् समचतुरश्रानेक आचार्या" इत्यनेन समचतुरश्राकारस्य विहिततया तद्बाधापत्त्या पक्षाद्यप्राप्तिसंभवात्, न चासप्तविधस्य पक्षपुच्छानि विद्यत इति वचनेन पक्षादिबाधाच्च।

ननूक्तरीत्या प्राथमिकविरोधाभावेऽपि षड्विधस्य विकृतितया प्रथम- तरमनुष्ठानासंभवेन द्वितीयादिभावस्य वक्तव्यतया "न ज्यायांस"मिति निषेधश्रुतिविरोधः पूर्वोक्त आपतेदिति चेन्न, नहि तस्य द्वितीयादिभावोऽङ्गी- क्रियते येन विरोधः स्यात्। किन्तु विहितस्य षड्विधादेः "न ज्यायांस"मिति निषेधश्रुतिविरोधः पूर्वोक्त आपतेदित्यनेन द्वितीयादिभावे निषिद्धे अनन्य- गत्या विकृतिभूतस्यापि पवमानेष्ट्यादिवत् प्रथममनुष्ठानम्। तथाच न कोऽपि विरोधः। न च षड्विधादेरपक्षपुच्छतया "न ज्यायांस"मिति निषेधस्य च सपक्षपुच्छविषयतया द्वितीयादिभावेऽपि न विरोध इति अनन्यगतिकत्वा-

---

१. आप. शु. सू. ८मः खण्डः।

भावात् प्राथम्याभ्युपगमो न युक्त इति वाच्यम्। "न ज्यायांस"मिति निषेधस्य सपक्षपुच्छापक्षपुच्छ (विषय ?) तयावश्यवक्तव्यत्वेन प्राथम्यस्यैव युक्तत्वात्। अन्यथा अपक्षपुच्छस्य प्रउग-कूर्मादिः कनीयसोऽपि द्वितीयादि-भावेनानुष्ठानं स्यात्।

यत्तु सार्धसप्तविधादारभ्य एकैकपुरुषाभ्यासे द्वादशविधस्य कदाप्य-प्रसक्तिरिति तन्न। "अरत्निना पक्षौ द्राघीयांसा"वित्यागम्यमानांशे पृथक्कृत्य एकैकपुरुषाभ्यासपरतया दशविध एव द्वादशविधोक्ति सम्भवात्।

यदपि वार्धाष्ट(माद् ?) यावद्विधोत्तरसम्भव इति तदपि न, उक्तेष्वेव एकशतान्तेषु यावद्विधोक्तिपर्यवसानसंभवात्।

यदपि वार्धाष्टमाः पुरुषा. प्रथमोऽग्निरित्युपक्रम्य तस्मात् सप्तविध एव प्रथमोऽग्निरित्युपसंहारस्य च विरोध इति तदपि न। तत्रापि "अरत्निना पक्षौ द्राघीयांसा"वित्यागम्यमानतयोच्यमानांशं पृथक्कृत्य सार्धसप्तविध एव सप्तविधोक्तिसम्भवात्। एतेन कल्पसूत्रगतसप्तविधग्रहणमपि व्याख्यातमिति सर्वमनवद्यम्।

एवं पृथक्कर्तव्याग्नेः. सार्धसप्तपुरुषप्रमाणक्षेत्रत्वमुक्त्वा अनन्तरम् अनुष्ठेययोर्द्वितीयतृतीययोः प्रमाणमाह—**अर्धनवमा** इति। अत्रापि पूर्व-वद् बहुव्रीहिः।

चतुर्थ प्रभृतीनां स्वस्वपूर्वापेक्षया एकैकपुरुषप्रमाणाधिक्यमाह—**एव-मुत्तरोत्तर** इति। चतुर्थपञ्चमादिरग्निः द्वितीयतृतीयवत् स्वस्वपूर्वा-पेक्षया एकैकपुरुषप्रमाणाधिक इत्यर्थः।

अयमभ्यासः कियत्पर्यन्त इत्यत आह—**विधाभ्यास** इति। विधी-यते मीयते तया अग्निक्षेत्रमिति विधा पुरुषः। पुरुषवृद्धिरेकोत्तरशतान्त-मित्यर्थः।

ननु सार्धसप्तविधप्रभृत्येकैकविधाभ्यासे सार्धैकशतविध एव सम्पद्यते, न त्वेकशतविध इत्यत आह—**तदेतदिति**। तदेतद्विधाभ्यासः (सार्ध ?) सप्तविधप्रभृत्येकशतविधान्तम्। श्रुत्युक्त्या गम्यमानांशस्तु अर्ध पुरुषः

सर्वेषु सप्तविधप्रभृतिष्वेकशतान्तेषु अविशिष्ट इति एकशतान्त निर्देश उपपन्न इति भावः ॥ १ ॥

अर्धाष्टमेति । सामान्यपरिभाषानन्तरमग्निधर्माः । अर्धपुरुषोऽष्टमो येषां ते अर्धाष्टमपुरुषाः । पुरुषशब्देन पञ्चारत्निना विंशत्यधिकशताङ्गुलेन वेणुना परिमितं क्षेत्रमुच्यते । तत्र चतुर्दशसहस्राणि चत्वारिंशतान्यङ्गुलयः पुरुषे सन्ति । एतत् पुरुषक्षेत्रं पञ्चदशभिर्हत्वा अर्धीकृत्य लक्षमष्टौसहस्राणाञ्चाङ्गुलयो अर्धाष्टमाः पुरुषाः प्रथमोऽग्निः । प्रथमाहारे कर्त्तव्योऽग्निः । प्रथमे प्रयोग अर्धाष्टमपुरुषपरिमितक्षेत्रोऽग्निः कर्त्तव्य इति । एवमुत्तरत्रापि । अर्धनवमा इति । द्वितीय आहारे कर्त्तव्योऽग्निः । अर्धदशमा इति । पूर्वेण व्याख्यातम् । एवमिति । विधीयत इति विधा पुरुषप्रमाणक्षेत्रम् । चतुर्थाहारप्रभृत्येवं पुरुषाभ्यास एकशतविधपर्यन्तम् । तदेतदिति । उक्तमग्निरूपं सप्तविधप्रभृत्येकशतविधान्तम् । न पूर्वत्र नोत्तरत्रेत्यर्थः । अथवा उत्तरपक्षार्थोऽयमनुवादः ॥ १ ॥

**अत ऊर्ध्वमेकशतविधानेव प्रत्याददीत ॥ २ ॥**

ननु एकशतविधाभ्यासानन्तरं कर्तव्ये क्रतावग्निरेव न प्राप्नोति । स हि न तावत् सप्तविधादिः । "न ज्यायांस"मिति श्रुतिविरोधात् । नाप्येकशतानन्तरविधाभ्याससहितः प्रमाणाभावादित्यत आह—**अत ऊर्ध्वमिति** । एवकार अप्यर्थे । एकशतविधाभ्यासानन्तरमपि एकशतविधान् कुर्यादित्यर्थः ॥ २ ॥

अत ऊर्ध्वमिति । चिनुयादित्यर्थः ॥ २ ॥

**अनग्निकान् वा यज्ञक्रतूनाहरेत् । अन्यत्राश्वमेधात् । एकविंशोऽग्निर्भवतीत्यश्वमेधस्याग्निना नित्यं संयोगात् ॥ ३ ॥**

इयता प्रबन्धेनाग्नेः परिमाणमुक्त्वाग्नेः सर्वक्रतुषु विकल्पमाह—**अनग्निकानिति** । नन्वयं विकल्प एवानुपपन्नः । तथाहि न तावत् प्रकृतौ ज्योतिष्टोमेनारभ्याधीतोऽग्नि निवेष्टुमिष्टे, तस्य प्राकरणिकोत्तरवेद्यविरोधात् । न च "अथातोऽग्निमग्निष्टोमेनानुयजन्ती"ति वाक्येन वा अग्नेरप्यग्निष्टोमसंबन्धोऽस्तीति वाच्यम् । "आनर्थक्यप्रतिहतानां विपरीतं बलाबल"मिति न्यायेन प्रकरणं बलीयस्तया साप्तदश्यन्यायेनाग्नेर्विकृतिगामित्वे अग्निष्टोमपदस्य विकृत्यग्निष्टोमपरत्वान्नापि विकृतिषु सर्वत्र

प्रकृतावभावेन चोदकाप्राप्तेरिति चेन्न। अग्नेरना (र ?) भ्याधीतेति चेन्न। अग्नेरना ( र ? ) भ्याधीतत्वेन प्रकृतिगामित्वाद् यत्तावदुक्तं प्रकृतेः प्राकरणिकोत्तरवेद्यविरोधादग्नेः साप्तदश्यन्यायेन विकृतिगामित्वमिति तन्न। साप्तदश्ये हि क्रतुसंबन्धस्य वाचनिकत्वाभावेन क्रत्वव्यभिचरतः सामिधेनीलिङ्गवशेन कल्प्यतया युक्तं तत्र विकृतिगामित्वम्। इह त्वग्नेरग्निष्टोमसंबन्धस्य वाचनिकत्वेन प्रकृतिसंबन्धस्यैवोचितत्वादुत्तरवेदेः पाक्षिकत्वेनापि प्रकरणोपपत्त्यानर्थक्याभावेनाग्निष्टोमश्रुतिबाधायोगात्। अग्निष्टोमशब्दैक्योपदेशिकाग्निष्टोमस्तोत्रसंस्थाकप्रकृतावेव मुख्यतया विकृतौ गौणत्वात्तस्मादस्ति प्रकृतावुत्तरवेद्या विकल्पतोऽग्निरतिदेशेनैवोक्थ्यादिषु अग्निप्राप्त्या "तमुक्थेने"त्यादि पुनर्वचनमनर्थकं स्यात्। न च तेष्वग्निनियमार्थं पुनर्वचनमिति वाच्यम्। "तमुक्थेने"ति वाक्यस्यानारभ्याधीताग्निप्रकरणगतस्य तत्तत्प्रकरणव्यवस्थितचोदकगणा(?)यावत्पाक्षिकप्राप्तिसापेक्षनियमपरत्वायोगादिति चेन्न। आष्टमिकन्यायेन विकृतिषु गुणकामाप्राप्तौ तत्प्राप्त्यर्थत्वेन पुनर्वचनोपपत्तेः। "श्येनचितं चिन्वीत स्वर्गकामः" इत्यादिगुणफलानामग्निप्रकरणगत (त्वे ?) न तत्प्राप्तिफलत्वकल्पनौचित्यात्। तस्मात्साद्यस्तु सारस्वतसत्रादावश्यकतयाऽग्नेरनुष्ठानेऽपि दार्शिकन्यायेन षोडशीवाजपेयादिषु चोदकप्राप्त्या सर्वक्रतुविकल्प एवाग्नेरिति भावः।

नन्वेवमुक्तन्यायेनाश्वमेधेऽप्यग्न्युत्तरवेद्योर्विकल्पः स्यादित्याशङ्क्य एकविंशोऽग्निर्भवती"ति श्रुत्या तत्राग्निर्नित्य एवेत्याह—**अन्यत्रेति** ॥ ३ ॥

अनग्निकानि:त। अत ऊर्ध्वमित्येव। किं सर्वत्र। नेत्याह। अन्यत्रेति ॥ ३ ॥

**अश्वमेधमप्राप्तश्चेदाहरेदत ऊर्ध्वं विधामभ्यस्येन्नेतरदाद्रियेत। अतीतश्चेदाहरेदाहृत्य कृतान्तादेव प्रत्याददीत ॥ ४ ॥**

नन्वत्र सूत्रे एकविंशतिविधः विंशतिविधानन्तरं कर्तव्य इति प्रतीयते, श्रुतौ चाश्वमेधस्य एकविंशतिविध एव नियतश्रुतः। तथा च श्रुतिस्मृत्योरनुग्रहाय विंशतिविधाग्निचयनानन्तरमेवाश्वमेधे कर्तव्यता प्राप्नोतीत्यत आह—**अश्वमेधमिति**। विंशतिविधानिबन्धनात् प्रागपि प्रायश्चि-

तद्रूपोऽन्यो वा यद्यश्वमेधः प्राप्तस्तदा एकविंशतिविधाग्निसहितमश्वमेधमनुतिष्ठेदित्यर्थः । नन्वेवं कथं श्रुतिस्मृत्योरनुग्रह इति चेन्न कथञ्चित् । तथाहि "औदुम्बरीं स्पृष्ट्वोद्गायेत्" "औदुम्बरी सर्वा वेष्टितव्ये"त्युदाहृत्य यस्याविरुद्धार्थत्वेऽपि व्रीहियवबृहद्रथन्तरग्रहणाग्रहणादिवद्विकल्पेन संभवति प्रत्यक्षश्रुतिविरोधेन स्मृतिमूलभूतश्रुत्यनुमानसंभवादिति व्यवस्थापितम् ।

नन्वेवं सति अश्वमेधानन्तरमनुष्ठीयमाने क्रतौ एकविंशत्यपेक्षया न्यूनविध एवाग्निः प्राप्नोति । तथा च "न ज्यायांस"मिति श्रुतिविरोध इत्यत आह—**अत ऊर्ध्वमिति** । एकविंशतिविधाभ्यासानन्तरं द्वाविंशतिप्रभृतिरेवानुष्ठेयः । नतु न्यूनविधः येनोक्तविरोधः स्यादित्यर्थः ।

नन्विदमत्यन्तानुपपन्नं द्वाविंशतिविधाद्यनुष्ठानानन्तरम् उक्तविरोधेन एकविंशतिविधानुष्ठानासंभवादित्यत आह । **अतीतञ्चेदिति** । एकविंशतिविधोऽतीतश्चेदपि तमेवाहरेद् उक्तश्रुतिबलादित्यर्थः । इयांस्तु विशेषः । अत्र "न ज्यायांस"मिति श्रुतिविरोधाभावेन द्वाविंशादिषु यदनन्तरमाश्वमेधिकोऽग्निरनुष्ठितस्तदनन्तरं तदूर्ध्वविधप्रभृतिरेवानुष्ठेय इति तदेतदाह—**आहृत्येति** । आहृत्य एकविंशतिविधमनुष्ठीय कृतनिर्मुक्तादूर्ध्वविधमेव पुनः प्रत्याददीत कुर्यादित्यर्थः ॥ ४ ॥

अश्वमेधमिति । अश्वमेध अप्राप्तश्चेद् विंशतिविधानग्नीनचित्वा अश्वमेधञ्चेदाहरेत् स ततः परमग्निं चिन्वानो द्वाविंशत्यादिविधमेव चिन्वीत नतु पूर्वविधान् । न ज्यायांसं चित्वा कनीयासं चिन्वीतेति ।

अतीतमिति । अतीतञ्चेदेकविंशतिविधादूर्ध्वमपि विधामभ्यस्य ततः पश्चादश्वमेधमाहरेत् । यथा त्रिंशद्विधाद् अन्ते तस्याप्यश्वमेधेऽग्निरेकविंश एव । ततः परन्तु पूर्वकृतान्तादारभ्यैकत्रिंशादिविधानेव चिन्वीतेति । पूर्वेषां कृतत्वात् । विधाभ्यासः कर्त्तव्य इत्युक्तम् ॥ ४ ॥

**कथमु खलु विधामभ्यसेत् । यदन्यत् प्रकृतेस्तत् पञ्चदश भागान् कृत्वा विधायां विधायां द्वौ द्वौ भागौ समस्येत् । ताभिरष्टमाभिरग्निं चिनुयात् ॥ ५ ॥**

ननु पूर्वोक्तोऽर्धनवमादिविधाभ्यास एवानुपपन्नः। चतुरश्रचयनादौ सार्धसप्तविधस्यैव वक्ष्यमाणविभज्यविनियोगेनावगम्यमानत्वादिति शङ्कते **कथम्विति**। न कथञ्चिदित्यर्थः।

पुरुषप्रमाणाधिक्येन सार्धसप्तविधत्वं सर्वत्राप्युपपन्नमित्यभिप्रायेण परिहरति **यदन्यदिति**। प्रकृतेः पञ्चारत्निपुरुषप्रमाणेन सार्धसप्तविधाद् यदन्यदवशिष्टं तत्पञ्चदशधा विभज्य एकैकस्मिन् पुरुषे भागद्वितयं दद्यात्। एवं सति अर्धनवमादयः सार्धसप्तविधाः सम्पन्नाः ॥ ५ ॥

तत्र प्रश्नपूर्वकं प्रकारकथनम्। कथम्विति। वक्ष्यमाणार्थगौरवात् शिष्याभिमुखीकरणार्थः प्रश्नः। यदन्यदिति। द्वितीयाहारेऽर्धनवमविधे यदन्यत् प्रकृतेरर्धाष्टमेभ्योऽधिकं पुरुषक्षेत्रं तस्याङ्गुलयश्चतुर्दशसहस्राणि चत्वारि शतानि। तत्पञ्चदशभिर्विभज्य लब्धं नवशतानि षष्टिश्चाङ्गुलयः। तद्द्विगुणा विधायां पुरुषाङ्गुलीषु समस्येत् संयोजयेत्। संयोज्य दृष्टा अङ्गुलयः षोडशसहस्राणि त्रीणि शतानि विंशतिश्च। ताः प्रमाणवेणोर्विंशतिशताङ्गुलीषु प्रक्षिप्य प्रकृतिवद् इष्टकाकरणमग्निमानञ्च कुर्यादित्यर्थः। एवमर्धदशमविधे अर्धाष्टभ्योऽधिकं द्वाभ्यां द्वाभ्यां पुरुषाभ्यां पुरुषाङ्गुलीर्हृत्वा पञ्चदशभिर्विभज्य लब्धं द्विगुणीकृत्य पुरुषाङ्गुलीषु संयोजयेत्। तत्र पुरुषाङ्गुलय अष्टादशसहस्राणि द्वे शते चत्वारिंशच्च। तस्य मूलं पञ्चत्रिंशच्छताङ्गुलस्तिलद्वयाधिकः पुरुषवेणुः। यो यत्राग्नौ पुरुषस्थानीयस्तस्य विंशतिशततमो भागो विहरण इष्टकाद्यासु च अङ्गुलिः कथ्यते। तिलश्च तस्य चतुस्त्रिंशः। तत्र श्लोकः :

खाकाशश्रुतिवेदैकाद् द्विगुणैः पुरुषर्हृतात्।
हरेत तिथिभिर्भागं तन्मूलं पुरुषो भवेत् ॥ इति ॥ ५ ॥

**ऊर्ध्वप्रमाणाभ्यासं जानोः पञ्चमस्य चतुर्विंशेनैवैके समामनन्ति। अथहैक एकविधप्रभृतीनपक्षपुच्छांश्चिन्वते। तन्नोपपद्यते पूर्वोत्तरविरोधात्। अथहैकेषां ब्राह्मणं भवति श्येनचिदग्नीनां पूर्वाततिरिति। अथापरेषां न ज्यायांसं चित्वा कनीयांसं चिन्वीत ॥ ६ ॥**

नवविधाद्यग्नेस्तिर्यक्प्रमाणवृद्धिमुक्त्वा ऊर्ध्वप्रमाणवृद्धिं दर्शयति—**ऊर्ध्वप्रमाणेति**। ऊर्ध्वप्रमाणाभ्यासम् अग्नेरूर्ध्वपरिमाणवृद्धिं जानोः पञ्च-

मभागस्य चतुर्विंशतिभागेनैवैक **आचार्याः** समामनन्ति वदन्तीत्यर्थः। एवञ्चादौ अनुष्ठीयमानस्याग्नेः वक्ष्यमाणोर्ध्वप्रमाणं जानुपञ्चमांशापेक्षया जानुपञ्चमांशचतुर्विंशतिभागेन तिर्यङ्मानवदुत्तरोत्तरवृद्धिः कर्तव्येत्यर्थः। एक इत्युक्त्या केषाञ्चिदाचार्याणामुक्तोर्ध्वप्रमाणवृद्धिर्नास्तीति गम्यते।

केषाञ्चिदाचार्याणां मतं दूषयति—**अथेहैक** इति। एके आचार्याः। **एकविधप्रभृतीनिति**। एकविधत्रिविधादीन्। अपक्षपुच्छांश्चिन्वते चेतव्यान् वदन्तीत्यर्थः। **तन्नेति**। एकविधप्रभृतीनामनुष्ठानं न संभवतीत्यर्थः। [1]**पूर्वापरेति**। पूर्वापराभ्यां ब्राह्मणाभ्यां विरोधादित्यर्थः।

तयोरेकं ब्राह्मणमुदाहरति—**अथ हैकेषामिति**।

अथापरं ब्राह्मणमुदाहरति—**अथापरेषामिति**। अथाभ्यां ब्राह्मणाभ्यां विरोधादेकविधप्रभृतीनामनुष्ठानं न सम्भवतीत्यर्थ इति केचिदाहुस्तदनुपपन्नम्। द्वयोर्विरोध इति वदन् वादी प्रष्टव्यो जायते किमेकविधप्रभृतीनां प्रथमतरमनुष्ठानं न सम्भवति श्येनत्वाभावेन प्रकृतित्वासम्भवात्? किं वा द्वितीयादिभावेन "न ज्यायांस"मिति श्रुतिविरोधादिति। नाद्यः एकविधप्रभृतीनां श्येनत्वनिषेधाभावात् प्रकृतित्वेन प्रथमतरमनुष्ठानसंभवात्। ननु "नापक्षपुच्छः श्येनो विद्यते" इति (२।८) वक्ष्यमाणत्वाच्छ्येनस्य सपक्षपुच्छताया आवश्यकत्वेन एकविधप्रभृतीनाञ्च पक्षपुच्छाद्यभावेन श्येनत्वासंभवः। न च एकस्मिन्नेव पुरुषे पक्षपुच्छादिकं संपादनीयमिति वाच्यम्। पुच्छपक्षयोः श्रुत्युपात्तव्याममात्रत्वाद्यनुपपत्तेरिति चेत्। सत्यम् एकविधप्रभृतीनां श्येनत्वाभावेन प्रकृतित्वाभावेऽपि प्रथमतरमनुष्ठानं संभवति। अनेन "अथैक एकविधप्रभृतीन् प्रउगादीन् ब्रुवते चतुरश्रानेक आचार्या" इति सूत्रेण (१) एकविधप्रभृतीनामनुष्ठानोपदेशानुपपत्तेः। न च तस्य परमतोपन्यासत्वेन उपपत्तेरिति वाच्यम्। "तस्य करण्या द्वादशेने"ति स्वयं करण्युपदेशानर्थक्यप्रसङ्गात्। किञ्च कल्पसूत्रगतषड्विध-

---

१. अत्र शु. दी. पाठभेदः।

कथनस्य अपक्षपुच्छसमचतुरश्राकारविषयत्वेन उक्तत्वात्। एकविध-प्रभृतीनामनुष्ठाने तदप्यनर्थकं स्यात्। तस्मादेकविधप्रभृतीनां प्रथमतर-मनुष्ठानं संभवति। नापि द्वितीयः "न ज्यायांस"मिति श्रुतेः सपक्षपुच्छाग्निविषयत्वेनाप्युपपत्तेस्तस्मात् तन्नोपपद्यत इत्येतत् नोपपद्यत इति चेत्—

अत्र ब्रूमः स्यादेतदेवं यद्येकविधप्रभृतीनाम् अनुष्ठानं निषिध्यते। किन्तु एकविधस्य प्रकृतित्वमात्रं निराक्रियते। केचिदाहुः—एकविध-सप्तविधयोः प्रकृतित्वमिति। तथाहि एकविधः प्रथमोऽग्निरित्यारभ्या-भ्यासस्यविहितत्वात् सप्तविधप्रभृत्यप्येकशतविधान्तं पृथक्करण्युपदेशात् एकविधस्यापि प्रकृतित्वमिति। तदयुक्तम्। "श्येनचिदग्नीनां पूर्वातिति" रिति श्येनचित एव सर्वाग्नीन् प्रति प्रकृतित्वात् एकविधस्य श्येन-त्वाभावेन प्रकृतित्वासंभवात्। ननु सर्वाग्न्यपेक्षया श्येनचित एव प्रकृतित्वे सावित्रादीनामग्नित्वाविशेषात् तान् प्रत्यपि प्रकृतित्वं स्यात्। विषम उपन्यासः। सावित्राग्नौ कृत्स्नाङ्गोपदेशात् श्येनचिदुपदिष्टानां सावित्र-होमोखासंभरणाद्यङ्गानामपेक्षणात् सावित्रादीनां श्येनचित्प्रकृतिकत्व-प्रसक्तिरेव नास्ति। एकविधे तु कृत्स्नाङ्गोपदेशाभावात् श्येनचिदुपदिष्टा-ङ्गानामपेक्षणादेतत्प्रकृतिकत्वं युक्तमेव। यदि करण्युपदेशविधानादेव प्रकृतित्वमुच्यते तदा प्रउगकूर्मादावपि पृथक्करण्युपदेशात्तेषामपि प्रकृतित्वं स्यात्। किञ्च सावित्राग्निवदेव यद्येकविधस्यापि प्रकृतित्वं स्यात् तदा तद्वदेव ज्यायसश्चयनानन्तरं कनीयसोऽप्येकविधस्यानुष्ठानं स्यात्। ननु ज्यायसश्चयनानन्तरं सावित्राग्नेः कनीयसोऽनुष्ठानं नास्ति इति चेन्न। सर्वतोमुखे हि पूर्वमग्निं विधाय इतरस्थलेषु सावित्राग्निविधानेन ज्याय-सश्चयनानन्तरकालकर्तव्यत्वं सावित्राग्नेरवगम्यते। तथा च प्रथमं वा पश्चाद् वा यदा कदाचित्कर्तव्यत्वं सावित्राग्नेरुपपद्यत एव। तथा चोक्तं द्वैधसूत्रे—"अथातः सर्वतोमुखं व्याख्यास्यामश्चिन्वीत सर्वतोमुखोऽग्नि-रिति बोधायनो न चिन्वीतेति शालीकिरत्रोह स्माह मौद्गल्यः—पूर्वं-

स्मिन्नेवाग्निचय इतरेषु सावित्राः स्यु"रिति। अत एव "अथेमे अग्नि-चया" इत्यस्मिन् सूत्रे सावित्रादीनामनुपदेशात् "न ज्यायांस"मिति निषेध इष्टकाचिताग्निविषय इति ज्ञायते। तस्मात् सप्तविधस्यैव प्रकृतित्वमिति सिद्धम्।

अयमत्र सूत्रार्थः—एके आचार्या एकविधप्रभृतीनपक्षपुच्छांश्चिन्वते, प्रकृतित्वेन तेषामनुष्ठानं वदन्ति। तन्नोपपद्यते। पूर्वोत्तरविरोधात्। पूर्वशब्दः प्रकृतिपरः। उत्तरशब्दो विकृतिपरः। प्रकृतिविकृतिप्रतिपादिकायाः "श्येनचिदग्नीनामा"दि श्रुतेर्विरोधादेकविधस्य प्रकृतित्वमयुक्तमिति।

प्रकृतिविकृतिप्रतिपादकं ब्राह्मणमुदाहरति—**अथेहैकेषामिति**। केषाञ्चित् शाखिनामित्यर्थः। श्येनचिदग्नीनामिष्टकचितीनां पूर्वाततिः प्रकृतिरित्यर्थः। एवमेकविधस्य प्रकृतित्वं निराकृत्याग्निचयने नियम-माह—**अथापरेषामिति**। ज्यायांसमधिकप्रमाणक्षेत्राग्निं चित्वा कनीयासं न्यूनविधप्रमाणकक्षेत्रमग्निं न चिन्वीतेत्यर्थः ॥ ६ ॥

ऊर्ध्वमिति। जानोः पञ्चमस्य अर्धचतुर्दशतिलाधिकषडङ्गुलस्य चतुर्विं-शांशेन तिलनवकेन चतुर्थाहारप्रभृति प्रत्याहरन्ति। तिलनवकेन ऊर्ध्वप्रमाणा-भ्यासमेके समामनन्ति। अथेति पक्षव्यवच्छेदार्थः। हेत्यवधारणार्थः। एके आचार्या एकविधः प्रथमोऽग्निर्द्विविधो द्वितीय इत्यनेनैव क्रमेण पक्षपुच्छरहितांश्चिन्वते। नार्धाष्टमादीन्। तदेकीयमतं दूषयितुमाह—तन्नेति। यदेकविधादिचयनं कैश्चिदुक्तं तन्न युज्यते। कथम्? पूर्वोत्तरविरोधात्। पूर्वस्मिन् काले कर्त्तव्यं कर्म येन वाक्येन विधीयते तत्पूर्वं वाक्यम्। एवमुत्तरं वाक्यम्। एवं पूर्वोत्तरकर्मविषयैरनेक-शाखाधीतैर्बहुभिर्वाक्यैर्विरोधात्। बहुभिर्ह्येकोऽर्थः प्रतिपाद्यते। तस्मादविरोधेन भवितव्यम्। तानि वाक्यानि स्वयमेवोदाहरति—अथेति। अथ शब्दः सम्बन्धार्थः। उक्तस्यार्थविरोधस्योदाहरणानीति। हेत्यवधारणे। छन्दश्चिदादीनां मध्ये श्येनचिदेव पूर्वा ततिः। विस्तार्यन्तेऽस्यां धर्मा इति विततिरित्यर्थः। एतदुक्तं भवति। युञ्जान इत्यादयो मन्त्राः, सावित्राणि जुहोतीत्यादि ब्राह्मणानि च श्येनचित एवेति अनेन प्रकृतिरेव पूर्वं कर्त्तव्येत्युक्तं भवति। यथा द्वादशाहोऽहर्गणानां प्रकृतिरित्यत्राहर्गणेभ्यः पूर्वं द्वादशाहस्यानुष्ठानम्।

अथ अन्येतु सामर्थ्याद् विकृतेः प्रथमानुष्ठानं होतृक्रमादीन् अनुसृत्य

वचनात् पशु-चातुर्म्मास्यादीनां प्रथमानुष्ठानम्। तस्माद् यत्र सामर्थ्यं वचनं वा नास्ति तत्र प्रकृतेः प्रथमानुष्ठानम्।

अथापरेषामिति। ब्राह्मणं भवतीत्येव। अथ शब्दः पूर्ववत्। न ज्यायांसं वृद्धतरं बृहत्तरमग्निं चित्वा कनीयांसमल्पतरं न चिन्वीत ॥ ६ ॥

**अथास्माकम्। पक्षी भवति। नह्यपक्षः पतितुमर्हति। अरत्निना पक्षौ द्राघीयांसौ भवतः। तस्मात्पक्षप्रवयांसि वयांसि। व्याममात्रौ पक्षौ च पुच्छश्च भवतीति ॥ ७ ॥**

श्येनचितः सपक्षपुच्छतानियमप्रतिपादकं **तैत्तिरीयब्राह्मण**मुदाहरति—**अथास्माकमिति**। पक्षी भवति अग्निरयं पक्षी पक्षवान् भवतीत्यर्थः। विहितं सपक्षत्वं हेतुमुखेन स्तौति—**नह्यपक्ष** इति। पतितुम् उत्पतितुं नार्हति न शक्नोतीत्यर्थः। अत एव "वयसां वा एष प्रतिमया चीयत" इत्यत्र उत्पततां छाययेत्यर्थं इति व्याख्यात**माचार्यैः**। पक्षयोर्दैर्घ्यं विदधाति—**अरत्निनेति**। अरत्निना द्राघीयांसौ दीर्घतरौ वक्ष्यमाणप्रमाणौ पक्षौ भवतीत्यर्थः। पक्षयोर्द्राघीयस्तां स्तौति—**तस्मादिति**। पक्षयोः प्रवयांसि प्रभूतानि अधिकानि वयांसि पक्षिणः इत्यर्थः। पक्षपुच्छपरिमाणं दर्शयति—**व्याममात्राविति**। व्याममात्रौ पुरुषमात्रौ पक्षौ भवतः। पुच्छश्च व्याममात्रमिति उभयत्रापि विपरिणामः ॥ ७ ॥

अथेति। ब्राह्मणं भवतीत्येव। अस्माकञ्चास्यां शाखायामित्यर्थः।

पक्षीति। पक्षीत्युपलक्षणत्वात् पक्षवान् पुच्छवान्। तद्रहितः पतितुं नार्हति। तस्मादरत्निनां पक्षौ दीर्घतरौ भवतः। यस्मादेवं तस्मात् पक्षाभ्यां वृद्धतराणि। व्याममात्रौ पञ्चारत्निमात्रौ पक्षौ च पुच्छञ्च भवति।

एवं विरोधप्रतिपादनार्थं ब्राह्मणवाक्यान्युदाहृत्य आद्योत्तरं भङ्ग्या एकविधादीनामनुष्ठानं प्रकृतिभूतस्य सप्तविधश्येनचित एव प्रथमानुष्ठानञ्च उदाहरति ॥ ७ ॥

**नापक्षपुच्छः श्येनो विद्यते। न चासप्तविधस्य पक्षपुच्छानि विद्यन्ते। न च सप्तविधं चित्वैकविधप्रसङ्गः। तस्मात् सप्तविध एव प्रथमोऽग्निः ॥ ८ ॥**

श्येनस्य सपक्षपुच्छत्वं नियमइत्याह—**नापक्षेति**। सपक्षपुच्छ एव श्येनः, नान्य इत्यर्थः। सप्तविधादर्वाचीनस्यैकविधादेः सपक्षपुच्छतां निरा-

करोति--**न चेति**। आसप्तविधस्य एकविधादेः पक्षपुच्छानि न विद्यन्ते। एकविधादीनां सपक्षपुच्छतया अनुष्ठानं नास्तीत्यर्थः। ननु आसप्तविधस्येत्युक्तेरष्टविधादीनां सपक्षपुच्छतानिषेधः किं न स्यादिति चेन्न। द्वितीयादिभावेनानुष्ठेयानां श्येन-कङ्काकारतया कर्त्तव्यत्वावगमात् तेषामपि सपक्षपुच्छताया आवश्यकत्वात् निषेधस्य च एकविधादिविषयत्वोपपत्तेः। अन्यथा कङ्कादीनां न कदाप्यनुष्ठानं स्यात्। विस्पष्टश्च आसप्तविधग्रहणस्य एकविधादिमात्रविषयत्वम्। एकविधप्रभृतीनां न पक्षपुच्छानि भवन्ति सप्तविधवाक्यशेषत्वात् श्रुतिविप्रतिषेधाच्चेत्यापस्तम्बाचार्यवचनादवसीयते। **न चेति**। सप्तविधचयनानन्तरमेकविधादेरनुष्ठानं नास्ति। "न ज्यायांस"मिति श्रुतिविरोधादिति भावः। एकविधादीनां प्रथमप्रयोगस्तु निषेधश्रुतिविरोधाभावात्। "समचतुरश्रानेक आचार्यास्तस्य करण्या द्वादशेनेष्टकाः कारयेत्, तासामर्ध्याः पाद्याश्चे"त्युपदेशाच्चोपपद्यते। इयता प्रबन्धेन उपपादितमर्थमुपसंहरति--**तस्मादिति**। सप्तविध एव प्रथमोऽग्निः। प्रथमं प्रयोक्तव्य इत्यर्थः। यथा "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम" इत्यत्राग्निष्टोमस्य प्राथम्येऽपि उपदेशबलात् प्रथमानुष्ठानम्। एवं सप्तविधस्य प्राथम्येऽपि उपदेशबलात् प्रथमानुष्ठानं संभवतीति द्रष्टव्यम्॥ ८॥

नापक्षपुच्छ इति। पक्षपुच्छरहितस्य श्येनचितोऽभावात्, पक्षपुच्छानां सप्तविधवाक्यशेषत्वादेकविधादीनां सपक्षपुच्छत्वे व्याममात्रौ पक्षौ च पुच्छञ्च भवतीत्यनेनैकविधादिश्रुतिविरोधात्, सप्तविधं चित्वा एकविधचयने न ज्यायांसं चित्वा कनीयांसं चिन्वीतेति प्रतिषेधेन प्रसङ्गाभावात् सर्वप्रकृतिभूतः सप्तविधश्येनोऽग्निरेव पूर्वं चेतव्यः। एवं विरोधादेकविधादीनां निवृत्तिरेवापतिता। कल्पे षड्विधः सप्तविध इत्यादिना षड्विधानामपि प्रकृतित्वमुक्तम्। तत्रापि पक्षपुच्छरहित एव षड्विधोऽग्निः पूर्वोक्तहेतुनोपन्यासात्॥ ८॥

**भेदान् वर्जयेत्। अधरोत्तरयोः पार्श्वसन्धानं भेदा इत्युपदिशन्ति। तदग्न्यन्तेषु न विद्यन्ते। न स्रक्तिपार्श्वयोः॥ ९॥**

अथाग्निधर्मानाह--**भेदानिति**। भेदशब्दार्थं स्वयमेवाह--**अधरो-**

**त्तरयोरिति**। अग्न्यन्तेषु का गतिरित्यत आह—**तदिति** । तद्भेदान् वर्जयेदित्येतत् अग्निपर्यन्तेषु न विद्यते। तत्रावर्जनीयत्वाद् भेदस्य। तथा—**नेति**। साररथचक्रचयनें नाभिमध्ये स्रक्तीनां सङ्गमे पार्श्वे च, भेदान् वर्जयेदित्येतत् न विद्यते। तत्राप्यवर्जनोयत्वाद् भेदानामिति भावः ॥ ९ ॥

अथ अग्निधर्मानाह—भेदानिति। भेदस्वरूपं स्वयमेवाह—अधरोत्तरयोरिति। किं सर्वत्र ? नेत्याह—तदग्न्यन्तेष्विति। अग्न्यन्तेषु अग्निपर्यन्तेषु। अन्तस्यावर्जनीयत्वादिति भावः। नेति। स्रक्तिपार्श्वयोः। साररथचक्रचयने नाभिमध्ये स्रक्तीनामेव-सङ्गमः। तयोरवर्जनीयत्वादिति भावः ॥ ९ ॥

**साहस्रं चिन्वीत प्रथमं चिन्वान इति। पञ्चमायां वा चितौ संख्यां पूरयेत्। द्विशतांश्चेच्चिकीर्षेत् पञ्चचोडाभिर्नाकसदः समानसङ्ख्यं प्रतीयात् ॥ १० ॥**

प्रथमाग्निचयने इष्टकासंख्यामाह—**साहस्रमिति**। विज्ञायत इति शेषः। ननु प्रथमचयने सहस्रमिष्टकाः पञ्चप्रस्ताराः प्रति प्रस्तारं द्विशतमिष्टकाः, पञ्चम्यां चितौ पञ्चचोडाभिर्नाकसद्भिः सह पञ्चाधिकद्विशतमिष्टकाः, आहत्य पञ्चाधिकसहस्रम्। तथा च "साहस्रं चिन्वीत प्रथमं चिन्वान" इति च श्रुतिविरोध इत्यत आह—**पञ्चमायां वेति**। पञ्चमायां चितावपि। वा शब्दोऽप्यर्थे। द्विशतं संख्यां पूरयेदित्यर्थः। इत्येतदुक्तमर्थं स्वयमेव विवृणोति—**द्विशता-निति**। द्विशतमिष्टका उपधातुं यदीच्छेत् तदा पञ्चचोडाभिर्नाकसदः। तृतीयार्थे द्वितोया। नाकसद्भिः समानसंख्यं द्विशतसंख्यं प्रतीयात् जानीयात् ॥ १० ॥

साहस्रमिति। विज्ञायत इति शेषः। प्रथममग्निं चिन्वानः सहस्रेष्टकापरिमित-मग्निं चिन्वीत। तत्र पञ्च चितयो भवन्ति। "तस्मात् पञ्चचितीकश्चेतव्य" इत्यादि वचनात् पञ्चभिश्चयनैरेव भवितव्यम्। तत्र समविभागस्य न्याय्यत्वादेष द्विशतः प्रस्तार इति। द्विशतानामुपधानदर्शनात् पञ्चसु प्रस्तारेषु प्रतिप्रस्तारं द्विशता इष्टका भवन्ति। तत्र मन्त्राणामपर्याप्तत्वाद् गणावृत्तिभिर्वा यावन्तो मन्त्राः सम्भवन्ति

तावतीरिष्टका उपधाय शेषा इष्टका इष्टकामन्त्रयोरिष्टका व्यतिरेक इति न्यायेन द्वैधोक्तमार्गेण गणाद्यावृत्त्या वा उपधेयाः। पञ्चमायां चितौ मन्त्राणां भूयस्त्वान्मन्त्र व्यतिरेक अक्ताः शर्करा इति न्यायेनोपधानम्।

पञ्चमायामिति। एवं वा तत्र मन्त्राणामपर्याप्तत्वाद् यावत् सिद्धैर्मन्त्रैः पञ्चलोकंपृणाभिश्चोपधाय शेषाः पञ्चमायां चितावुपदध्यात्। तत्रापीष्टकाव्यतिरेके लोकंपृणाभिर्गणावृत्तिभिर्वा उपधानं कर्त्तव्यम्। तत्र पञ्चमीव्यतिरिक्तासु पञ्चभिर्लोकंपृणाभिर्यावत्य इष्टकाः सम्भवन्ति तावतीर्गणयित्वा भेदपरिहारेण अग्निक्षेत्रपरिमितमिष्टकाः कार्याः। पञ्चमायां चितौ पूर्वासु चितिषु उपहितशिष्टानां भेदपरिहारेण कल्पनम्। आचार्येण अस्मिन् पक्षे करणानुपदेशाद् आपस्तम्बादिभिरनुक्तत्वाच्च पूर्वैर्व्याख्यातृभिर्दिङ्मात्रमुक्तम्।

द्विशतानामिति। समष्ट्यभिप्रायेण नपुंसकत्वम्। द्विशतप्रस्तारपक्षेऽयं विशेषः। पञ्चचोडा अयं पुरो हरिकेश इत्युपर्युपधेया अर्धोच्छ्राया इष्टकाः। राज्ञ्यसीति पञ्च नाकसदस्तावदुच्छ्रायास्तासामधस्तादुपधेयाः। ता दश भवन्ति। द्विशतपूरणार्थमिष्टकागणनायां पञ्चेति विद्यात्।

पञ्चमायां वा चितावित्यस्मिन् पक्षे भेदेन गणयेदित्यर्थः। समानसंख्यं द्वे द्वे एकीकृत्य गणयेत्॥ १०॥

**पशुधर्मो ह वा अग्निर्यथा ह वै पशोर्दक्षिणेषामस्थ्नां यद् दक्षिणं पार्श्वं तदुत्तरेषामुत्तरं यदुत्तरेषां दक्षिणं तद्दक्षिणेषामुत्तरं यदर्वाक्चोर्ध्वञ्च तत्समानम्। एवमिष्टकानां रूपाण्युपदध्यात्॥ ११॥**

अग्निः पशुसमानाकारस्तदेवाह—**पश्विति**। यथा पशोः प्राङ्मुखस्य सतः। **दक्षिणेषामिति**। दक्षिणपार्श्वस्थानामस्थ्नां यद्दक्षिणमग्रं तदुत्तरेषामुत्तराग्रमिति यावत्। तत्तादृश्यमित्यर्थः। उत्तरपार्श्वस्थानां वामपार्श्वस्थानामस्थ्नां यदुत्तरमग्रं तद्दक्षिणपार्श्वस्थाग्रसदृशमित्यर्थः। यदुत्तरेषां दक्षिणं मूलं तत्तुल्यं दक्षिणेषामुत्तरं मूलमित्यर्थः। यदवाक् अधः प्रदेशः पश्चाद्भागः, ऊर्ध्वं पूर्वप्रदेशः, तदुभयं सदृशमित्यर्थः। तथैवाग्निः कर्तव्य इति यावत्। **एवमिति**। इष्टकानां रूपमेवमापाद्योपदध्यात्। पश्चात् स्थित्यायेन तुल्यन्यायापत्या (?) पार्श्वद्वये प्राक् प्रत्यक् चोपदध्यादित्यर्थः॥ ११॥

दक्षिणोत्तरपार्श्वयोरिष्टकानां समानरूपप्रतिपादनार्थं ब्राह्मणान्तरमाह—पश्चिति। तत्समानमिति। तत् सदृशम्। अस्थ्यभिप्रायेण नपुंसकत्वं। यद्वाक् पश्चाद् भागः। ऊर्ध्वञ्च पूर्वभागः। तत् समानम् तदुभयं सदृशं भवति। एवमिष्टकानां रूपाण्युपदध्यात् एवमिष्टकाः कुर्यादित्युक्तं ब्राह्मणे। तस्यार्थमाह या दक्षिणावृतो लेखा (२।१२ सू०) इत्यादिना। तथा चापस्तम्बः—सर्वान् वर्णान् इष्टकानां कुर्यादिति लेखाधिकारो भवतीति। आचार्येण लेखाधिकारस्य पशुत्वेनोक्तत्वात् सर्वान् वर्णान् इष्टकानां कुर्यादिति पशुधर्मत्वमुक्तं वेदितव्यम् ॥ ११ ॥

**या दक्षिणावृतो लेखास्ता दक्षिणत उपदध्यात्। सव्यावृत उत्तरतः। ऋजुलेखाः पश्चात्पुरस्ताच्च भवन्ति। त्र्यालिखिता मध्ये ॥ १२ ॥**

ब्राह्मणे सर्वान् वर्णानिष्टकानां कुर्यादित्युक्तं तस्यार्थमाह—**या दक्षिणेति**। इष्टकास्तु या (इ?) दक्षिणमावर्तते सव्यमारभ्य दक्षिणं प्रति चक्ररूपेणावर्तते लेखा इति तद्वत्य इष्टकाः लक्ष्यन्ते। दक्षिणावृत-लेखायुक्ता इष्टका दक्षिणत उपदध्यादिति यावत्। एवं दक्षिणमारभ्य सव्यमावर्तन्ते या लेखास्तद्युक्ता इष्टका उत्तरत उपदध्यात्। या इष्टका ऋजुलेखायुक्तास्ताः पश्चात् पुरस्ताच्च। एते च यथा भवति तथोपदध्या-दित्यर्थः। तिस्र आभिमुख्येन लिखितास्त्र्यालिखिताः, तादृशलेखायुक्ता मध्ये अग्निमध्ये उपदध्यात्। यद्यपीष्टकाकरणे एवं गुणा इष्टकाः कर्तव्या इति नोक्तम् तथापि लोके प्रायेण इष्टकाकारिणां परिमार्जनवशादेव रेखाः सम्भवन्ति। तासामुपधाने स्थानविशेषनियम उक्तः। एवञ्च रेखासम्भ-वस्य प्रायिकत्वात् कल्पसूत्रेऽनुक्तत्वाच्च लेखाधिकारोऽयं वैकल्पिक इति द्रष्टव्यम् ॥ १२ ॥

या दक्षिणेति। सव्यपार्श्वादारभ्य दक्षिणपार्श्वं प्रति चक्ररूपेणावृता दक्षिण-वृल्लेखा। सव्यहस्तेन परिमृष्टेति यावत्। सव्येति। तद्विपरीताः सव्यावृतः। लेखा-नामुपधानासम्भवात् तद्वत्य इष्टका लक्ष्यन्ते। दक्षिणत उपदध्यात् दक्षिणपार्श्वं उपदध्यात्। एवमुत्तरतः। ऋज्विति। ऋजुलेखा अकुटिललेखा अग्नेः पश्चाद् भागे पूर्वभागे च। त्र्यालिखितेति। मध्ये तिस्र आभिमुख्येन या लिखिता लेखास्ताः त्र्यालिखिताः। ता अग्नेर्मध्य उपदध्यात्। एवंगुणा इष्टकाः कार्या इत्यनुक्त्वा

या दक्षिणावृत इति लोक इष्टकाकारिणां प्रसिद्धमनूद्य देशविधानात् लोके च लेखाधिकारस्य प्रायिकत्वात् कल्पेऽनुक्तत्वाच्च लेखाधिकारो विकल्पते। लेखाकरणपक्ष अग्निक्षेत्रं पञ्चधा विभज्य प्रोक्षणदेशवद् दिक्सम्बद्धलेखायुक्तास्तेषूपदध्यात् ॥ १२ ॥

**अथ या विशयस्था यथा ह वै पशोः पृष्ठवंशो नैवैकस्मिन् पार्श्वे व्यतिरेकेण वर्त्तते नैवापरस्मिन् एवं तासामुपधानं प्रतीयात् ॥ १३ ॥**

**अथेति**। अथ शब्दो लेखाधिकारव्यवच्छेदार्थः। लेखाधिकारो निवृत्त इत्यर्थः। या इष्टका विषयस्य मध्यस्थितास्तासामुपधानमेवं प्रतीयादित्युत्तरेणान्वयः। यथा पशोः पृष्ठवंश इति शेषः। शालामध्यवंश इव पुच्छादारभ्य मुखपर्यन्तं मध्य एव वर्तते। न त्वन्यतरपार्श्वे। एवकारद्वयेन मध्य एव वर्तते, पार्श्वभूतो न वर्तत इति दृढ़ीकृतम्। एवं पृष्ठवंशरीत्या तासां मध्यस्थेष्टकानामुपधानं जानीयादित्यर्थः। एवञ्च "सर्वान् वर्णान् इष्टकानां कुर्या"दिति वेदवाक्यस्य सर्वाणि रूपाणि ( इत्यस्य ? ) मध्यास्थिसदृश्यः काश्चिदिष्टकाः, पार्श्वास्थिसदृश्यः काश्चित् कर्तव्येत्यग्नेः पशुधर्मत्वकथनपरत्वेन व्याख्यानमाचार्यैः कृतं वेदितव्यम् ॥ १३ ॥

अथेति। अथ शब्दः पूर्वस्माद् व्यवच्छेदार्थः। व्यवच्छेदश्च लेखाधिकारो नास्तीति। विशयस्था मध्यस्थाः। यस्मादारभ्य पक्षपुच्छस्था इष्टका विविधं शेरत इति विशयाः। पुच्छादारभ्यान्तान्मध्यरेखायां या इष्टका उपधेयास्ता विशयस्था इत्यर्थः। यथा ह वै पशोः पृष्ठवंशः शालाया मध्यवंश इव। जाघनीप्रभृति आमुखादेकस्मिन् पार्श्वे व्यतिरेकेण उदग्दक्षिणादिपार्श्वभूतो नैव वर्त्तते। उभाभ्यामेवकाराभ्यां कदाचिदपि न वर्त्तत इति सूचयति। एवमिति। तथेत्यर्थः। तासामुपधानं मध्यदेशवर्त्ति-अस्थितुल्यतामापाद्योक्तं भवति। पुच्छापरान्तमध्यादारभ्य आशिरोऽग्रमध्यादुन्नीयते। अग्नेः पशुधर्मविधानार्थं ब्राह्मणान्तरमुक्तम्। तदुदाहृतम्। तत्र अस्थिसादृश्यमुक्तम् ॥ १३ ॥

**अथापि ब्राह्मणं भवति प्रजापतिर्वा अथर्वाग्निरेव दध्यङ्ङाथर्वणस्तस्येष्टका अस्थानीतीति ॥ १४ ॥**

इष्टकानामग्निसादृश्यप्रतिपादनादग्नेः पशुधर्मत्वकथनपरं ब्राह्मण-मुदाहरति—**अथापोति**। प्रजापतिरथर्वा नामोऽग्निः। आथर्वणः अथर्वपुत्रो दध्यङ् नाम। तस्याग्ने. इष्टका अस्थीनि। एवं पशुधर्मत्वमुक्तम्। तथा चाग्निः पशुवत् तुलयोपमपार्श्वः पृष्ठवंशे सदृशमध्येष्टकश्चेतव्य इत्युक्तं भवति ॥ १४ ॥

स्वशाखायाञ्चेष्टकानां अस्थिसादृश्यमात्रवचनमस्तीत्याह—अथापीति। अथ शब्दोऽस्माकमिति द्योतनार्थः। अपि शब्दः समुच्चय एव। न परकीयमेव अस्मदीयमप्यस्तीत्यर्थः। किं तत्? अथर्वा नाम प्रजाप्रतिरग्निरेव मान्य अथर्वणः पुत्रो दध्यङ्। तस्य दधीच अस्थानी अस्थीनि इष्टका इति ब्राह्मणस्यार्थः। तस्मात् सादृश्यवाक्योपन्याससामर्थ्याद् विधिं प्रकल्प्य इष्टकानामस्थिसादृश्यमापाद्योपदध्यादिति शेषः ॥ १४ ॥

**बहिस्तन्वं चेच्चिनुयात्तन्वोपप्लवमध्यैरात्मोपप्लवमध्यान्त्संदध्यात्। प्राञ्चमेनं चिनुत इति विज्ञायते** ॥ १५ ॥

अग्निचयने नियमस्तावदाह—**बहिस्तन्वमिति**। तन्वशब्दोऽङ्गपरः। अग्नयो हि द्विविधाः अन्तस्तन्वोबहिस्तन्वश्चेति। बहिस्तन्वाः श्येनकङ्कालजद्रोणकूर्मादयः। बहिर्भूतान्यङ्गानि यस्य सः बहिस्तन्वः। तादृशमग्निं यदि चिनुयात्तदा तन्वोपप्लवमध्यैः तन्वानां शिरःपक्षप्रभृतीनां मध्यैरात्ममध्यान् संयोजयेत्। शिरसः पश्चिमान्तमध्यैरात्मप्राच्यान्तमध्यो योजयेत्। एवं पक्षपुच्छादिष्वपि। इदञ्चाकृतिवचनात् सिद्धम्। एकस्यां दिशि कतमदङ्गं संदध्यादित्यत आह—**प्राञ्चमेनमिति**। प्राङ्मुखं प्राक्शिरसमेनमग्निं चिनुते। एवञ्च इदमङ्गं अत्र संदध्यात्। अविज्ञातमुखादीनां प्रउगादीनां मुखादिपरिज्ञानार्थमिदमुक्तम् ॥ १५ ॥

तन्वशब्दोऽङ्गपर्यायः। अङ्गानि चात्र शिरः पक्ष-पुच्छ-पाद त्सर्वोष्ठानि श्येनकङ्कालजद्रोणकूर्मादीनां बहिर्भूतान्यङ्गानि। ( त्सरुश्चतुरस्र द्रोणे, पादाः कङ्ककूर्मयोः, परिमण्डलद्रोणे कूर्मे च ओष्ठ इति टिप्पण्याम् )। रथचक्रश्मशानादीनामन्तर्भूतानि।

तत्र यदि बहिस्तन्वमग्निं चिनुयात् तन्वोपप्लवमध्यैः, तन्वानामुपप्लवमध्यास्तन्वोपप्लवमध्याः, उपप्लवशब्दोऽन्तपर्यायः, तेषां मध्यैरात्मोपप्लवानामात्मोपप्लवमध्यान् पार्श्वानां मध्यान् संदध्यात्। आत्मनः पूर्वपार्श्वान्तमध्यं शिरसः पश्चिमान्तमध्येन संयोजयेत्। एवं पक्षादिषु द्रष्टव्यम्। कङ्कपादयोस्तु तावदन्तरालविधानात् सान्तरालपदद्वयमध्यं पुच्छान्तमध्ये भवति। अन्यथासम्भवात्। कूर्मे तु प्रध्यपच्छेदमध्यान् पादान्तमध्यैः श्लेषयेत्। एतत् सर्वमाकृतिवचनेनैव सिद्धं विस्पष्टार्थमुच्यते। कस्यां दिशि कतमदङ्गं संदध्यादित्यत आह—प्राञ्चमेनमिति। प्राञ्चं प्राक्शिरसमेनमग्निं चिनुत इति। अनेनेदमस्मिन् प्रदेशे संदध्यादिति विस्पष्टार्थं विज्ञायते। अविज्ञातमुखानां प्रउगादीनां मुखादिप्रदेशपरिज्ञानमेव प्रयोजनं प्रयोक्तुरुपस्थानाद्यर्थम्॥ १५॥

**अमृन्मयोभिरनिष्टकाभिर्न सङ्ख्यां पूरयेत्॥ १६॥**

हिरण्येष्टकाभिः सहस्रसङ्ख्यापूरणे प्राप्ते तन्निवृत्त्यर्थमाह—**अमृन्मयोभिरिति**। अमृद्विकारेष्टकाभिः सहस्रादिसङ्ख्यां न पूरयेदित्यर्थः। ननु कुम्भेष्टकानां मृन्मयत्वात् ताभिः सङ्ख्या (पूरणं प्राप्तमिति चेन्न तादृशस्थले ?) पूरकानामिष्टकार्थोक्तोर्ध्वप्रमाणादिलक्षणाभावेन लोकप्रसिद्ध्यभावेन च इष्टकात्वाभावात्॥ १६॥

अमृन्मयीभिर्हिरण्येष्टकाभिः। मृन्मयत्वे सत्यपि कुम्भेष्टकाभिर्न संख्यां सहस्रादिकां पूरयेत्। लोकप्रसिद्धाभिरेव मृन्मयीभिरिष्टकाभिः संख्यां पूरयेदित्युक्तं भवति। लोकप्रसिद्ध्यैव मृन्मयत्वे सिद्धे मृन्मयग्रहणं स्व (स ?) प्रयोजनञ्च। यज्ञे प्रारब्ध उत्तमे प्रस्तारे प्राप्ते पूर्वस्यां रात्रौ चोरेण द्विषद्भिर्वा इष्टका अपहृताः स्युः सद्यः पुनरिष्टकाकरणस्य अशक्यत्वाद् आरब्धस्यावश्यपरिसमाप्यत्वात् प्रतिनिधिप्राप्तौ त्रपुभिः शिलाभिर्वा सादृश्यात् तथेष्टकाः कारयित्वोपधानं स्यात्। तन्निवृत्त्यर्थमस्यामप्यवस्थायां अमृन्मय्यः संख्यायां नान्तर्भवेयुः॥ १६॥

**इष्टकचिद्वान्योऽग्निः पशुचिदन्य इत्येतस्माद् ब्राह्मणात्। पशुर्वा एष यदग्निर्योनिः खलु वा एषा पशोर्विक्रियत इति यत् प्राचीनमैष्टकाद् यजुः क्रियत इति च॥ १७॥**

मृन्मयेनैव सङ्ख्यापूरणे ब्राह्मणमुदाहरति—**इष्टकचिद्वेति**। यत इतिवत् (?) साभिमर्शनस्य पशुचिदं (?) नित्येन स्तवनार्थं प्रसिद्धोऽग्निरिष्टकचिदित्यनूद्यते। ततश्च इष्टकाभिरेव प्रसिद्धोऽग्निश्चेतव्य इत्यस्माद्

ब्राह्मणादवगम्यते । अमृन्मयत्वे च इष्टकचित्त्वं व्याहन्येत । इष्टकाभिरेव चित इष्टकचित्त्वात् । अग्नेः पशुधर्मत्वे मृन्मयीभिरेवेष्टकाभिः संख्यापूरणे ब्राह्मणमुदाहरति--**पशुर्वैति** । अपस्योपधानविधिविशेषोऽयमर्थवादः । अयमग्निः पशुधर्मत्वात् पशुः । अस्य पशुरूपस्याग्नेः एषा पुस्करपर्णरूपयोनिः इष्टकोपधानात् ( पूर्वंयजुषा कृतेन रुक्मोपधाने तयोन्येनर्हेण विकृती क्रियते तत्परिहारार्थमपस्योपधाने कृते योन्यर्हरेत्त ) एव सिद्धं भवतीत्यर्थः । पुष्करपर्णस्य उपधानं प्रशंसन्ति । योनेर्वा अग्नेः पुष्करपर्णमिति ब्राह्मणादवगम्यते ॥ १७ ॥

अस्य ( २।१६ ) प्रतिषेधस्य हेतुरूपेण श्रुतिं दर्शयन्नाह—इष्टकेति । अग्निहोत्रस्य वत्साभिमर्शनस्यार्थवादः । इष्टकया चित एकोऽग्निः पशुना चित अन्योऽग्निरित्येतस्माद् अन्यार्थवादविषयब्राह्मणलिङ्गाद् इष्टकाभिरेव चिन्वीत न द्रव्यान्तरेणापीत्यत्र प्रसिद्धश्चयनाग्निरनूद्यतेऽभिमर्शनेन । पशुचितमेनमग्निं कुरुत इति ज्ञापनार्थम् । अनेन ब्राह्मणेन इष्टकाभिरेवेत्यत्र स्वशाखायाञ्चास्ति लिङ्गमिति प्रतिपादितं भवति । अन्यच्च । योऽग्निरेष पशुधर्मत्वादभेदेन पशुधर्म इत्युच्यते । योनिरुत्पत्तिस्थानम् । एषा योनिः पशोर्विक्रियते विविधं क्रियते । कथम् ? यत्प्राचीनं यस्मात् प्राचीनं पूर्वमैष्टकात् इष्टकासम्बन्धात् चयनाद् यदिष्टकानां यजुर्मन्त्रवत् कर्म क्रियते दर्भस्तम्भोपधानकर्षणादि । अत्रैष्टकात् पूर्वमित्यनेन ऐष्टक एवाग्निरुपधातुं शक्यते । च शब्दः समुच्चयार्थः । इदञ्च लिङ्गमिति । अत्र यत् प्राचीनमित्यादिना लिङ्गदर्शनेन इष्टकचित्त्वे सिद्धे पशुधर्मत्वञ्चाग्नेः स्वशाखायामस्ति इति दर्शयितुं पशुर्वा एष इत्याद्युदाहृतम् ॥१७॥

**लोकबाधीनि द्रव्याण्यवटेषूपदध्यात्** ॥ १८ ॥

इष्टकोपधानात् प्रागेव पुरुषशिरः प्रभृतीनां कल्पोक्तप्रकारेण उपधाने क्रियमाणे ता(वद् ?)क्वचिदौन्नत्यं च स्यात् । ततश्चेष्टकोपधानं कर्तुं न शक्यत इति आशङ्क्याह--**लोकबाधीनीति** । लोकबाधीनि पुरुषशिरः उलूखलमुसलादीनि नित्यकारिणि (?) इष्टकोपधानविघ्नानि अवटेषु गर्त्तेषूपदध्यादित्यर्थः ॥ १८ ॥

इष्टकानां स्थानबाधीनि उलूखलपशुशिरःप्रभृतीन्यवटेषु गर्त्तेषूपदध्यात् । इष्टका अपसार्योलूखलादिद्रव्यस्योपधित्सितस्य स्थान इष्टका अपनीय अवटं

खात्वा तत्रोपधाय समां भूमिं कृत्वा अपनीता इष्टकाः स्थाप्याः । अवकाः ( ? ) स्वयमातृण्णाश्चोत्तरास्वपि चितिषु दृष्टत्वात् सर्वत्र सन्धिषूपदध्यात् ।। १८ ।।

**मण्डलमृषभं विकर्णीमितीष्टकासु लक्ष्माणि प्रतीयात् ।।१९।।**

मण्डलेष्टका उपदधाति ऋषभेष्टका उपदधाति विकर्णीमुपदधातीत्यादिविधानेन मण्डलाद्याकारतया इष्टकाकरणे प्राप्ते तन्निवृत्त्यर्थमाह—**मण्डलमिति** । इष्टकाया मध्ये मण्डलाकारतया लेखां लिखेत् सा मण्डलेष्टकेत्युच्यते । एवं वृषभाकारतया लिखेत् । एवं विकर्णाकारतया लिखेत् । एवं रूपेण इष्टकासु लक्षणानि चिह्नानि कुर्यात् ।। १९ ।।

इतिरेवमित्यर्थे । मण्डलेष्टकामुपदधाति ऋषभमुपदधाति, विकर्णीमुपदधाति इत्येवं यत्र श्रूयते तत्र इष्टकासु लक्ष्माणि चिह्नानि प्रतीयात् । इष्टकानां मण्डलाकृतिविधानमिति न जानीयात् । चतुरस्राभिरित्यादिवचनविरोधात् । तत्र तिसृषु मण्डलाकारं लिखेत् । पञ्चसु ऋषभाकारम् । एकस्यां विकर्णस्त्रीरूपं अर्धचन्द्राकृतिं वा लिखेत् ।। १९ ।।

**इष्टकामन्त्रयोरिष्टकाव्यतिरेके लोकंपृणाः संपद्यन्ते परिमाणाभावात् । अतीतानेवेष्टकागणानत्रोपदध्यात् ।। २० ।।**

**इष्टकेति** । इष्टकामन्त्रयोर्मध्ये इष्टकाव्यतिरेके इष्टकातिरेके लोकंपृणाः संपद्यन्ते । कुतः लोकंपृणानां भावात् ।

अयमर्थः—तत्तत्प्रस्तारोक्तमन्त्रोपधानानन्तरं यदि काश्चिदतिरिक्ताः स्युस्तदा अतिरिक्तासु इष्टकासु लोकंपृणाभिरुपधानं कुर्यात् ।

इष्टकातिरेके पक्षान्तरमाह—**अतीतानेवेति** । तत्र इष्टकाधिक्ये अतीतानपस्यादिगणानुपधाय संख्यां पूरयेत् । एवकारो वार्थकः ।। २० ।।

ता इष्टकामन्त्रा अवधेया मन्त्रप्रकरणपठिता आचार्येणोक्ताश्च । इष्टकानां मन्त्राणां मध्ये इष्टकाव्यतिरेके इष्टकाधिक्ये प्रथमे प्रस्तारे शतमष्टषष्टिश्च मन्त्रा द्रष्टव्याः । तापश्चिदादीनां मन्त्राणां विनियोगान्तरे पञ्चषष्टिरिति । यद्वा त्रिंशत् पञ्चत्रिंशद्वा इष्टका मन्त्रेभ्योऽतिरिच्यन्ते ता लोकंपृणाः संपद्यन्ते । कुतः ? इयत्य एव लोकंपृणा इति परिमाणाभावात् । ननु पञ्च लोकंपृणा इति वक्ष्यति । कथं परिमाणाभावः ? सत्यम् । पञ्चैवेति न तस्यार्थः । द्वैधोक्तमार्गेण

गणावृत्तौ द्विशताश्चेदित्यस्मिन् पक्षे पञ्चमायां चितौ च अवश्यं पञ्चोपधेया इति तस्यार्थः। अनुष्टुभानुचरतीति वचनात्। तस्मात् प्राणः सर्वाण्यङ्गान्यनुचरतीति अर्थवादाच्च। द्वितीये प्रस्तारे शतमष्टत्रिंशच्चातिरिक्ताः। तृतीये पञ्चदशातिरिक्ताः। चतुर्थे षोडशाधिकं सप्तदशाधिकं वा शतम्। पञ्चमे नेष्टकातिरेक उत्तमायां पूरणत्वेऽतिरिच्यन्ते। तत्राथोदोचीभिरिति दर्शनात् स्वकल्पोक्तमार्गेण लोकंपृणाभिरेव पूरणम्। द्वैधोक्तमार्गेण वा गणावृत्त्योपधानम्। न संकलितोपधानम्।

अत्र एतस्मिन् काले लोकंपृणानामुपधानकाले अतीतानेवेष्टकागणानपस्याश्विनीदिश्याक्ष्णयास्तोभीयासपत्नादीनुपदध्यात्। अथवा कल्पे अपानभृद्भिश्चितिराप्यते पुरुषेण वालखिल्याभिर्व्युष्टीभिर्नक्षत्रेष्टकाभिश्चितिराप्यते इति वचनात्। अतीतानुपधानकाले विस्मृतानिष्टकागणान् एतस्मिन् काले उपदध्यात्। अस्मिन् पक्षेऽत्रेति शब्दोऽनर्थकः। कल्प आप्यत इति वचनेनान्यगणापानभृदादिभिरपि पूरणं सूचयति। तत्र पुरुषेण चितिराप्यत इति वचनात् पुरुषो वय इत्यस्यैवावृत्तिः। अन्यथेतरेष्विव वयस्याभिरित्येवावक्ष्यत्॥ २०॥

**पञ्च लोकंपृणाः॥ २१॥**

अस्मिन्नपि पक्षे पञ्च लोकंपृणावश्यमुपधेया इत्याह--**पञ्चेति**॥२१॥

सर्वप्रकारेस्वपि पूरणे पञ्च। लोकंपृणाः पञ्च अवश्यमुपदध्यादित्यर्थः॥ २१॥

**मन्त्रव्यतिरेकेऽक्ताः शर्कराः सन्धिषूपदध्यात्॥ २२॥**

**मन्त्रव्यतिरेक** इति। मन्त्राधिक्ये अधिकैर्मन्त्रैरिष्टकासन्धिषु घृतसिक्ताः शर्करा उपदध्यादित्यर्थः॥ २२॥

द्विशतप्रस्तारपक्षे पञ्चमे तेजो घृतमिति वाक्यशेषाद् घृताक्ताः शर्करा ऋतव्यासु सगराद्यैर्मन्त्रैः पौर्णमास्यन्तैः शतं विंशतिसंयुक्ताः सन्धिषु इष्टकाविवरेषु उपदध्यात्। प्रतितारकपक्षे द्वे द्वे भवतः॥ २२॥

**प्राचीरुपदधाति प्रतीचीरुपदधातीति गणेषु रीतिवादः। प्राचीमुपदधाति प्रतीचीमुपदधातीति कर्तृमुखवादः। पुरस्तादन्याः प्रतीचीरुपदधाति पश्चादन्याः प्राचीरित्यपवर्गवादः। चतुरश्रास्वेवैतदुपपद्यते॥ २३॥**

**प्राचीरिति**। कल्पसूत्रश्रुतौ प्राचीरुपदधाति प्रतीचीरुपदधातीति

यत्र श्रूयते तत्र तेषु गणेषु रीतेर्वादः, श्रेण्या वादः अभिधानं, प्रागपवर्गां प्रत्यगपवर्गां च रीतिं समापयेदित्यर्थः। इदमुपलक्षणम्। उदीचीरुपदधाति दक्षिणा उपदधातीत्यत्रापि उदगपवर्गां दक्षिणापवर्गाञ्च रीतिं समापयेदिति द्रष्टव्यम्। **प्राचोरिति**। इष्टकायाः प्राङ्मुखत्वाद्यसम्भवात् कर्त्तुः प्राङ्मुखत्वाद्यभिप्रायेण अयं व्यपदेशः। **पुरस्तादन्या** इति। नक्षत्रेष्टकासु पुरस्तादन्याः प्रतीचीरुपदधातीति अंसादारभ्य श्रोणीपर्यन्तं प्रत्यगपवर्गा उपधेयाः, पश्चादन्याः प्राचीरिति श्रोणेरारभ्यांसपर्यन्तं प्रागपवर्गा उपधेयाः। न त्विह रीतिर्विवक्षिता।

**चतुरश्रास्विति**। एतत्प्रागुक्तमंसश्रोण्यादिविशेषमुपधानं चतुरश्रास्वेव चितिषु उपपद्यते न तु रथचक्रादिषु (गण) श्रोण्यादिविभागस्य अस्पष्टत्वात् गौण्या वृत्त्या संपद्यत इत्यर्थः॥ २३॥

प्राचीरुपदधाति प्रतीचीरुपदधातीति कल्पे श्रुतौ वा यत्र श्रूयते अपस्यादिषूपलक्षणत्वात्, उदीचीर्दक्षिणा इति च यत्र श्रूयते, तत्रायमर्थः—तेषु गणेषु रीतेर्वादः श्रेण्या वादः अभिधानम्। रीतिशब्देन प्रसिद्धा अकुटिला गतिरुच्यते। प्रागपवर्गा इत्युक्तं भवति। प्राचीमिति। अस्यां शाखायामुदाहृतरूपस्योभयस्याभावादर्थवादरूपेण ग्रहणम्। अस्य च प्रदर्शनार्थत्वात् पञ्चैकैकामित्यादिषु प्राङ्मुख इत्यादि चयनकर्त्तुश्चोदन भवति। तत्र प्राङ्मुखत्वादेरिष्टकाया असम्भवादुपधानकर्त्तुरित्युक्तम्।

पुरस्तादन्या इति। नक्षत्रेष्टकासु अंसादारभ्य आश्रोणे रोहिण्याद्या विशाखान्ताः प्रत्यगपवर्गाः। पश्चादन्या इति। श्रोण्या आरभ्य अंसाद् अनुराधाद्या अपभरण्यन्ताः प्रागपवर्गाः। तत्र अपवर्गवादो न रीतिवादः। आरम्भावसानस्थानवचनात् तदवश्यं संपाद्यं कुटिलतायान्तु दोषः। चतुरश्रास्विति। अनन्तरोक्तनक्षत्रेष्टकासु। अंसश्रोणिविशिष्टं विधानं चतुरस्रासु चितिष्वेवोपपद्यते। अन्यत्र रथचक्रादिषु गौण्या वृत्त्या सम्पद्यत इत्यर्थः॥ २३॥

[ इति अग्नीनां विशेषधर्मकथनम्। ]

**न खण्डामुपदध्यात्। न भिन्नामुपदध्यात्। न जीर्णामुपदध्यात्। न कृष्णामुपदध्यात्। न लक्ष्माणमुपदध्यात्॥२४॥**

अग्निधर्मानुक्त्वा इष्टकाधर्मानाह—**न खण्डामिति**। ( खण्डां वा

स्यादिति वा ) चतुरश्रकृतामिष्टकां भित्वा तत्संपादितेष्टकां नोपदध्या-दित्यर्थः । **न भिन्नामिति** । भिन्नां रेखाकारतया संयुक्तां स्फुटितामिष्टकां नोपदध्यात् । **न जीर्णामिति** । न जीर्णां चिरकालसंपादिताम् । अत एव "यद्युवै संवत्सरभृतं दीर्घोध्वाजिरिति नाद्रियत" इति उख्यस्य संवत्सरभरण-पक्षे उपकल्पनं निषिद्धम् । **न कृष्णामिति** । कृष्णां पाकाधिक्येन न्यून-तया वा नीलवर्णाम् । न त्वेकदेशनीलां पाकानन्तरीयकस्य एकदेशनैल्यस्य अपरिहरणीयत्वात् । कृष्णामित्युपलक्षणं लोहितव्यतिरिक्तश्वेतादियुक्तामपि नोपदध्यात् । लोहितपचनायैः पचन्तीत्या**पस्तम्ब**वचनात् । **न लक्ष्मा-मिति** । लक्ष्मां छान्दसत्वान्न दोषः । लक्ष्मणां शोषणसमये दारुपाषाणा-दिना चिह्नितां नोपदध्यादित्यर्थः ॥ २४ ॥

अथेष्टकाधर्माः—न खण्डेति । वाश्यादिना संतक्ष्य पादेष्टकादिमापाद्य नोप-दध्यात् । तत्र भिन्नप्रतिषेधादेवमुक्तम् । न भिन्नेति । द्विधाभूतां पुनः सन्धायैकीभूतां नोपदध्यात् । न जीर्णेति । एकदेशजीर्णां किञ्चिद्विशिष्टामपि नोपदध्यात् । न कृष्णेति । उत्तरदेशे कृष्णापि कृष्णैव । यथा सर्वो रोहित इत्यत्र एकदेशरोहितापेक्षया तद्विशेषणत्वम् । न लक्ष्माणेति । शोषणकाले काष्ठपाषाणादिना अङ्किताम् । निर्मथ्येन लोहिनीः पचन्तीति वचनादिष्टकासु अतीवव्यतिरिक्तश्वेतश्यावादिवर्णा अपि वर्जनीयाः ॥ २४ ॥

**न स्वयमातृण्णां स्वयंचितावुपदध्यात् ॥ २५ ॥**

इष्टकास्वरूपनिविष्टानखण्डादिधर्मानुक्त्वा स्वयमातृण्णानपिधाय-कत्वाख्यमुपधानमुखेनेष्टकाविनिवेशितं धर्ममाह—**न स्वयमातृण्णा-मिति** । स्वत एव संपन्नच्छिद्रा शर्करा स्वयमातृण्णा । अग्नौ हि तिस्रः स्वयमातृण्णा उपधेयाः । एका हिरण्मयपुरुषोपधानानन्तरं मृन्मयेष्ट-कोपधानात् पूर्वमग्निमध्ये उपधेया । द्वितीया द्वितीयप्रस्तारोपधाना-नन्तरमग्निमध्येष्टकारन्ध्रोपर्युपधेया । तृतीया पञ्चमप्रस्तारसमाप्तावग्निमध्य एवेष्टकारन्ध्रोपर्युपधेया । ताश्चोपधानकाले इष्टकाभिर्यथा न पिधीयन्ते तथोपदध्यादिति भावः । इष्टकानामुपधानकाले स्वयमातृण्णानपिधायकत्वं प्रथमस्वयमातृण्णोपर्युपधेयाग्निमध्ये इष्टकाया आध्यर्धिद्वयरूपेणान्यथा वा

रन्ध्रान्तः स्वयमातृण्णाकत्वेनोपधाने द्वितीयप्रस्तारादावेवं मध्यरन्ध्रान्तं पिधानोपायेनोपधाने सिध्यतीति द्रष्टव्यम्। ननु तृतीयस्याः स्वयमातृण्णायाः सर्वप्रस्तारसमाप्तावुपधेयत्वेनेष्टकाभिरपिधानप्रसक्त्यभावात् कथं तन्निषेध इत्यत आह—**स्वयं चिताविति**। इष्टकायां स्वयंचित्त्वावस्थायां ताभिः स्वयमातृण्णान् नापिदध्यादित्यर्थः। एवञ्च स्वयंचितावित्युक्त्या प्रथमद्वितीयस्वयमातृण्णापिधायकत्वमेव प्रसक्तमिष्टकानां निषिध्यत इति नानुपपत्तिरिति त(ा)न्मुखेन प्रथमद्वितीयस्वयमातृण्णानपिधायकत्वमेवेष्टकाधर्मे विधीयत इति भावः॥ २५॥

न स्वयमिति। तृतीयस्याः स्वयमातृण्णायाः प्रस्तारसमाप्तावुपधेयत्वात् पूर्वयोरयं धर्मः स्वयंचितौ स्वयमातृण्णावत्यां चिताविष्टकया नापिदध्यात्। यथा सन्धौ भवति तथेष्टकयोर्मध्ये इत्यर्थः॥ २५॥

**ऊर्ध्वप्रमाणमिष्टकानां जानोः पञ्चमेन कारयेत्॥ २६॥**

अग्निगार्हपत्यधिष्ण्येष्टकानां साधारण्येन ऊर्ध्वप्रमाणमाह—**ऊर्ध्वेति**। इष्टकानामूर्ध्वप्रमाणं जानोः पञ्चमेन कारयेत्॥ २६॥

ऊर्ध्वमिति। इष्टकानां गार्हपत्यधिष्ण्येष्टकाभिः सर्वासामपृथग्विधानाद् इष्टकाग्रहणाच्च॥ २६॥

**अर्धेन नाकसदां पञ्चचोडानाञ्च॥ २७॥**

**अर्धेनेति**। पूर्वोक्तोर्ध्वपरिमाणार्धेन नाकसदां पञ्च चोडानां करणमित्यर्थः॥ २७॥

अर्धेनेति। पञ्चमार्धेन॥ २७॥

**यच्छोषपाकाभ्यां प्रतिह्रसेत पुरीषेण तत्संपूरयेत् पुरीषस्यानियतपरिमाणत्वात्॥ २८॥**

**यच्छोषपाकाभ्यामिति**। यदि इष्टकारूपद्रव्यं शोषपाकाभ्यां प्रतिह्रसेत् न्यूनं भवेत्तदिष्टकारूपं पुरीषेण यावदाम्नातप्रमाणं पूरयेदित्यर्थः। पुरीषस्यानियतपरिमाणत्वात्॥ २८॥

यच्छोषेति। यच्छोषपाकाभ्याम् उपलक्षणत्वात् कालेन वा प्रतिह्रसेत उक्तप्रमाणाद्धीयते पुरीषेण तत्सम्पूरयेत्। पुरीषस्यानियतपरिमाणत्वात्। परिमाण-

नियतवचनाभावात् । न केवलं विवरेष्वेव निम्नोन्नतपरिहारार्थे जान्वादिप्रमाणाविरोधेन पुरीषोपधानम् । तस्मान्मांसेन इत्यर्थवादेन शोषपाकाभ्यां ह्रासवचनेन । उक्तानि प्रमाणानि करणीनामेव नेष्टकानामित्युक्तं भवति ॥ २८ ॥

[ इति इष्टकाधर्मकथनम् । ]

**व्यायाममात्री भवतीति गार्हपत्यचितेर्विज्ञायते ॥ २९ ॥**

इष्टकाधर्मानुक्त्वा गार्हपत्याग्निपरिमाणप्रतिपादिकां श्रुतिमाह—**व्यायाममात्रीति** । गार्हपत्यचयनस्य व्यायाममात्री वेदिर्भवतीत्यर्थः । एवं चतुररत्निर्व्यायाम इत्युक्तत्वात् चतुररत्निप्रमाणेन सर्वतो गार्हपत्याग्नेरायतनं कुर्यादित्यर्थः ॥ २९ ॥

व्यायामेति । चतुररत्निर्व्यायामः कल्प एतेनैव व्यायसः प्रक्रमानित्यस्योपलक्षणत्वात् । व्यायाममात्राद् गार्हपत्यपरिमाणात् प्राग्वंशिकमाहवनीयपरिमाणं पदचतुष्टयं परित्यज्य शिष्टानि षट्त्रिंशदङ्गुलानि प्राग्वंशस्य पूर्वापरप्रक्रमप्रमाणेन षोडशधा विभज्य सपादमङ्गुलद्वयं प्रक्रमे प्रक्षिप्य प्राग्वंशमानकाले तेन प्रक्रमस्थानीयेन षोडशप्रक्रमायाममित्यादिना मित्वा पश्चाद्भागे षष्ट्यङ्गुलं सञ्चरमवशिष्य ततः पुरस्तात् षष्ट्यङ्गुलविष्कम्भपरिमण्डलं गार्हपत्यायतनं कृत्वा तस्य पुरस्तात् चतुश्चत्वारिंशच्छताङ्गुलेन प्रमाणेन शङ्कुं निहत्य ततः षण्णवत्यङ्गुलायामां वेदिं कृत्वा ततः पुरस्तात् चतुररत्न्यायामञ्च समचतुरस्रमाहवनीयं कृत्वा दीक्षादिवसेषु मध्येऽग्निं निधाय चयनकाले अथैनमग्निम् इत्यादि एवं कृते प्रकृतिसिद्धयोः पूर्वापरयोः सञ्चरयोर्वेद्याश्च सङ्कोचो न भवति । आहवनीयोऽप्यायतनमध्ये निहितो भवति ॥ २६ ॥

**चतुरश्रेत्येकेषाम् । परिमण्डलेत्येकेषाम् ॥ ३० ॥**

गार्हपत्यस्यायतनभेदावाह—**चतुरश्रेति** । **परिमण्डलेति च** । इदमायतनं केषाञ्चिदाचार्याणां पक्षे चतुरश्रम्, केषांचित्तु परिमण्डलम् ॥ ३० ॥

गार्हपत्यचितेः सर्वाग्नीनामङ्गत्वात् परिभाषाध्याय उच्यते चतुरस्रेति । श्रुतिरिति शेषः । परिमण्डल इति । पूर्ववत् । परिमण्डलपक्षे व्यायामार्धेन परिमण्डलकरणम् । तत्र चतुररत्न्यायामः ॥ ३० ॥

**चतुरश्रं सप्तधा विभज्य तिरश्चीं त्रेधा विभजेत् । अपरस्मिन् प्रस्तार उदीचीरुपदधाति । समचतुरश्राश्चेदुपदध्यात् ॥ ३१ ॥**

चतुरश्रपक्षे इष्टकाकरणप्रकारमाह—**चतुरश्रमिति**। चतुरश्रं दक्षिणमारभ्य उदगपवर्गं सप्तधा विभज्य प्रत्यगारभ्य प्रागपवर्गं त्रेधा विभजेत्। एवञ्च प्रागायताः सप्तरीतय उदगायतास्तिस्रो रीतयः संपन्नाः। **अपरस्मिन्निति**। उदीच्यः सप्तरीतयः प्राच्यस्तिस्रः समचतुरश्रा यथा भवन्ति तथोपदध्यादित्यर्थः॥ ३१॥

चतुरस्रमिति। पूर्वापरेण सप्तधा विभागः। विभागद्वारेण करणान्युक्तानि भवन्ति। तत्र द्वात्रिंशदङ्गुल आयामः। दशतिलोनचतुर्दशाङ्गुलव्यासम् एकमेव करणम्। अपरस्मिन्निति। उदीचीरुदगायताः। अस्मादेव व्यत्यासवचनाद् अत्रापि भेदवर्जनं पशुधर्मत्वञ्च आश्रयणीयमिति सूचितं भवति। समचतुरस्रेति। इष्टका इति शेषः॥ ३१॥

**व्यायामषष्ठेनेष्टकाः कारयेत् चतुर्थेन तृतीयेनेति॥ ३२॥**

अस्मिन्नेव चतुरश्रपक्षे उपधाने प्रकारान्तरमाह—**व्यायामषष्ठेनेति**। षोडशाङ्गुलप्रमाणेन समचतुरश्रेष्टकाः कारयेत्, चतुर्थेन अरत्निप्रमाणेन समचतुरश्रा इष्टकाः कारयेत्, तृतीयेन द्वात्रिंशदङ्गुलप्रमाणेन समचतुरश्रेष्टकाः कारयेत्॥ ३२॥

व्यायामेनेति। अत्र षोडशाङ्गुलेन, अरत्निना, द्वात्रिंशदङ्गुलेन। इतिरेवमर्थे॥ ३२॥

**तासां नव प्रथमा, द्वादश द्वितीया, इति पूर्वस्मिन् प्रस्तार उपदधाति॥ ३३॥**

इष्टकाकरणमुक्त्वोपधानप्रकारमाह—**तासामिति**। तासां पूर्वोक्तेष्टकानां मध्ये नव प्रथमाः षोडशाङ्गुलप्रमाणा मध्ये संश्लिष्टा उपधाय द्वादश द्वितीया अरत्निप्रमाणाः सर्वत उपदध्यात्॥ ३३॥

तासामिति। प्रथमाः प्रथमोक्ताः षोडशाङ्गुलाः। द्वितीया द्वितीयोक्ता अरत्नयः। इति शब्दः समुच्चयार्थः। अरत्निद्वयसमचतुरस्रे प्रथमा उपदध्यात्। परितो द्वादशारत्नयः। एवं पशुधर्मत्वं भवति॥ ३३॥

**पञ्च तृतीयाः षोडश प्रथमा इत्यपरस्मिन्॥ ३४॥**

**पञ्चेति**। अपरस्मिन् प्रस्तारे पञ्च तृतीया द्वात्रिंशदङ्गुलप्रमाणाश्च-

तसृषु दिक्षु चतस्र एका मध्ये, षोडश प्रथमाः षोडशाङ्गुलप्रमाणाश्चतुर्षु-कोणेषु चतस्रश्चतस्र इष्टका उपदध्यात् ॥ ३४ ॥

पञ्चेति । महादिक्षु चतस्रः मध्ये एका एवं पञ्च तृतीयाः । चतसृषु स्रक्तिषु चतस्रश्चतस्रश्चतुरस्रकृताः षोडश प्रथमाः । एवं भेदवर्जनं पशुधर्मत्वञ्च सिध्यति ॥ ३४ ॥

[ इति चतुरश्रगार्हपत्यचित्युपधानम् । ]

**परिमण्डलायां यावत्सम्भवेत्तावत् समचतुरश्रं कृत्वा तन्नवधा विभजेत । प्रधींस्त्रिधा त्रिधेति । स्रक्तोरवान्तरदिक्षु संपादयेत् ॥ ३५ ॥**

चतुरस्रोपधानमुक्त्वा परिमण्डलकरणमाह—**परिमण्डलायामिति ।** चतुरश्रं परिमण्डल(१।४७)मित्यादिना परिमण्डलं कृत्वा कृतायां परिमण्डलायां चितौ यावत् सम्भवति चतुरश्रं तावत् कृत्वा तन्मध्यवर्ति चतुरश्रं नवधा विभजेत् । प्रथमे प्रस्तारे चतुरः स्रक्तीरवान्तरदिक्षु सम्पादयेत् । **प्रधीनिति ।** अवशिष्टाश्चतुरः प्रधींस्त्रिधा त्रिधा विभजेत् । एवं चतसृषु प्रधिषु द्वादश मध्ये नव आहृत्यैकविंशतीष्टका भवन्ति ॥ ३५ ॥

परिमण्डलायामिति । अर्धव्यायामेन मण्डलं परिलिखेदित्युक्तम् । तत्र यावत् प्रमाणं समचतुरस्रं (कृत्वा तन्नवधा विभजेत् ) क्षेत्रमन्यूनानतिरिक्तं मण्डलमध्ये सम्भवति तावत् प्रमाणं समचतुरस्रं कृत्वा अवान्तरदिक्षु यथा स्रक्तयस्तथा विष्कम्भार्धद्विकरण्या अष्टषष्ट्यङ्गुलेन चतुस्तिलोनेन समचतुरस्रं कृत्वा तच्चतुरस्रं नवधा विभजेत् । प्रधीनिति । प्रधिरिव प्रधिः । प्रधिश्चक्रपर्यन्तः । तांस्त्रेधा विभजेत् । इतिरेवमित्यर्थे । एवं एकविंशतिः ( ? ) संपद्यन्त इत्यर्थः । जानोः पञ्चमप्रमाणोत्सेधं व्यायामविष्कम्भपरिमण्डलक्षेत्रं क्वचिद् आपाद्य उक्तेन मार्गेण विभजेदित्याचार्यस्य पक्षः ।

गणितविदः करणैरिष्टकाः कुर्वन्ति । त्रीणि करणानि । समचतुरस्रं, प्रधिमध्यं, प्रध्यन्तमिति । समचतुरस्रं द्वाविंशत्यङ्गुलं सैकविंशतितिलम्, प्रधिमध्यमपार्श्वमान्योः प्रमाणमेतदेव । तिर्यङ्मान्यौ दशतिलोनत्रयोदशाङ्गुले । एकं पार्श्वफलकं धनुरिव तक्षेत् यथा अङ्गुलिर्द्वादशतिलाः शरप्रमाणं भवति । प्रध्यन्तन्तु त्रिकरणम् । तस्यापि चतुरस्रवदेकं पार्श्वम् । अपरं पार्श्वं त्रयोदशाङ्गुलं दशतिलोनम् ।

षड्विंशकं तिलद्वयोनमपरं धनुरिव तक्षेत्। यथा अङ्गुलिः सप्तविंशतितिलाश्च शरो भवति। स्रक्तीति। प्रथमे प्रस्तारे चतुरस्रस्रक्तीरवान्तरदिक्षु सम्पादयेत्॥ ३५॥

**अपरं प्रस्तारं तथोपदध्याद् यथा प्रध्यनीकेषु स्रक्तयो भवन्ति॥ ३६॥**

**अपरमिति**। अपरस्मिन् प्रस्तारे प्रध्यनीकेषु प्रधिमध्येषु यथा चतुरश्रस्य स्रक्तयो भवन्ति तथा चतुरश्रं कृत्वा तं नवधा विभजेत्। तथा च पूर्वस्रक्तिभाग इह प्रधयः संपन्नाः, तांस्त्रिधा विभजेत्॥ ३६॥

अपरमिति। प्रध्यनीकेषु प्रधिमध्येषु चतुरस्रस्रक्तयो भवन्ति। महादिक्षु इत्यर्थः॥ ३६॥

[ इति परिमण्डलगार्हपत्यचित्युपधानम्। ]

**धिष्ण्या एकचितीकाश्चतुरश्राः परिमण्डला वा॥ ३७॥**

मण्डलपक्षे गार्हपत्योपधानप्रकारमुक्त्वा धिष्ण्योपधानप्रकारमाह— **धिष्ण्या** इति। एकचितीका एकप्रस्तारयुक्ताः। अत्र धिष्ण्यक्षेत्रपरिमाणकथनादग्निष्टोमोक्तधिष्ण्यपरिमाणक्षेत्रमेव चतुरश्रं परिमण्डलं कर्त्तव्यमिति गम्यते॥ ३७॥

धिष्ण्येति। एकचितीका एकप्रस्ताराः। एकचितीकत्वं प्राप्तस्य पुनर्वचनप्रयोजनं पशुधर्मपरिग्रहार्थम्। ततश्च न खण्डा (२।२४) मित्यादिप्रतिषेधोऽप्याश्रयणीयः। चतुरस्राः परिमण्डला वा। धिष्ण्यानां द्विप्रादेशो विष्कम्भ (१।७६)इति वचनात्। मानाधारस्य क्षेत्रस्य अरत्निविष्कम्भपरिमण्डलत्वात् मण्डलं चतुरस्र (१।४८) मित्यादिना चतुरस्रकरणम्। तत्र चतुरस्रकरणी एकविंशतिरङ्गुलयो नव तिलाश्च॥ ३७॥

**तेषामाग्नीध्रीयं नवधा विभज्यैकस्याः स्थानेऽश्मानमुपदध्यात्॥ ३८॥**

**तेषामिति**। तेषां धिष्ण्यानां मध्ये आग्नीध्रीयं नवधा विभज्य मध्ये अश्मानमुपदध्यात्॥ ३८॥

तेषामिति। तेषां धिष्ण्यानां मध्ये आग्नीध्रीयं नवधा विभज्य "मध्ये दिवो निहितः पृश्निरश्मेति" लिङ्गान्मध्यमामुद्धृत्य तत्प्रमाणमश्मानमुपधाय पुरस्तादारभ्येतराभिरुपधानम्।

एतासामेकं करणम् । विभागविधानेन करणान्युपदिष्टानीति वेदितव्यं सर्वत्र ।
परिमण्डलपक्षेऽष्टाङ्गुलविष्कम्भं परिमण्डलमश्मानं मध्ये निधाय परितः सममष्टधा
विभजेत् । एवं भूमौ लिखित्वा इष्टकाः कारयेत् । तत्र बाह्यफलकं बहिर्वक्रम् ।
अभ्यन्तरफलकमन्तर्वक्रम् ॥ ३८ ॥

**अथ होतुर्धिष्ण्यं नवधा विभज्य पूर्वांस्त्रिभागानेकैकं द्वेधा विभजेत् ॥ ३९ ॥**

अथेति । होतृधिष्ण्यमपि नवधा विभज्य पूर्वान् त्रिभागानेकैकं द्वेधा
विभजेत् । आद्यहोतृधिष्ण्यमध्ये द्वादशेष्टका भवन्ति ॥ ३९ ॥

अथेति । अथ शब्द उपधानक्रममनुवदति, नेष्टकाकरणक्रमम् । पूर्वान् पूर्व-
रीतिस्थान् । द्वेधा—अष्टाङ्गुलदीर्घान् चतुरङ्गुलव्यासान् । तासामेकं करणम् ।
इतरासाम् आग्नीध्रीयवत् । एवं द्वादशहोत्रीय उपदधातीत्युक्तं भवति । मण्डलपक्षे
द्वादशधा समशः प्रतिविभागः । तत्र बाह्यफलकं धनुर्वक्रम् । अभ्यन्तरं प्रदेशशून्य-
मेव । मण्डलपक्षे सर्वत्र भूमौ लिखित्वा इष्टकाः कारयेत् ॥ ३९ ॥

**अथेतरान्नवधा नवधा विभज्य मध्यमपूर्वौ द्वौ भागौ समस्येत् ॥ ४० ॥**

अथेतरानिति । अथेतरान् मैत्रावरुणादिधिष्ण्यानेकैकं नवधा विभज्य
मध्यपूर्वभागमेकीकुर्यात्, आहत्य प्रति धिष्ण्यम् अष्टाविष्टका भवन्ति ॥४०॥

अथेतरेति । इतरान् प्रशास्तृप्रभृतीन् पञ्चधिष्ण्यान् नवधा नवधा विभज्य
द्वितीय-तृतीयरीत्योर्मध्यमौ भागौ समस्येत् एकीकुर्यादित्यर्थः । तासामेकैकं करणं
अष्टाङ्गुलव्यासं षोडशाङ्गुलदीर्घम् । उत्तरासाम् आग्नीध्रीयवत् । एवं धिष्ण्या अष्टेष्टका
भवन्ति । मण्डलपक्षे तु समप्रविभागः ॥ ४० ॥

**अथ मार्जालीयं त्रेधा विभज्य पूर्वापरौ भागौ पञ्चधा विभजेत् ॥ ४१ ॥**

अथ मार्जालीयमिति । मार्जालीयन्तु त्रेधा विभज्य पूर्वं भागं द्वेधा
विभज्यापरं भागं विभजेत्, आहत्य षडिष्टका भवन्ति ॥ ४१ ॥

अथेति । दक्षिणोत्तरेण त्रेधा विभज्य पूर्वं द्वेधा अष्टाङ्गुलव्यासं द्वादशाङ्गुल-
दीर्घं विभजेत् । तयोरेकं करणम् । अपरं त्रेधा विभजेत् । तासाम् आग्नीध्रीयवदेकं
करणम् । मध्यमस्य धिष्ण्यायाम् अष्टाङ्गुलव्यासमेकं करणम् ।
मण्डले तु समशः षोढा विभागः । एवं धिष्ण्यानां चतुरस्रपक्षे पञ्च करणानि ।
अष्टाङ्गुलसमचतुरस्रमेकम् । तेन द्विपञ्चाशदिष्टकाः । अष्टाङ्गुलदीर्घं चतुरङ्गुल-

व्यासं द्वितीयम्। तेन षडिष्टकाः। षोडशाङ्गुलदीर्घं अष्टाङ्गुलव्यासं तृतीयमेकम्। तेन पञ्च। अष्टाङ्गुलव्यासं द्वादशाङ्गुलदीर्घं चतुर्थम्। तेन द्वे। धिष्ण्यदीर्घं अष्टाङ्गुलव्यासमेकं पञ्चमम्। तेनैका। एवं समस्ताः षट्षष्टिरिष्टकाः।

मण्डलपक्षे आग्नीध्रीयहोत्रीयाष्टेष्टकमार्जालीयानां चत्वारि करणानीष्टकाश्च द्रष्टव्याः ॥ ४१ ॥

[ इति धिष्ण्यानामुपधानप्रकारः । ]

**उख्यभस्मना संसृज्येष्टकाः कारयेदिति। संवत्सरभृत एवैतदुपपद्यते न रात्रिभृतः। एवमस्य मन्त्रवती चितिक्लृप्तिः ॥ ४२ ॥**

इष्टकानिर्माणे विशेषमाह—**उख्येति**। उख्यभस्मना मृदं संयोज्य तयैवेष्टकाः कुर्यात्। **संवत्सरेति**। संवत्सरोख्यभरणपक्ष इदं संभवति। संवत्सरग्रहणं मासादीनामुपलक्षणम्। तदपि उख्यया भस्मसंसृष्टया मृदेष्टकाकरणसम्भवात्। न रात्रिभृत इति रात्रिपदे चोदना अतिरात्रप्रभृत्यांविंशद्रात्रं चोदितकल्पेष्वयं नियमो वोपपद्यते। तेषु उख्यभस्मसंसृष्टमृदा तत्करणासम्भवात् संवत्सरभरणपक्ष एव ज्यायानिति स्तौति—**एवमिति**। एवं उख्यसंसृष्टमृदेष्टकाकरणे अस्य यजमानस्य चितिक्लृप्तिरिष्टकाकरणं मन्त्रयुक्तं भवति ॥ ४२ ॥

उख्येति। उख्यभस्मना संसृज्येष्टकाः कारयेदिति शाखान्तरीयवचनमस्ति। संवत्सरमुख्यं बिभर्तीति संवत्सरभृद् यजमानः। एतदुख्यभस्मना संसृज्येष्टकाकरणम्। संवत्सरेति। रात्रिशब्देन तिस्रो रात्रीर्दीक्षितः स्याद् इत्यादि रात्रिशब्देन विहितदीक्षाकल्पाः लक्ष्यन्ते। त्रिंशद्रात्रिपर्यन्तेषु दीक्षाकल्पेषु प्रवृत्तस्य नोपपद्यते। संवत्सरशब्दोऽपि मासादिकल्पस्योपलक्षणम्। तावन्मात्रेणापि कालेन इष्टकाकरणस्य शक्यत्वात्। तत्परत्वाद् वाक्यस्य। एवमिति। अस्य यजमानस्य मन्त्रेण कृतायामुखायां मन्त्रेण संस्कृतस्योख्यस्य भस्मना संसृष्टत्वाद् इष्टकाक्लृप्तिर्मन्त्रवतीति ॥ ४२ ॥

[ इति इष्टकानिर्माणे विशेषः । ]

**छन्दश्चितं त्रिषाहस्रस्य परस्तात् चिन्वीत। कामविवेकात्। तस्य रूपं श्येनाकृतिर्भवतीति प्रकृतित्वात् ॥ ४३ ॥**

छन्द इति। त्रिसाहस्रस्य परस्ताच्छन्दश्चितं चिन्वीत। श्येनस्य

प्रकृतित्वेन श्येनचित् त्रिषाहस्रं कृत्वा, छन्दःशब्दस्योपलक्षणपरत्वेन छन्दश्चित्कङ्कादीनां विकृतित्वेन पश्चादनुष्ठानं केचिदाहुस्तदनुपपन्नम्। श्येनस्य त्रिषाहस्रपर्यन्तमनवच्छिन्नतयानुष्ठानं कृत्वा पश्चात् कङ्कादीनामनुष्ठानमित्यत्र प्रमाणाभावात्। ननु त्रिषाहस्रस्य परस्ताच्छन्दश्चितं चिन्वीतेति सामान्यनिर्देशेऽपि श्येनचित्यादावनुष्ठानोपक्रमात्। अस्मिन्नेव त्रिषाहस्रपर्यन्तमनुष्ठानं कृत्वा तदनन्तरमितरेषामनुष्ठानमिति चेत्, एवं तर्हि कङ्कादिष्वपि त्रिषाहस्रपर्यन्तमनुष्ठीय अन्तराग्न्यन्तरानुष्ठानं न स्यात्। ननु श्येनचिदिव त्रिषाहस्रपर्यन्तमनुष्ठानम् अग्न्यन्तराणामपि अस्तु इति चेन्न; त्रिषाहस्रानुष्ठानानन्तरं जानुदघ्नस्य वा ग्रीवादघ्नस्य वा अनुष्ठानमिति द्वैधे नियमितत्वात् प्रत्येकं त्रिषाहस्रानुष्ठानाप्रसक्तेः। अतो यस्य कस्याप्यग्नेः त्रिषाहस्रानन्तरं छन्दश्चयनं कर्तव्यम्। युक्तञ्चैतत्। तथाहि "साहस्रं चिन्वीत प्रथमं चिन्वानः, द्विषाहस्रं चिन्वीत द्वितीयं चिन्वानः, त्रिषाहस्रं चिन्वीत तृतीयं चिन्वान" इति जानुदघ्नादिक्रमेणाम्नातानां सहस्रादीनां प्रथमादिभावेन त्रिषाहस्रानन्तर्यस्यैव युक्तत्वात्। ननु त्रिषाहस्रानन्तरमपि छन्दश्चितेरनुष्ठानं न प्राप्नोति। जानुदघ्ना वा ग्रीवादघ्ना वा कार्या इति परिमाणस्यानन्तरानुष्ठेयेष्वपि समाम्नानादिति चेत्। अनिन्दक ( ? ) श्छन्दश्चिदाम्नानमहिम्ना च जानुदघ्ना वेत्यादिनियमस्य तदितर(ा)परिमाणकङ्कादिविषयत्वात्। यदि श्येनचित्येव त्रिषाहस्रपर्यन्तमनुष्ठानमङ्गीक्रियते तदा श्मशानचयनस्य नाभिदघ्नं द्विषाहस्रं चाङ्गीकृत्य धर्मोपदेशो विरुद्धः स्यात्। (यदि ?) नाभिदघ्नं पुरस्ताज्जानुदघ्नं पश्चादित्यादि कल्पसूत्रमप्यनुपपन्नं स्यात्। तस्मात् श्येनानन्तरं श्येनकङ्कसमूह्यात् इत्थं नियमेन त्रिषाहस्रं कृत्वा त्रिषाहस्रस्य परस्ताच्छन्दश्चितं चिन्वीतेति वचनबलात् त्रिषाहस्रानन्तरमेव छन्दश्चितोऽनुष्ठानमिति सिद्धम्। छन्दश्चित्कामाकृतिं आश्रयतीति पृच्छति—**कामिति**। उत्तरमाह—**अविवेकादिति**। श्रुतावाकृतिविशेषस्य अनिर्धारणात् प्रकृतिमेवाश्रयतीत्यर्थः ॥ ४३ ॥

## इति श्रीमदद्वैतविद्याचार्य-साग्निचित्य श्रीव्यङ्कटेश्वरदीक्षितस्य कृतिषु बोधायनशुल्बमीमांसायाम् द्वितीयोऽध्यायः ।

छन्दश्चितमिति । छन्दांस्येव चीयन्त इति छन्दश्चित् । न तु छन्दोभिश्चीयत इति । कल्पे छन्दश्चिद् यत्र क्व चाहुतिरागच्छति जुहोत्येव तत्राथ यदन्यदाहुतिभ्यः शरीरवद् यजुरेवेति तत्र देशे जपेदिति (बौ० श्रौ० सू० १७।२८) वचनात् । तत्र शरीरवदिष्टकाद्रव्यवदित्यर्थः । कर्मान्ते च अग्निं विहरेदग्निरूपाणीति दर्शयेदित्युक्तम् । तत्र मिनुयादग्निं पक्षपुच्छादिविभागेन रूपाणि दर्शयेद् । इष्टकारूपाणि अर्धेष्टकापादेष्टकारूपाणि । तत्तद्देशे यथास्थानं लिखित्वा शुष्केष्टकासूपधानमन्त्रं जपेदित्यर्थः । तस्माच्छन्दांस्येव चीयन्त इति छन्दश्चित् । त्रिषाहस्रस्य परस्ताच्चिन्वीत । ब्राह्मणक्रमात्तु पूर्वानुष्ठानम् । तस्माच्छ्येनचितः प्रकृतित्वात् त्रिषाहस्रस्यान्ते प्रकृत्यनुष्ठानपरिसमाप्तिरित्यभिप्रेत्योक्तं त्रिषाहस्रस्य परस्ताच्चिन्वीतेति । प्रकृतिं कृत्वैव विकृतेरधिकार इत्येकविधप्रसङ्गादुक्तम् । अनेन प्रक्रम्य त्रिषाहस्रपर्यन्तं चित्वैव विकृतेश्चयनमिति गम्यते । उक्तमर्थं साधयितुं हेतुमाह—कामेति । फलभेदात् काम्यत्वात् परस्तादेवेत्यर्थः । तस्येति । तत्र मन्त्ररूपमात्रत्वेऽपि इष्टकारूपाणि दर्शयेदित्युक्तत्वात् । आकृत्यपेक्षायां प्रकृतित्वाच्छ्येनाकृतिर्भवतीति ।

अन्ये त्वाहुः । छन्दश्चितं त्रिषाहस्रस्य परस्ताच्चिन्वीत कामम् । छन्दश्चित् कामाकृतिमाश्रयत इति शेषः । अविवेकात् आकृतेरनुक्तत्वात् । विविच्येयमिति वचनाभावादित्यर्थः । तस्य रूपं श्येनाकृतिर्भवतीति । प्रकृतित्वात् । इति करणः परिभाषासमाप्त्यर्थः ॥ ४३ ॥

टीका भट्टात्मजेनेयं द्वारकानाथयज्वना ।
द्वितीयो व्याकृतोऽध्यायस्त्वग्नीनां धर्मवाचकः ॥

इति बौधायनीये शुल्बसूत्रव्याख्यायां शुल्बदीपिकायां द्वितीयोऽध्यायः ।

# अथ तृतीयोऽध्यायः ।

**अथ वै भवति श्येनचितं चिन्वीत सुवर्गकाम इति ॥ १ ॥**

अथेदानीं श्येनस्य प्रकृतित्वेन प्रथममनुष्ठेयत्वात्तत्स्वरूपं दर्शयति— **अथेति** । ब्राह्मणमिति शेषः । श्येनचितं चिन्वीत स्वर्गकाम इति सामान्यतः श्येनचिदाकारस्य स्वर्ग (फल ?) कत्वमवगम्यते ॥ १ ॥

आद्येऽध्याये सामान्येन सर्वक्षेत्रकरणमुक्तम् । द्वितीयेऽध्यायेऽग्नीनामविशेषेण परिभाषा कथिता । छन्दश्चितश्चयनं विशेषाभावात् परिभाषासूत्रम् । इदानीमग्नीनां सर्वेषामाकृतिविशेषं विवक्ष्यन्नाह । अथेति । श्येन इव चित् श्येनचित् ॥ १ ॥

**आकृतिद्वैविध्यं चतुरश्रात्मा श्येनाकृतिश्च विज्ञायते ॥ २ ॥**

**आकृतीति** । श्येनचित आकृतिद्वैविध्यमित्यर्थः । श्रुतिचोदितश्येनचिदाकृतिभेदो द्विविध इति यावत् । ननु श्येनचिद्विधायकवाक्ये श्येनचितो द्वैविध्याप्रतीतेः कथं श्येनचिद् द्विविध इत्याशङ्क्य "वयसां वा एषः प्रतिमया चीयत" इति वयःप्रतिमाकारतया श्येनचितो विधानात्, "समचतुरश्राभिरग्नि चिनुत" इति समचतुरश्राकारतया च श्येनचितो विधानात् , श्येनचित आकृतिद्वयमपि सम्भवति इत्याह **चतुरश्रात्मेति** । श्येनचित आत्मा समचतुरश्र इत्यर्थः । समचतुरश्राकारतया कर्तव्यस्य श्येनचित आत्मा समचतुरश्र इति यावत् । **श्येनाकृतिश्चेति** । श्येनस्य आकृतिरिव आकृतिर्यस्य सः श्येनाकृतिरित्यर्थः । वयःप्रतिमाकारतया कर्त्तव्यस्य श्येनचितः श्येनाख्यपक्ष्याकृतिरिति यावत् ॥ २ ॥

आकृतिरिति । प्रतिज्ञातस्य श्येनस्य रूपद्वैविध्यम् । अस्तीति वाक्यशेषः । तदेव दर्शयति । चतुरस्रात्मेति । आकृतिसंहितो बहुव्रीहिः । चतुरस्र आत्मा यस्य स चतुरस्रात्मा श्येनचित् । अथवा चतुरस्र आत्मा श्येनचित इति वाक्यशेषः । श्येनस्येवाकृतिर्यस्येति श्येनाकृतिः । कारणमाह—विज्ञायत इति । श्रुतिरवगम्यते ॥ २ ॥

**उभयं ब्राह्मणम् । पश्चदक्षिणायां श्रोण्यामुपदधाति पश्चोत्तरस्यां । वस्तो वय इति दक्षिणेंऽस उपदधाति । बृष्णिर्वय इत्युत्तरे । व्याघ्रो वय इति दक्षिणे पक्ष उपदधाति । सिंहो वय इत्युत्तरे । पुरुषो वय इति मध्य इति च ॥ ३ ॥**

**उभयमिति** । "वयसां वा एष" इति, "समचतुरश्राभि"रिति वक्ष्यमाणश्रुतिवाक्याभिप्रायेण उभयं ब्राह्मणमित्युक्तम् । ननु समचतुरश्राकारोऽपि श्येनचित्कर्त्तुं शक्यत इत्युक्तं तदनुपपन्नम् । "नापक्षपुच्छश्येनो विद्यत इति" सपक्षपुच्छः श्येन इत्युक्तत्वाच्चतुरश्राकारतया कर्त्तव्यस्य पक्षपुच्छादीनां (अ ?) प्राप्तेः तादृशस्य श्येनचित्त्वमेव नास्तीत्यत आह—**पञ्चेति** ।

अत्रोभयसाधारण्येन पक्षादिष्विष्टकोपधानविधानाच्चतुरश्राकारस्य पूर्वोक्तप्रकारेण श्येनचित्त्वम् । "दक्षिणे पक्ष उपदधाती" त्यादिश्रुतेः सपक्षपुच्छश्येनाकृतिविषयत्वेनाप्युपपत्तेरिति चेन्न, "श्येनचितं चिन्वीत सुवर्गकाम" इत्येतत्प्रकरणस्थत्वेन "समचतुरश्राभिरग्निं चिनुत" इति श्रुतेरेतद्वाक्यविहितसमचतुरश्राकारस्य श्येनचित्त्वावश्यंभावेन सपक्षपुच्छतानियमस्य वक्तव्यत्वात् । किञ्चाविशेषेण प्रकृतस्य "दक्षिणे पक्षे" इत्यादेः श्येनाकृतिमात्रविषयत्वे प्रमाणञ्च न पश्यामः । आकृतिद्वैविध्ये सामान्येन ब्राह्मणमुक्तं भवति ॥ ४ ॥

सा च श्रुतिः किं ब्राह्मणं ? आहोस्वित् मन्त्रः ? इति तत्राह उभयमिति । भवतीति वाक्यशेषः । उभयं वाक्यं ब्राह्मणमेव भवति । तदपि दाशतय्या विज्ञायते । प्र सप्तगुमृतधीतिमवर्त्या इति ( बौ० श्रौ० सू० २५।४पृ०२३२ ) शुन इत्यादिवन्मन्त्र इत्यर्थः । चतुरस्रात्मत्वे ब्राह्मणलिङ्गमुदाहरति । पञ्चेति । तत्र अंसश्रोण्यादिशब्दानां चतुरस्रश्येनस्यैव मुख्यत्वादिति भावः ॥ ३ ॥

**अथापरं वयसां वा एष प्रतिमया चीयते यदग्निरिति ॥ ४ ॥**

विशेषाकृतिद्वये ब्राह्मणद्वयं क्रमेणोदाहरति—**अथापरमित्यादिना** ॥ ४ ॥

अथ श्येनाकृतिब्राह्मणमुदाहरति। अथापरमिति। वयसां पक्षिणाम्। प्रतिमया प्रतिबिम्बेन। यः प्रतिज्ञातोऽग्निः स एषः पक्षिणामाकृतिप्रतिमया रूपेण चीयत इत्यर्थः॥ ४॥

**उत्पततां छाययेत्यर्थः॥ ५॥**

अथ पक्षिणः स्थित्यवस्थायां पक्षविस्ताराद्यसंभवादाह—**उत्पततामिति**। उच्चैः पतन्ति गच्छन्तीत्युत्पतन्ति तेषाम्। प्रतिमयेत्यस्य व्याख्यानं छाययेति सादृश्येनेत्यर्थः॥ ५॥

ब्राह्मणे प्रतिमयेति श्रुतत्वात् किं तुण्डदृष्टिश्रोत्राद्यवयवयुक्तेन? नेत्याह। उत्पततामिति। इति ब्राह्मणे श्रुतस्य प्रतिमाशब्दस्य अर्थ इत्यर्थः॥ ५॥

**समचतुरश्राभिरग्निं चिन्वीत दैव्यस्य मानुषस्य च व्यावृत्त्या इति मैत्रायणीयब्राह्मणं भवति॥ ६॥**

चतुरश्राकारश्येनचिति ब्राह्मणमुदाहरति—**समचतुरश्राभिरिति**। समचतुरश्राणामेवेष्टकानां चयन(त्व)विधानात् सपक्षपुच्छस्य श्येनचितश्चतुरश्राकारत्वं लभ्यते॥ ६॥

अथ चतुरस्राणामप्यग्नीनां पूर्वोदाहरणेन गौण्या वृत्त्या श्रोण्यंससहितात्मसम्भवात् चतुरस्रैकविषयं ब्राह्मणान्तरमुदाहरति। समचतुरस्राभिरिति। समचतुरस्राभिरिष्टकाभिः। मानुषं लौकिकम्। लोके आयतचतुरस्राभिरनियतरूपाभिर्वा प्रासादाद्यः क्रियन्ते तस्माद् दैव्यस्य मानुषस्य च व्यावृत्त्यै समचतुरस्राभिरेव चिन्वीतेति ब्राह्मणस्यार्थः। समचतुरस्राभिरेव श्येनाकृतेः कर्त्तुमशक्यत्वात् समचतुरस्रार्थता सिद्धा अस्य ब्राह्मणस्य॥ ६॥

[ इति श्येनचिदाकारनिरूपणम्। ]

**तस्येष्टकाः कारयेत् पुरुषस्य चतुर्थेन पञ्चमेन षष्ठेन दशमेनेति॥ ७॥**

चतुरश्रश्येनचित इष्टकाकरणमाह—**तस्येष्टका** इति। पुरुषस्य विंशत्यधिकशताङ्गुलप्रमाणस्य चतुर्थेन सर्वतस्त्रिंशदङ्गुलेन। पञ्चमेन सर्वतोऽरत्निप्रमाणेन। षष्ठेन सर्वतोविंशत्यङ्गुलप्रमाणेन। दशमेन सर्वतो द्वादशाङ्गुलप्रमाणेन करणेन समचतुरश्रेष्टकाः कारयेत्॥ ७॥

तस्येष्टका इति। तस्य चतुरस्रश्येनचितः। पुरुषस्य चतुर्थेन त्रिंशदङ्गुलेन पुरुषक्षेत्रवर्गस्य षोडशधा विभागः। पञ्चमेन अरत्निना पुरुषक्षेत्रवर्गस्य पञ्चविंशो भागः।

षष्ठेन पुरुषस्य विंशत्यङ्गुलेन पुरुषक्षेत्रस्य षट्त्रिंशांशः। दशमेन प्रादेशेन पुरुषक्षेत्रस्य शतांशः। इतिकरणः करणसमाप्त्यर्थः। एवं चत्वारि करणानि। प्रथमेन षण्णवतिरिष्टकाः। द्वितीयेन दशाधिकं षट्शतम्। तृतीयेन चतुस्त्रिंशाधिकं शतद्वयम्। चतुर्थेन षष्टिः। तत्र चोडानाकसदश्चतस्रः पञ्चम्यः। षट् षड्भागीयाः॥ ७॥

## अथाग्निं विमिमीते॥ ८॥

अग्निक्षेत्रमानमाह—**अथाग्निमिति**। अग्निः अग्निक्षेत्रम्॥ ८॥

अथाग्निमिति। उख्यभस्मना संसृज्येष्टकाः कारयेदिति २।४२) वचनाद्दीक्षितस्येष्टकाः कृत्वा अनन्तरं दीक्षान्त्यदिवसेऽग्निं विमिमीते। रात्रिभरणपक्षे अग्निविमाने न दीक्षादिलक्षणा। अथाग्निं विमिमीत इति यत्रास्ति तत्र अथशब्दस्य अयमर्थः॥८॥

**यावान् पुरुष ऊर्ध्वबाहुस्तावदन्तराले वेणोश्छिद्रे करोति। मध्ये तृतीयम्। यदमुत्र स्पन्द्यया करोति तदिह वेणुना करोति॥ ९॥**

**यावानिति**। पुरुषः यजमानः। ऊर्ध्वं प्रसारितभुजो यावान् भवति तावदन्तरालं ययोस्ते तावदन्तराले। **छिद्रे करोति** इति। पुरुषप्रमाणादुभयतश्छिद्रार्थे किञ्चिदधिकं वेणुं परिगृह्य पुरुषप्रमाणाद् बहिरेव छिद्रद्वयं कुर्यादित्यर्थः। **मध्य** इति। छिद्रयोर्मध्येऽपि वेणोश्छिद्रं तृतीयं करोति। ननु उभयतःपाशया मध्ये चिह्नितया पुरुषमात्रया स्पन्द्ययापि क्षेत्रमानसम्भवे किमुच्यते वेणोरिति? अत आह—**यदमुत्रेति**। अन्यक्षेत्रमानादिषु स्पन्द्यया यद् यत् करोति तदिहाग्निक्षेत्रमाने। "वेणुना विमिमीत" इति श्रुतेरिति भावः॥ ९॥

मानप्रकारमाह। यावानिति। यावत् प्रमाणं पुरुषो यजमान ऊर्ध्वबाहुः। अनेन लौकिकपुरुष उक्तो भवति। यजमानारत्निना पारिभाषिकः पञ्चारत्निः। इष्टकाकरणे यः पुरुषः परिगृहीतस्तेनाग्निं विमिमीते। (इष्टकाकरणे यः पुरुषः अग्निमानेऽपि स एव भवति इति टिः)। तावदन्तराले पुरुषमात्रान्तराले ययोश्छिद्रयोस्ते तथोक्ते। प्रमाणात् किञ्चिदतिरिक्तं वेणुं परिगृह्य पुरुषप्रमाणमन्तरालं यथा भवति तथा अन्तयोश्छिद्रं करोति। तत्र छिद्राभ्यन्तरार्धयोः पुरुषप्रमाणेऽन्तर्भावः। मध्य इति। करोतीति शेषः। यदमुत्रेति। अमुत्र क्षेत्रकरणे। उभयतः पाशस्थानीयेऽन्त्ये छिद्रे। मध्यच्छिद्रं लक्षणस्थानीयम्॥ ९॥

**तस्यात्मा समचतुरश्राश्चत्वारः पुरुषाः। पक्षः समचतुरश्रः पुरुषः। सतु दक्षिणतोऽरत्निना द्राघीयान्। एतेनोत्तरः पक्षो व्याख्यातः। पुच्छं समचतुरश्रः पुरुषः। तमवस्तात् प्रादेशेन वर्धयेत्। एवं सारत्निप्रादेशः सप्तविधः संपद्यते ॥१०॥**

**तस्यात्मेति**। तस्य चतुरश्रश्येनचितः। आत्मा पक्षपुच्छव्यतिरिक्त-प्रदेशः। **समचतुरश्रा** इति। पुरुषचतुष्टयपरिमित इत्यर्थः। पुरुषद्वय-प्रमाणेन सर्वतश्चतुरश्रं कुर्यादिति यावत्। **पक्ष** इति। पक्षपुच्छे सर्वतः पुरुषप्रमाणे। आत्मनो दक्षिणोत्तरपश्चाद्भागे ( अरत्निभ्यां ? ) प्रादेशेन ( च ? ) वर्धयेदित्यर्थः। **एवं सारत्निप्रादेश** इति। "यूपावटी-याच्छङ्कोरर्धप्रक्रममवशिष्यानुपृष्ठ्यं पुरुषं वेणुं निधाय छिद्रेषु शङ्कून्नि-हत्योन्मुच्याऽपराभ्यां दक्षिणाप्राक् परिलिखेदान्ताचक्षुमिताचतुरश्र-पूर्वान्तादुन्मुच्य पूर्वस्मादपरस्मिन् प्रतिमुच्य दक्षिणाप्रत्यक् परिलिखेदा-न्तादुन्मुच्य वेणुं मध्यमे शङ्कावन्त्यवेणोश्छिद्रं प्रतिमुच्योपर्युपरि लेखा-समरे दक्षिणां वेणुं निधायान्त्यच्छिद्रे शङ्कुं निहत्य तस्मिन् मध्यमवेणोश्छिद्रं प्रतिमुच्य पूर्वापरे छिद्रे लेखान्तयोर्यत्र निपतितस्तत्र प्रतिष्ठाप्य छिद्रयोः शङ्कून्निहन्ति, स पुरुषश्चतुरश्रः। एवं प्रदक्षिणं चतुर आत्मनि पुरुषा-नवमिमीते। "पुरुषं दक्षिणे पक्षे पुरुषं पुच्छे पुरुषमुत्तरे पक्षे" इति (बौधा. श्रौ. सू. ) एवं पूर्वोक्तप्रकारेण सारत्निप्रादेशः अरत्निभ्यां प्रादेशन च सहितः सप्तपुरुषप्रमाणोऽपि संपद्यत इत्यर्थः॥ १० ॥

तस्यात्मेति। प्रधानावयवत्वात् पक्षपुच्छव्यतिरिक्तांश आत्मेत्युच्यते। आत्मनः प्रमाणं द्विपुरुषप्रमाणकरणीकसमचतुरस्रमित्यर्थः। पक्ष इति। दक्षिणः पक्षः पुरुष-प्रमाणकरणीकः समचतुरस्रः। आत्ममध्येन पक्षमूलमध्यसंधानम्। सत्विति। स पक्षः दक्षिणान्ते पुरुषमात्रायामेनारत्निना द्राघीयान् दीर्घतरः। दक्षिणोत्तरेण षडरत्निरित्यर्थः। पुच्छमिति। पुरुषप्रमाणकरणीकः। प्राङ्क्रमेन ( २।१५ ) मित्युक्तत्वात् पश्चात् पुच्छं भवति। मध्ये संधानश्च।

तमवस्तादिति। पूर्वापरेणैकादशप्रादेशप्रमाण इत्यर्थः। एवमिति। आत्मा चत्वारः पुरुषाः। पक्षपुच्छास्त्रयः पुरुषाः। पक्षयोररत्निभ्यां पुच्छे प्रादेशेन

पुरुषायामं अर्धपुरुषव्यासं अर्धपुरुषक्षेत्रं सम्भवति। एवं सप्तविधः अर्धाष्टमविधोऽग्निः संपद्यते। अत्र कल्पे अरत्निना वा पक्षौ द्राघीयांसौ भवत इति प्रादेशवृद्धेर्वैकल्पिकत्वमुक्तम्। तच्छाखान्तरे एवमप्यस्तीति ज्ञापनार्थम् (नानुष्ठानार्थमिति टिः) तस्मिन् पक्षे क्वचिदपि प्रयोगानुपदेशात्।

अथ वेणुना मानमुच्यते। यूपावटीयाच्छङ्कोरर्धप्रक्रममवशिष्य अनुपृष्ठ्यं वेणुं निधाय छिद्रेषु शङ्कून् निहत्य उन्मुच्य अपराभ्यां दक्षिणाप्राक् परिलिखेद् आ अन्तात्। अत्र चक्षुर्निमितात् चतुरस्रपूर्वान्तात् उन्मुच्य पूर्वस्मादपरस्मिन् प्रतिमुच्य दक्षिणाप्रत्यक् परिलिखेद् आ अन्तात्। उन्मुच्य वेणुं मध्यमे शङ्कावन्त्यं वेणोश्छिद्रं प्रतिमुच्य उपर्युपरि लेखासमरं दक्षिणा वेणुं निधायान्त्ये छिद्रे शङ्कुं निहत्य तस्मिन् मध्यमं वेणोश्छिद्रं प्रतिमुच्य पूर्वापरे छिद्रे लेखान्तयोर्यत्र निपततस्तत्र प्रतिष्ठाप्य छिद्रयोः शङ्कू निहन्ति। स पुरुषश्चतुरस्रः।

एवं प्रदक्षिणं चतुर आत्मनि पुरुषानवमिमीते। पृष्ठ्यायां पूर्वयोश्चतुरस्रयोः पश्चाच्छङ्कुः। अपरयोः पौरस्त्यम्। पुरुषं दक्षिणे पक्षे। दाक्षिणात्यानां पञ्चानां मध्यमेषु त्रिषु वेणुं प्रतिमुच्य उन्मुच्यापराभ्यामित्यादि।

पुरुषं पुच्छे। पाश्चात्यानां त्रयाणां दक्षिणयोरन्त्ये छिद्रे प्रतिमुच्य मध्यमे छिद्रे शङ्कुं निहन्यात्। एवमुत्तरयोः। एवं स्थितानां पञ्चानां मध्यमेषु त्रिषु तिर्यञ्चं वेणुं प्रतत्य उन्मुच्य उत्तराभ्यामिति द्रष्टव्यम्।

पुरुषमुत्तरे पक्षे। दक्षिणपक्षवत्। वेणोः पञ्चमे लक्षणं कृत्वा तेन पक्षौ वर्धयेत्। एवं दशमे लक्षणं कृत्वा पुच्छम्॥ १०॥

[ इति चतुरश्रश्येनचिद्विमानप्रकारः। ]

**उपधाने पक्षाग्रादुत्तरतः पुरुषतृतीयवेलायां चतस्रः पञ्चम्यः। तासामभितो द्वे द्वे पादेष्टके। ततोऽष्टौ चतुर्थ्यः। पक्षशेषं षड्भागीयाभिः प्रच्छादयेत्। एतेनोत्तरः पक्षो व्याख्यातः॥११॥**

इष्टकोपधानप्रकारमाह—**उपधान** इति। पक्षाग्रादुत्तरतः दक्षिणपक्षस्याग्रात् दक्षिणान्त्यपार्श्वादारभ्य उत्तरभागे। **पुरुषतृतीयेति**। तृतीया च सा वेला च तृतीयवेला। पुरुषतृतीयवेलायां त्यक्तायामित्यर्थः। वेलाशब्देन अंश उच्यते। दक्षिणपक्षस्य दक्षिणप्रदेशादारभ्य चत्वारिंशदङ्गुलं विहाय तत उत्तरभागे। **चतस्र** इति। चतस्रः पञ्चम्यः सर्व-

तोऽरत्निप्रमाणका उपदध्यादिति पक्षाग्रादुत्तरत इत्युक्त्या एवमवगम्यते । **तासामिति** । तासां पञ्चमीनां अभितः पूर्वपश्चिमयोः पार्श्वयोः द्वे द्वे पादेष्टके, (दक्षिणोत्तरे ) (पञ्चम्याः पादेष्टके इत्यर्थः ?) सर्वतः प्रादेशप्रमाणके । **ततोऽष्टाविति** । ततस्तस्मात् प्रदेशादुत्तरे भागे अष्टौ चतुर्थ्यः सर्वतः प्रक्रमप्रमाणकाः । **पक्षशेषमिति** । उभयोः (?) पक्षशेषं अवशिष्टप्रदेशं षड्भागीयाभिः सर्वतो विंशत्यङ्गुलप्रमाणेष्टकाभिः प्रच्छादयेदित्यर्थः । पक्षस्याग्रे पूर्वत्यक्तप्रदेशे द्वादशषड्भागीया । पक्षोत्तरपार्श्वे ( षट् ? ) षड्भागीया उपदध्यादिति यावत् । **एतेनोत्तर** इति । दक्षिणपक्षे यथोपधानं तथोत्तरपक्षे उपदध्यादित्यर्थः ॥ ११ ॥

उपधान इति। चतस्रः पञ्चम्यः। पक्षाग्रादुत्तरत उपधानम्। दक्षिणान्तादुत्तरतः। पुरुषतृतीयवेलायां चत्वारिंशदङ्गुलप्रमाणवेलायामतीतायामित्यर्थः । अन्यथा उत्तरत्र पूरणासम्भवात् । पश्चात् पुरस्ताच्च प्रादेशमवशिष्य मध्ये पूर्वापराश्चतस्रः पञ्चम्यः । तासां पञ्चमीनां पश्चात् पुरस्ताच्च अवशिष्टक्षेत्रे द्वे द्वे दशम्यावित्यर्थः । ततविति । उत्तरत इत्यनुवर्त्तते । पञ्चमीरीत्या उत्तरतस्तृतीयेन पूर्वापरा अष्टौ चतुर्थ्य इत्यर्थः । अष्टौ चतुर्थ्य उपदध्यात् । चतसृभिश्चतसृभिरेकैका रीतिः । पक्षशेषमिति । अनुपहितं क्षेत्रं षड्भागीयाभिः षष्ठेनेत्युक्तेः । तत्र पञ्चमीभ्यो दक्षिणतो द्वादश । चतुर्थीभ्य उत्तरतः षड्भिरेका रीतिः । एवमष्टादश । एवं पक्षे चतुस्त्रिंशदिष्टकाः । एतेनोत्तर इति । एतेनोपधानप्रकारेण । पक्षाग्राद् दक्षिणतः पुरुषतृतीयवेलायामित्याद्यूहनीयम् ॥ ११ ॥

**पूर्वापरयोः पुच्छपार्श्वयोश्चतुर्भागीया उपदध्यात् । दक्षिणोत्तरयोः पादेष्टकाः ॥ १२ ॥**

**पूर्वापरयोरिति** । चतस्रश्चतस्र उपदध्यात् । **दक्षिणोत्तरयोरिति** । दक्षिणोत्तरयोः पार्श्वयोः षट् षट् पादेष्टकाः ॥ १२ ॥

पूर्वापरयोरिति । पुच्छस्य पूर्वपश्चिमान्तयोश्चतस्रश्चतस्रः । दक्षिणोत्तरयोरिति । पार्श्वयोरित्येव सामर्थ्यात् । षड्भिः षड्भिः ॥ १२ ॥

**शेषमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् । एष द्विशतः प्रस्तारः ॥ १३ ॥**

**शेषमिति** । शेषं पञ्चमभागीयाभिः प्रच्छादयेत् । आत्मनि शतं पुच्छमध्ये द्वादश । **एवमिति** । एवं द्विशतः प्रस्तारः ॥ १३ ॥

शेषमिति। पुच्छस्य मध्यमो भाग आत्मा च शेषः। एष इति। सिद्धस्य पुनर्वचनेन "पञ्चमायां वा चितौ संख्यां पूरयेद्" (२।१०) इत्यत्रापि द्विशतोऽस्तीति सूचयति। एवं पक्षयोरष्टषष्टिः। पुच्छे द्वात्रिंशत्। आत्मनि शतम्। चतुर्थ्यश्चतुर्विंशतिः। पञ्चम्यो विंशत्यधिकं शतम्। षष्ठ्यः षट्त्रिंशत्। दशम्यो विंशतिः॥१३॥

**अपरस्मिन् प्रस्तारे पक्षाग्रादुत्तरतोऽर्धव्यायामवेलायां तिस्रस्तिस्रः षष्ठ्यो द्वे द्वे द्विपदे इति विपर्यासमुपदध्यात्। तथोत्तरे ॥ १४ ॥**

**अपरस्मिन्निति**। द्वे पदे यस्याः सा द्विपदा। ते द्विपदे। प्रक्रमप्रमाणके द्वे द्वे इष्टक इत्यर्थः। **विपर्यासमिति**। पूर्वापरप्रदेशयोर्मध्ये च तिस्रस्तिस्रः षड्भागीयाः सर्वतो विंशत्यङ्गुलप्रमाणकाः। दक्षिणश्रोणिस्रक्तौ उपदध्यात्। अन्तरालयोर्द्वे द्वे चतुर्थ्यौ दक्षिणोत्तरे उपदध्यादित्यर्थः। एवमुत्तरे पक्षे ॥ १४ ॥

अपरस्मिन् इति। विशेषो वक्ष्यत इति शेषः। पक्षदक्षिणान्तादारभ्योत्तरतोऽरत्निद्वयेऽतीते पक्षपश्चिमपार्श्वे उदीच्यस्तिस्रः षष्ठ्यः। ततः पुरस्ताद् दक्षिणोत्तरे द्वे द्वे द्विपदे चतुर्थ्यौ। ततस्तिस्रः षष्ठ्यः। ततो द्वे द्विपदे। ततः पूर्वपार्श्वे तिस्रः षष्ठ्यः। इतिरेवमित्यर्थे। एवं एता विपर्यस्योपदध्याद् इत्यर्थः। तथोत्तर इति। पक्ष उपदध्यादिति शेषः॥ १४॥

**दक्षिणस्यां श्रोण्यां नव षष्ठ्यश्चतुरश्रकृताः। तथोत्तरस्याम्। नव नव षष्ठ्यो द्वे द्वे द्विपदे इति दक्षिणादंसादुत्तरादंसाद् विपर्यासमुपदध्यात्॥ १५ ॥**

**दक्षिणस्यामिति**। दक्षिणस्यां श्रोण्यां नव षष्ठ्यः सर्वतो विंशत्यङ्गुलप्रमाणकाः यथा समचतुरश्रं भवति दक्षिणश्रोणिस्रक्तौ(तथा?)उपदध्यात्। **तथोत्तरस्यामिति**। एवमुत्तरस्यां श्रोण्याम्। अंसप्रदेशोपधानमाह— **नव नवेति**। नव नव षष्ठ्यः षड्भागीयाः, द्वे द्वे द्विपदे प्रक्रमप्रमाणके इति। **दक्षिणादंसादिति**। दक्षिणांसादारभ्य उत्तरांसपर्यन्तं विपर्यासं यथा भवति तथोपदध्यादित्यर्थः। आत्मनः अंसस्रक्त्योर्मध्ये(च?)त्रिचतुरश्रकृताः नवनव षष्ठ्यः। आसामन्तरालयोर्द्वे द्वे चतुर्थ्यावुपदध्यादिति यावत्॥ १५ ॥

दक्षिणस्यामिति। आत्मनः दक्षिणस्यां श्रोण्यां षष्ठ्यङ्गुलपरिमितं समचतुरस्रं क्षेत्रं परिगृह्य तत्र नव षष्ठ्य उपधेयाः। तथोत्तरस्यामिति। आत्मश्रोण्यां नव षष्ठ्यश्चतुरस्रकृता इत्यर्थः। नव नवेति। आत्मनि दक्षिणांसे षष्ठ्यङ्गुलपरिमितं समचतुरस्रं क्षेत्रं परिगृह्य तत्र नव षष्ठ्यः। तत उत्तरेण पूर्वापरे द्वे द्विपदे। तत उत्तरेण पूर्ववन्नव षष्ठ्यः। ततो द्वे द्विपदे। तत उत्तरांसे नव षष्ठ्यः। इतिरेवमित्यर्थे। एवं दक्षिणांसादारभ्योत्तरांसाद् विपर्यस्योपदध्यात्॥ १५॥

**शेषमग्निं पञ्चमभागीयाभिः प्रच्छादयेत्॥ १६॥**

**शेषमिति।** शेषमग्निमवशिष्टं क्षेत्रं पञ्चमभागीयाभिः प्रच्छादयेत्। पक्षयोरग्रप्रदेशयोः दश दश पञ्चमभागीयाः। आत्मपक्षसन्ध्योरग्रप्रदेशयोः दक्षिणोत्तरयोः पञ्च पञ्च पञ्चमभागीयाः। आत्मपक्षसन्ध्योः पञ्च पञ्च। तयोर्मध्ये पक्षसंमिताः नवरोतयः। पुच्छात्मसन्धौ पञ्च पञ्चम्यः। ततः पश्चात् पुच्छे पञ्चविंशतिः पञ्चम्यः समचतुरश्रं यथा भवति तथोपधेयाः। पुच्छात्मसन्धौ उपहिताभ्यः पुरस्तात् दश पञ्चम्यः दक्षिणोत्तरा दीर्घचतुरश्रं यथा भवति तथोपधेयाः। (दीर्घचतुरश्र) एवमवशिष्टक्षेत्रं प्रच्छादयेदित्यर्थं॥ १६॥

**एष द्विशतः प्रस्तारः। व्यत्यासं चिनुयाद् यावतः प्रस्तारांश्चिकीर्षेत्॥ १७॥**

**एष इति।** एवमेष द्विशतः प्रस्तार इति। ननु तृतीयप्रस्तारेऽपि यद्येवमेव उपधानं कुर्यात् तदा सन्ध्यपिधानरूपोऽग्निधर्मो न प्राप्नुयादित्यत आह—**व्यत्यासमिति।** पञ्च वा, दश, पञ्चदश वा यावतः प्रस्तारान् चिकीर्षेत् तावत्सु प्रथमवत्तृतीयं द्वितीयवच्चतुर्थम् एवमादिप्रकारेण व्यत्यासं विपरीतं चिनुयादित्यर्थः॥ १७॥

यावतः प्रस्तारानिति। साहस्रे प्रथमः प्रस्तारस्त्रिरावर्तते। द्विषाहस्रे प्रथमद्वितीयौ पञ्च पञ्च। त्रिषाहस्रे प्रथमः प्रस्तारः अष्टकृत्वः॥ १७॥

**अथापरः॥ १८॥**

पूर्वोक्ताग्निक्षेत्र एव इष्टकाकरणभेदात् अपरं चतुरश्रं श्येनचितमाह— **अथापर** इति ॥ १८ ॥

अथापर इति । चतुरस्रश्येनचितोऽपरः प्रकार उच्यत इति शेषः । अस्मद्-ब्राह्मणलिङ्गानुसारेणानियतरूपाश्चयनप्रकारा वक्ष्यन्त इत्यर्थः ॥ १८ ॥

**पुरुषस्य पञ्चम्यः । ता एवैकतोऽध्यर्धाः । तासामर्ध्याः पाद्याश्च ॥ १९ ॥**

**पुरुषस्येति** । पुरुषस्य पञ्चम्यः सर्वतोऽरत्निप्रमाणकाः । ता एव एकतोऽध्यर्धाः षट्त्रिंशदङ्गुलदीर्घाः चतुर्विंशत्यङ्गुलायामाः । (**तासामिति** । पञ्चमीनाम् । अर्ध्याः चतुर्विंशत्यङ्गुलदीर्घाः द्वादशाङ्गुलायामाः ?) पाद्याः सर्वतो द्वादशाङ्गुलाः ॥ १९ ॥

तत्र करणानि । पुरुषस्येति । सर्वतोऽरत्निमात्राः । ता एवैकत इति । उक्ता एव पञ्चम्यः । एकत एकपार्श्वतः । अरत्नितिर्यङ्मानीकाः त्रिप्रादेशपार्श्वमानीका इति यावत् । तासामिति । तासां पञ्चमीनां । द्वादशाङ्गुलव्यासाः । अरत्निदीर्घाः । पाद्याश्चेति । सर्वतः प्रादेशाः । एवं चत्वारि करणानि । प्रथमेन दशाधिकमष्टशत-मिष्टकाः । द्वितीयेन षट्त्रिंशत् । तृतीयेन चत्वारिंशच्छतम् । चतुर्थेन चतुर्दश । एवं सहस्रम् । तत्र चोडानाकसद अष्टौ पञ्चम्यो, द्वे अर्धेष्टके ॥ १९ ॥

**उपधाने पक्षपार्श्वयोरर्धेष्टका उदीचीरुपदध्यात् । तथोत्तरे ॥ २० ॥**

**उपधान** इति । उपधाने पूर्वापरयोः पक्षपार्श्वयोः उदग्दीर्घाः अर्धेष्टकाः षट् षट् उपदध्यात् । **तथोत्तर** इति । तथोत्तरे पक्षे तत्पूर्वा-परयोः पार्श्वयोरुदग्दीर्घाः षट् षट् अर्धेष्टका उपदध्यात् ॥ २० ॥

उपधान इति। अग्निमान व्यापारे इत्यर्थः। उभयत्र षट् षड्डुदीचीः उदगायताः । तथोत्तर इति । एवं द्वादशोपदध्यात् ॥ २० ॥

**दक्षिणोत्तरयोः पुच्छपार्श्वयोश्चतस्रश्चतस्रोऽध्यर्धा उदीचीः ॥२१॥**

**दक्षिणोत्तरयोरिति** । पुच्छस्य दक्षिणोत्तरयोः पार्श्वयोः उदीच्यः उदग्दीर्घाश्चतस्रः ( चतस्र ? ) अध्यर्धेष्टकाः ॥ २१ ॥

दक्षिणोत्तरयोरिति । पश्चात् प्रादेशमवशिष्य पुरस्तादरत्निं चावशिष्य मध्ये उदगायताः ॥ २१ ॥

**पुच्छस्यावस्ताच्चतस्रोऽर्धेष्टका उदीचीः । तासामभितो द्वे पादेष्टके । जघनेन पुच्छाप्यययोरेकैकामर्धेष्टकां प्राचीम् ॥२२॥**

**पुच्छस्यावस्तादिति** । पुच्छस्य पश्चात्प्रदेशे (पुरस्तादरत्निं चावशिष्य) मध्य उपदध्यात् । पुच्छस्य पश्चाद् उदगायताश्चतस्रोऽर्धेष्टका दक्षिणोत्तरयोः श्रोण्योः प्रादेशमवशिष्य मध्ये उपदध्यात् । **तासामिति** । तासामभितः पुच्छश्रोण्योः एकैकां पादेष्टकामुपदध्यात् । **जघनेनेति** । जघनेन पुच्छाप्यययोरेकैकामर्धेष्टकां प्रागायतामुपदध्यात् ॥ २२ ॥

पुच्छस्येति । पार्श्वयोरुभयत्र प्रादेशमवशिष्य मध्ये उदगायताः । तासामिति । पुच्छश्रोण्योरित्यर्थः । दक्षिणस्यामेकाम् । उत्तरस्यामेकाम् । जघनेनेति । पूर्वपुच्छपार्श्वयोरुपहिताध्यर्धाभ्यः पुरस्तात् । दक्षिणोत्तरपार्श्वयोरध्यर्धामूलसंहिते प्रागायते ॥ २२ ॥

**शेषमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् । एष द्विशतः प्रस्तारः ॥ २३ ॥**

[ अत्र ग्रन्थः पतितः प्रथमप्रस्तारस्यान्तिमोंऽशः द्वितीयप्रस्तारस्य चोपक्रमो न दृश्यते ] ॥ २३ ॥

शेषमग्निमिति । पक्षशेषयोरष्टाचत्वारिंशत् । पुच्छशेषे द्वादश । आत्मनि शतम् । एष इति । तत्र पक्षयोर्द्विसप्ततिः । अष्टाविंशतिः पुच्छे । आत्मनि शतम् । अस्मिन् प्रस्तारे षष्टिः शतं पञ्चम्यः । अष्टावध्यर्धाः । त्रिंशदर्ध्याः । द्वे पादेष्टके ॥ २३ ॥

**अपरस्मिन् प्रस्तारे आत्मस्रक्तिषु पादेष्टका उपदध्यात् । तासामभितो द्वे द्वे अर्धेष्टके । पूर्वस्मिन्ननीके पञ्च ॥ २४ ॥**

(शेष) कोणेषु चतस्रः पादेष्टकाः । **तासामिति** । तासां पादेष्टकानामभितः पार्श्वयोर्द्वे द्वे अर्धेष्टके उपदध्यादित्यर्थः । दक्षिणांसोपहितपादेष्टकायाः पश्चा (त्प्रागा? ) ( उदगा) यते द्वे अर्धेष्टके क्रमेण उपदध्यात् । तस्या उत्तरतो द्वे अर्धेष्टके उदगायते क्रमेणोपदध्यात् । एतेन इतरस्रक्तिषूपहितानां पादेष्टकानामपि पार्श्वयोर्द्वे द्वे अर्धेष्टके क्रमेणोपदध्या-

दिति व्याख्यातम् । **पूर्वस्मिन्निति** । पूर्वस्मिन्ननीके आत्मनः पूर्वान्तेपूर्वोपहितानामन्तराले पञ्चार्धेष्टका उदीचीरुपदध्यात् ॥ २४ ॥

अपरस्मिन् प्रस्तार इति । आत्मश्रोण्यंसयोः । तासामिति । दक्षिणांसप्रभृति प्रदक्षिणमुत्तरतः पश्चात्, पुरस्ताद् उत्तरतः दक्षिणतः पुरस्तात् पश्चात् दक्षिणत इति । एवं षोडश । पूर्वस्मिन्ननीक इति । आत्मपूर्वान्ते पूर्वोपहितान्तराले पञ्च अर्धेष्टका उदीचीः ॥ २४ ॥

**पक्षाग्रयोस्तिस्रस्तिस्रोऽध्यर्धा उदीचीः । तासामन्तरालेष्वेकैकामर्धेष्टकां प्राचीम् ॥ २५ ॥**

**पक्षाग्रयोरिति** । पक्षाग्रयोः दक्षिणोत्तरयोः । पक्षाग्रयोस्तिस्रस्तिस्र उदगायता अध्यर्धेष्टकाः पार्श्वयोरेकैकां मध्ये चैकामुपदध्यात् । **तासामिति** । तासामन्तरालेषु एकैकस्मिन् पक्षे द्वे द्वे अर्धेष्टके प्रागायते उपदध्यात् ॥ २५ ॥

पक्षाग्रयोरिति । मध्ये पार्श्वयोरुदगायताः । तासामिति । एकैकस्मिन् पक्षे द्वे द्वे पक्षाग्रसंगते प्रागायते ॥ २५ ॥

**शेषमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् ॥ २६ ॥**

**एष द्विशतः प्रस्तारः । व्यत्यासं चिनुयाद् यावतः प्रस्तारांश्चिकीर्षेद् ॥ २७ ॥**

**शेषमिति** । सुगमम् ॥ २६–२७ ॥

शेषमग्निमिति । पक्षसन्धिरीतिभ्यां सह पक्षयोश्चतुःपञ्चाशत् पञ्चम्यः । पुच्छेन सह आत्मनि मध्यतः पञ्चसप्ततिः । आत्मपार्श्वयोरष्टादशाष्टादश । एवं पक्षयोश्चतुःषष्टिः । पुच्छे त्रिंशत् । षट्शतमात्मनि । अस्मिन् प्रस्तारे पञ्चषष्टिः शतं पञ्चम्यः । षडध्यर्धाः । पञ्चविंशतिरर्ध्याः । चतस्रः पाद्याः ॥ २६–२७ ॥

[ इति चतुरश्रश्येनचित्प्रधानप्रकारः । ]

**अथ वक्रपक्षो व्यस्तपुच्छः ॥ २८ ॥**

अथ चतुरश्रश्येननिरूपणानन्तरं वक्रश्येन उच्यते—**वक्रेति** । वक्रौ कुटिलौ पक्षौ यस्य स वक्रपक्षः । व्यस्तो विस्तीर्णः पुच्छो यस्य स व्यस्तपुच्छः ॥ २८ ॥

अथेति । चतुरस्रश्येनचिदुक्तः । श्येनाकृतिर्द्विरूपः । तयोरेक उच्यते । वक्रौ कुटिलौ पक्षौ यस्य स वक्रपक्षः । विस्तीर्णं पुच्छं यस्य स व्यस्तपुच्छः । एतत् सर्वं चतुरस्रश्येनचिदपेक्षया ॥ २८ ॥

**तस्येष्टकाः कारयेत् पुरुषस्य चतुर्थ्यः । तासामर्ध्याः पाद्याश्च ॥ २९ ॥**

**तस्येष्टका** इति । वक्रश्येनचित इत्यर्थः । **पुरुषस्येति** । पुरुषक्षेत्र-मानदण्डस्य विंशत्युत्तरशताङ्गुलप्रमाणस्य चतुर्थेन भागेन त्रिंशदङ्गुलेन दण्डेन परितो मीयमानत्वाच्चतुर्थ्यः पुरुषक्षेत्रषोडशभागीया उच्यन्ते । **तासामिति** । चतुर्थीनामित्यर्थः ॥ २९ ॥

तस्येष्टका इति । चतुर्थ्य इति द्वितीयार्थे प्रथमा । सर्वतस्त्रिंशदङ्गुलाः कारयेत् । तासामिति । नित्यमक्ष्णयापच्छेदनमनादेशे ( ३।३० ) इति वक्ष्यति । तत्र अर्ध्यास्त्र्यस्राः । तासां त्रिंशदङ्गुले द्वे पार्श्वे सचतुर्दशतिलद्विचत्वारिंशदङ्गुलमन्यत् पार्श्वम् । पाद्याश्चापि त्रिकोणाः । तासां त्रिंशदङ्गुलमेकं पार्श्वम् । इतरे ससप्त-तिलैकविंशत्यङ्गुले ॥ २९ ॥

**नित्यमक्ष्णयापच्छेदनमनादेशे ॥ ३० ॥**

**नित्यमिति** । पूर्वोक्तानामर्ध्यादीनां करणप्रकारविशेषानुक्तौ अक्ष्णयै-वापच्छेद इत्यर्थः ॥ ३० ॥

नित्यमिति । तासामर्ध्यास्तिर्यग्भेदा (३।१११) इत्येवमादिवचनाभावे । नित्यं सर्वदा । कर्णरूपेणापच्छेदनम् ॥ ३० ॥

**पादेष्टकाश्चतुर्भिः परिगृह्णीयात् । अर्धपदेन पदेनाध्यर्धपदेन पदसविशेषेणेति । ते द्वे यथा दीर्घसंश्लिष्टे स्यातां तथार्धेष्टकां कारयेत् ॥ ३१ ॥**

चतुरश्रपाद्याकरण्याः परिमाणमाह—**पादेष्टका** इति । **ते द्वे यथेति** । उक्तलक्षणचतुरश्रे दीर्घसंश्लिष्टे अध्यर्धपदप्रमाणपार्श्वसंश्लिष्टे यथा भवतः तथा कुर्यादित्यर्थः । इयमेव हंसमुखीत्युच्यते ॥ ३१ ॥

पादेष्टकेति । पाद्याश्चेत्युक्तानामेव आकृत्यन्तरविधानम् । चतुर्भिः प्रमाणैः । परिगृह्णीयात् स्वीकुर्यात् । कथम् ? दक्षिणत आरभ्य प्रागपवर्गम् अर्धाष्टमाङ्गुलेन, पञ्चदशाङ्गुलेन, अर्धत्रयोविंशाङ्गुलेन, ससप्ततिलैकविंशत्यङ्गुलेनेति । तस्याश्चतुरस्र-पाद्येति संज्ञा ।

इदमपि तासामर्ध्या इत्युक्तानामेव आकृत्यन्तरविधानम्। ते पूर्वोक्ते चतुरस्रपाद्ये यथा अध्यर्धपदपार्श्वेन संश्लिष्टे स्यातां तथा कारयेत्। पञ्चकोणोऽयम्। अस्या हंसमुखीति संज्ञा। एवं पञ्चकरणानि। प्रथमेन त्रिचत्वारिंशत्त्रिशतम्। द्वितीयेन षट्पञ्चाशत्त्रिशतम्। तृतीयेन अष्टषष्ट्यधिकं शतद्वयम्। चतुर्थेन अष्टादश। पञ्चमेन पञ्चदश।

तत्र चोडानाकसद् अष्टौ पाद्या द्वे अर्ध्ये। एवं सहस्रमिष्टकाः ॥ ३१ ॥

**अथाग्निं विमिमीते ॥ ३२ ॥**

सार्धसप्तपुरुषप्रमाणस्याग्निक्षेत्रस्य वक्रपक्षश्येनाकारतया मानप्रकारं दर्शयति—**अथाग्निमिति** ॥ ३२ ॥

अथाग्निमिति ॥ ३२ ॥

**आत्मा द्विपुरुषायामो दशपदव्यासः। तस्य दक्षिणादंसादुत्तरतोऽध्यर्धप्रक्रमे लक्षणं करोति। एवमपरतः। तयोरुपरिष्टात् स्पन्द्यां नियम्यांसमपच्छिन्द्यात्। एतेनेतरासां स्रक्तीनामपच्छेदा व्याख्याताः। स आत्मा ॥ ३३ ॥**

**आत्मेति। द्विपुरुषायाम** इति। प्राक्प्रत्यक् अष्टप्रक्रमदीर्घम्, उत्तरदक्षिणा पञ्चप्रक्रमविस्तारं चतुरश्रं कृत्वा। **दक्षिणादिति**। दक्षिणांसे दक्षिणस्रक्तिमारभ्य उत्तरतः सार्धप्रक्रमं मित्वा तत्र शङ्कुं निहत्य। **एवमिति**। एवं तस्या एव स्रक्तेरपरतः शङ्कुं निहत्य तयो रज्जुं नियम्य बहिःस्पन्द्यं वर्जयेदित्यर्थः। **एतेनेतरासामिति**। एवमन्यासां तिसृणां अपच्छेदा द्रष्टव्याः। **स** इति। चतसृषु स्रक्तिषु अपच्छिन्नावशिष्टांश आत्मेत्यर्थः ॥ ३३ ॥

आत्मेति। दशपदेति। एवं चत्वारिंशत् षोडश्यो भवन्ति। तस्येति। दक्षिणादंसादारभ्योत्तरतः अध्यर्धप्रक्रमे लक्षणं करोति। अपरत इति। दक्षिणादंसादेवारभ्य पश्चादपि अध्यर्धप्रक्रमे लक्षणम्। तयोरिति। तयोः शङ्क्वोरुपरिष्टात् स्पन्द्यां नियम्य अनुस्पन्द्यं अंसमपच्छिन्द्यात्। एवं सार्धपादा चतुर्थी निरस्ता भवति। एतेनेति। एतेन अपच्छेदनप्रकारेण। इतरासां आत्मनः श्रोण्यंसानाम्। अपच्छेदा

व्याख्याता: । स इति । आत्मश्रोण्यंसेषु अर्धपञ्चमाश्चतुर्थ्यो निरस्ता भवन्ति । अथ शिष्टा अर्धषष्ठास्त्रिंशच्चतुर्थ्यो भवन्ति ॥ ३३ ॥

**शिरोऽर्धषष्ठपदायाममर्धपुरुषव्यासं तस्यांसौ प्रक्रमेण प्रक्रमेणापच्छिन्द्यात् ॥ ३४ ॥**

**शिर** इति । अर्धं षष्ठं यस्य तदर्धषष्ठम् । सार्धपञ्चपदप्राक्प्रत्यक्दीर्घं, प्रक्रमद्वयविस्तारम्, आत्मनः पुरस्ताद् मध्यप्रदेशे दीर्घचतुरश्रं कृत्वा शिरसः पूर्वस्यां करण्यां मध्यप्रदेशे शङ्कुं निहत्यांसयोः स्रक्तीभ्यामारभ्य पश्चाद्भागयोः प्रक्रमप्रमाणे शङ्कू निहत्य शङ्कूनामुपरि स्पन्द्यां नियम्य बहिःस्पन्द्यमपच्छिन्द्यात्, यदवशिष्टं तच्छिर इत्यर्थः ॥ ३४ ॥

शिरविति । तस्य शिरसः । अयमत्र प्रकारः । पूर्वस्याः करण्या मध्ये शङ्कुं निहत्य दक्षिणोत्तरयोः करण्योः पूर्वभागे प्रक्रमप्रमाणेन लक्षणं कृत्वा स्पन्द्यां नियम्य बहिःस्पन्द्यमपच्छिन्द्यात् । एवं अपच्छेदेन एका चतुर्थी निरस्ता भवति । इतरा अर्धपञ्चमाः शिरो भवन्ति ॥ ३४ ॥

**पुच्छस्य षट्पदा प्राची द्विपुरुषोदीची । तस्य पूर्वं स्रक्ती त्रिभिस्त्रिभिः प्रक्रमैरपच्छिन्द्यात् ॥ ३५ ॥**

**पुच्छस्येति । तस्येति** । दक्षिणोत्तरे अंसस्रक्ती आरभ्य त्रिषु त्रिषु प्रक्रमेषु शङ्कुद्वयं निहत्य श्रोणिस्रक्त्योरपि शङ्कुद्वयं निहत्य शङ्कुषु स्पन्द्यामाबध्य बहिःस्पन्द्यमपच्छिन्द्यात् । अवशिष्टः पुच्छमित्यर्थः ॥ ३५ ॥

पुच्छस्येति । आत्मपश्चिमपार्श्वेन सह । एवं चतुर्विंशतिश्चतुर्भागीयाः । तस्येति । दक्षिणादंसादुत्तरतः प्रक्रमत्रयेऽतीते लक्षणम् । एवं उत्तरांसाद् दक्षिणतः । तयोः स्पन्द्यां नियम्य श्रोण्योर्निपातयेत् । एवं नव चतुर्थ्यो निरस्ता भवन्ति । पुच्छक्षेत्रे पञ्चदश परिशिष्टा भवन्ति ॥ ३५ ॥

**पक्षो द्वादशपदायामो दशपदव्यासः । तस्य मध्यात् प्राञ्चि षट्पदानि प्रक्रम्य शङ्कुं निहन्यात् । श्रोण्योरेकैकम् । अथैनां स्पन्द्यया परिचिनुयात् । अन्तःस्पन्द्यमपच्छिद्य तत्पुरस्तात् प्राञ्चं दध्यात् । स निर्णामः । एतेनोत्तरस्य पक्षस्य निर्णामो व्याख्यातः । पक्षाग्रयोः प्रक्रमप्रमाणानि पञ्च पञ्च चतुरश्राण्यनूचीनानि कृत्वा**

**सर्वाण्यवाश्चमक्ष्णयापच्छिन्द्यादर्धान्युद्धरेत् । एवं सारत्निप्रादेशः सप्तविधः संपद्यते ॥ ३६ ॥**

**पक्षो द्वादशेति** । प्राक् प्रत्यक् दशपदव्यासं दक्षिणोत्तरं द्वादशपदायामं दीर्घचतुरश्रं विहृत्यापरस्याः करण्याः मध्यादारभ्य पुरस्तात् प्रक्रमत्रयं मित्वा तत्र शङ्कुं निहत्य श्रोणिस्रक्त्योः शङ्कुद्वयं निहत्य शङ्कूनामुपरि स्पन्द्यां नियम्यान्तःस्पन्द्यं परिच्छिन्द्यात् । **प्राञ्चं दध्यादिति** । अपरिच्छिन्नं पुरस्तात् आदध्यात् । स निर्णाम इत्यर्थः । **पक्षाग्रयोरिति** । चतुरश्राणि कारयेदित्युक्त्या पक्षाद् बहिरिति ज्ञायते । अनूचीनानि निरन्तराणीत्यर्थः । अर्धान्युद्धरेद् दक्षिणपक्षाग्रेषु आग्नेयदलानि उत्तरपक्षाग्रेषु ऐशान्यदलानि त्यजेत् । **एवमिति** । एवञ्च सति सारत्निप्रादेशः सप्तविधः संपद्यते ॥ ३६ ॥

पक्षविति । आत्मदक्षिणपार्श्वमध्यसङ्गत उदगायतः । एवं त्रिंशत् चतुर्थ्यो भवन्ति । पक्षमध्यनमनमाह—तस्येति । पक्षापरान्तमध्याद् आरभ्य प्राञ्चं षट्पदानि प्रक्रम्य शङ्कुं निहन्यात् । श्रोण्योरिति । पक्षापरस्रक्त्योरित्यर्थः । अथैनामिति । एनां चिह्नान्तरालभूमिं सर्वत्र स्पन्द्यया वेष्टयेत् । अन्त इति । अन्तःस्पन्द्यं स्पन्द्यान्तर्गतं क्षेत्रमथोद्धृत्य पक्षस्य पुरस्तात् प्राञ्चं प्रागग्रमुपदध्यात् । एतदुक्तं भवति । पक्षपूर्वान्तमध्यादारभ्य प्राञ्चं षट्पदं प्रक्रम्य लक्षणं कृत्वा तस्मिन् पाशौ प्रतिमुच्य पक्षपूर्वस्रक्त्या निपातयेदित्यर्थः । स इति । य एष उक्तः स निर्णामः निर्णमनम् । अर्थनिर्देशोऽयं न संज्ञा अपनाम इत्युत्तरत्र ( ३।५४ ) वक्ष्यमाणत्वात् । एतेनेति । निर्णाम इत्यस्य प्रदर्शनार्थत्वात् । दक्षिणस्य पक्षस्य यदुक्तं द्वादशपदायाम इत्यादि तत्सर्वं परिगृह्यते । अन्यथासम्भवात् । पक्षाग्रयोरिति । पक्षाग्रयोर्दक्षिणत उत्तरतस्ताभ्यां संश्लिष्टानि सर्वतस्त्रिंशदङ्गुलानि पञ्चचतुरस्राणि प्रागपवर्गाणि कृत्वा अवाञ्चं अवाग् यथा भवति तथा अक्ष्णया अपच्छिन्द्यात् । अर्धानुद्धरेत् । एवं उभयत्र पञ्च चतुर्थ्यो भवन्ति ।

एवमिति । एवं पक्षात्मशिरःपुच्छेषु विभक्तेषु अरत्निक्षेत्राभ्यां प्रादेशक्षेत्रेण सह सप्तविधः पुरुषः संपद्यते । अर्धाष्टमपुरुषोऽग्निर्भवतीत्यर्थः । एवं सर्वत्र ।

अत्र आत्मनि सार्द्धपञ्चत्रिंशत् चतुर्थ्यः । शिरसि अर्धपञ्चमाः । पुच्छे पञ्चदश । दशसु पत्रेषु पञ्च । पक्षयोः षष्टिः । एवं विंशत्यधिकं शतं षोडश्यः । पुरुषक्षेत्रे षोडश षोडश्यः शेरते । एवं सर्वत्र द्रष्टव्यम् ॥ ३६ ॥

**उपधाने शिरसोऽप्यये चतुर्थीमुपदध्यात् । हंसमुखीं पुरस्तात् । पादेष्टके अभितः । तयोरवस्तादभितस्तिस्रस्तिस्रश्चतुरस्रपाद्याः । शेषे पादेष्टकाः ॥ ३७ ॥**

**उपधान** इति । क्रियमाण इति शेषः । **शिरसोप्यय** इति । आत्मन उपरि शिरसो मूलप्रदेशमध्य इत्यर्थः । **हंसमुखीमिति** । (सर्वतः) (पूर्वत?) चतुर्थ्याः पुरस्तादित्यर्थः । **अभित** इति । हंसमुख्या दक्षिणोत्तरपार्श्वयो-रित्यर्थः । **तयोरवस्तादिति** । उपहितयोः पाद्ययोरवस्तादधस्तात् पश्चाद्-भाग इत्यर्थः ॥ ३७ ॥

उपधान इति । सर्वत्राप्ययशब्देन पक्षपुच्छशिरसां आत्मसङ्गतः प्रदेशो विधीयते । शिरसोऽप्यये मूलप्रदेश इत्यर्थः । अविशेषात् मध्ये । पार्श्वयोरुभयत्र पञ्चदशाङ्गुलमवशिष्य । हंसमुखीमिति । पुरस्तात् चतुर्थ्याः पुरस्तात् प्रागग्रां हंसमुखी-मुपदध्यात् । पादेष्टक इति । हंसमुख्या अभितः प्रत्यगग्रे । अग्रप्रदेशेन संश्लिष्य दीर्घपार्श्वे पादेष्टके उपदध्यात् । तयोरुपहितयोः पादेष्टकयोरवस्तात् पश्चात् । अभितः चतुर्थीहंसमुख्योरभितः । तिस्रस्तिस्रश्चतुरस्रपाद्या उपदध्यात् । उभयत्र हंसमुखीपश्चिमान्तेन तुल्यां बहिर्दीर्घपार्श्वां प्रागग्रां एकैकामुपधाय तयोः पश्चात् पञ्चदशाङ्गुलव्यासत्रिंशदङ्गुलक्षेत्रे द्वे द्वे यथायोगमुपदध्यात् । शेष इति । शिरसः शेषे पादेष्टकाः । सामर्थ्याच्चतस्र इत्यर्थः । तत्र शिरोऽग्रहंसमुख्यग्रयोर्मध्ये प्राग-ग्रप्रत्यगग्रे द्वे (?) । प्रत्यगग्रपाद्याभितः प्रागग्रे द्वे । एवं चतुर्दशेष्टकाः शिरस्युपहिता भवन्ति ॥ ३७ ॥

**अपि वा शिरसोऽग्रे हंसमुखीमुपदध्यात् । तस्या अवस्ताच्चतु-र्थीमुपदध्यात् । पादेष्टकेऽभितः । तयोरवस्तादभितस्तिस्रस्तिस्रश्च-तुरस्रपाद्याः । शेषे पादेष्टकाः ॥ ३८ ॥**

पक्षान्तरमाह—**अपि वेति** । **शेष** इति । प्रथमपक्षोक्तचतुर्थीस्थान इत्यर्थः ॥ ३८ ॥

अपि वेति । शिरसोऽग्रे हंसमुखीमुपधाय तस्याः पश्चात् चतुर्थीमुपधाय तयोर-भितः पादेष्टके दक्षिणोत्तराग्रे अभ्यन्तरदीर्घपार्श्वे उपधाय तयोः पश्चात् पश्चिमान्त-

सङ्गते चतुरस्रपाद्ये बहिर्दीर्घपार्श्वे प्रागग्रे उभयत उपधाय तयोः पश्चात् पदन्यास-प्रक्रमदीर्घपूर्वापरचतुरस्रक्षेत्रे द्वे द्वे चतुरस्रपाद्ये उपधाय तयोर्युगलयोर्मध्येऽवशिष्ट-चतुर्भागीयक्षेत्रे चतस्रः पादेष्टका इति । अयमपर उपधानकल्पः । अत्रापि शिरसि चतुर्दश ॥ ३८ ॥

**शिरसोऽवस्तात् पञ्चपादेष्टका व्यतिषक्ता उपदध्यात् । तथा पुच्छस्य पुरस्तात् ॥ ३९ ॥**

**शिरसोऽवस्तादिति** । शिरसः पश्चादात्मन्यग्रभागे पञ्च पाद्याः व्यत्यासेन संश्लिष्टा इत्यर्थः । **तथा पुच्छस्येति** । पुच्छादात्मनि पश्चाद्भागे पञ्च पाद्याः पूर्ववदुपदध्यात् ॥ ३९ ॥

शिरसविति । व्यतिषक्ता व्यत्यस्ता दक्षिणोत्तराभिः । द्वितीयाचतुर्थ्यौ प्रत्यगग्रे । इतराः प्रागग्राः । तथेति । पादेष्टकाः पञ्च व्यतिषक्ताः । अत्र द्वितीयचतुर्थ्यौ प्रागग्रे । इतराः प्रत्यगग्राः ॥ ३९ ॥

**यद्यदपच्छिन्नं तस्मिन्नर्धेष्टकाः पादेष्टकाश्चोपदध्यात् ॥४०॥**

**यद्यदिति** । प्रथमयच्छब्दः अव्ययत्वात् पञ्चम्यन्तः, द्वितीयस्तु प्रथमान्तः । तथा च यतोऽपच्छिन्नं यदपच्छिन्नमित्यर्थद्वयलाभात् आत्मपुच्छपक्षेषु स्रक्तीनां प्रदेशेभ्यः यतोऽपच्छेदः तत्र च पक्षयोरुपरितननिर्णामयोरपि अर्थादुपधानं सिद्धं भवति । अपच्छिन्नस्यैवोपनमनाभिधानादिति भावः ॥ ४० ॥

यद्यदिति । अपच्छेदेषु अन्यासामसम्भवात् । सिद्धस्य वचनम् अर्ध्यामिश्राभिः पाद्याभिरुपधानार्थम् । तत्र शिरसि आत्मपूर्वापरान्ते पूर्वमेवोपहिताः पादेष्टकाः । अनेन सूत्रेण पुच्छपूर्वान्ते पार्श्वयोर्द्वे द्वे पादेष्टके । निर्णामान्तयोरपच्छेदेषु चतस्रश्चतस्रः पाद्याः । अन्यत्र अर्धेष्टकाः ॥ ४० ॥

**शेषमग्निं चतुर्भागीयाभिः प्रच्छादयेत् । पाद्याभिः संख्यां पूरयेत् ॥ ४१ ॥**

**शेषमिति** । चतुर्भागीयाभिः षोडशभागीयाभिश्चतुर्थीभिरिति यावत् । एवमुपधाने कथं तर्हि शतेष्टकासंपत्तिः ? कथञ्च स्वयमातृण्णाया अनपिधानमित्यत आह—**पाद्याभिरिति** ॥ ४१ ॥

शेषमिति। अत्र चतुर्भागीयाभिरेवेति न नियम्यते। ताभिः पूरयितुमशक्यत्वात्। पाद्याभिरिति। चतुर्थीभिः प्रच्छादिते द्विशतसंख्या न पूर्यते। तत्र अर्ध्यासहिताभिः पाद्याभिः संख्यां द्विशतसंख्यां पूरयेत्।

तत्रैवमुपधानम्। शिरोवर्जं पुच्छेन सह आत्मनि उदीच्यो द्वादशरीतयः। तत्र पुच्छाग्रे मध्यतः षट् चतुर्थ्यः। पार्श्वयोरर्धे। द्वितीयरीत्यां पार्श्वयोरर्ध्ये मध्ये षोडशपाद्याः। तृतीयस्यां मध्ये द्वे चतुर्थ्यौ पार्श्वयोर्द्वे द्वे पाद्ये। चतुर्थ्यां पञ्च पाद्याः पूर्वोक्ताः। पञ्चम्यां पार्श्वयोरर्ध्ये मध्ये तिस्रश्चतुर्थ्यः। ततः पञ्चसु पञ्च पञ्च चतुर्थ्यः। तत्र अष्टम्यां मध्यामुद्धृत्य द्वे अर्ध्ये। पञ्चमीवदेकादशी। ततः पूर्वोक्ताः पञ्च पाद्याः। शिरसि चतुर्दश पूर्वमेवोक्ताः।

पक्षयोः पत्त्राणि पञ्चार्ध्याः। तत्र दक्षिणपक्षस्थाः प्रागुत्तरविशेषाः। विपरीता इतराः। तत्र पक्षयोः प्राच्यः षट् षड्रीतयः। तत्र दक्षिणे पक्षे दक्षिणादारभ्य मध्ये चतस्रश्चतुर्थ्यः पश्चात् पुरस्ताच्च अर्ध्ये। एवं द्वितीया। तृतीयस्यामादितः सप्त अर्ध्या उपधाय ततो दक्षिणपूर्वकर्णां अर्ध्यामेकामुपधाय ततश्चतस्रः पाद्याः संहिताग्रा उपदध्यात्। एवं चतुर्थी रीतिः। पञ्चम्यां आदितोऽर्ध्या ततस्तिस्रश्चतुर्थ्यस्ततोऽर्ध्यात्रयम्। दक्षिणारीतिवत् षष्ठी रीतिः। एवमुत्तरः पक्षः। एवं षट्चत्वारिंशदात्मनि। शिरसि चतुर्दश। द्वात्रिंशत् पुच्छे। पक्षयोरष्टशतम्।

अस्मिन् प्रस्तारे नवषष्टिश्चतुर्थ्यः। अर्ध्याः द्वासप्ततिः। पाद्याः द्विपञ्चाशत्। षट् चतुरस्रपाद्याः। एका हंसमुखी। एष द्विशतः प्रस्तारः॥ ४१॥

**अपरस्मिन् प्रस्तारे हंसमुखीश्चतस्रश्चतसृभिः पादेष्टकाभिः संयोजयेद् यथा दीर्घचतुरश्रं संपद्यते। तत्तिर्यक् स्वयमातृण्णावकाश उपदध्यात्॥ ४२॥**

**अपरस्मिन्निति। यथेति।** चतस्रो हंसमुखीः परस्परसंश्लिष्टमुखा उपधाय पार्श्वद्वयोर्वा (हंसविशेष पाद्याद्वये मध्येऽन्तः सविशेषो पाद्याद्वये) चोपधीयमाने दीर्घचतुरश्रं भवतीति वेदितव्यम्। एवमुपधानप्रकारमभिधाय स्थलं निर्दिशति—**तदिति**। दीर्घचतुरश्रमित्यर्थः। **तिर्यगिति**। दक्षिणोत्तरदीर्घमित्यर्थं. (?) ॥ ४२॥

अपरस्मिन्निति। एवं कृत्वा उपदध्यादिति विवक्षितम्। ईदृग्रूपा इष्टका उपदध्यादित्यर्थः।

तत्रैवमुपधानम्। स्वयमातृण्णावकाशमध्यं गृहीत्वा पदत्रयव्यासं प्रक्रमद्वयदीर्घं दीर्घचतुरस्रं दक्षिणोत्तरं बुद्ध्या परिकल्प्य चतुरस्रपूर्वपार्श्वे प्रत्यगग्रे द्वे

हंसमुख्यौ पश्चिमपार्श्वे प्रागग्रे द्वे हंसमुख्यौ। तासां मध्ये दक्षिणोत्तराग्रे अन्तर्दीर्घपार्श्वे पादेष्टके। चतुरस्रदक्षिणोत्तरपार्श्वयोर्मध्यभूतान्तरालयोर्बहिर्दीर्घपार्श्वे दक्षिणोत्तराग्रे द्वे पादेष्टके। एवं अष्टेष्टकं दीर्घचतुरस्रं भवति ॥ ४२ ॥

**हंसमुख्यौ प्रतीच्यौ पुच्छाप्यये ऽर्धपदेनात्मनि विशये। तयोरवस्तादभितस्तिस्रः पादेष्टकाः प्राङ्मुखीरुपदध्यात्। पुच्छस्यावस्तात् पञ्चदश पादेष्टका व्यतिषक्ता उपदध्यात् ॥ ४३ ॥**

**प्रतीच्याविति**। प्रत्यङ्मुखे इत्यर्थः। **पुच्छाप्यय** इति। पुच्छात्मसन्धावित्यर्थः। **अर्धपदेनेति**। मुखं सन्नतांशो यथा पुच्छे इतरांशश्च आत्मनि भवति तथोपदध्यादित्यर्थः। आत्मान्तर्गते विशये एकदेशे इत्यर्थः। विशयशब्दस्यैकदेशार्थत्वमापस्तम्बेनोक्तम्। **अभित** इति। हंसमुख्योर्दक्षिणत उत्तरतः मध्यतश्चेत्यर्थः। **पुच्छस्येति**। **अवस्तादिति**। अग्र इत्यर्थः ॥ ४३ ॥

हंसमुख्याविति। पुच्छात्मसन्धौ द्वे हंसमुख्यौ प्रत्यगग्रे। अर्धपदमात्रेणोपलक्षितो योऽवयवः स आत्मनि यथा भवति तथा उपदध्यात्। विशयशब्दार्थमाह आपस्तम्बः। अर्धमात्मनि अर्धं पक्षे इति। तत्र अर्धशब्दस्योभयत्र स्थित्युपलक्षणत्वाद् एकदेशोऽपि गृह्यते। तयोरिति। तयोर्हंसमुख्योः पश्चाद् अभितो दक्षिणतश्चोत्तरतश्च प्रागग्राः पादेष्टकास्तिस्र उपदध्यात्। हंसमुख्योः पश्चात् प्रत्यग्दीर्घपार्श्वाः प्रागग्राः हंसमुख्योरग्राभ्यां संहिता उपदध्यादित्यर्थः। पुच्छस्येति। पुच्छाग्रे पञ्चदश पादेष्टकाभिः एका रीतिः। तत्र प्रागग्रा अष्टौ पादेष्टकाः। प्रत्यगग्राः सप्त ॥ ४३ ॥

**पादेष्टकेऽर्धेष्टकामिति पक्षपत्त्राणां प्राचीर्व्यत्यासं चिनुयात्। विशये यद्यपच्छिन्नं तस्मिन्नर्धेष्टकाः पादेष्टकाश्चोपदध्यात् ॥ ४४ ॥**

**पादेष्टक** इति। पक्षस्य पत्त्राणाञ्च विशये सन्धौ व्यत्यासं पाद्ययोर्व्यत्यासं कृत्वा पाद्याद्वयमध्यां पुनः पाद्याद्वयं पुनरर्ध्यामिति प्राचीः प्राक्संस्था उपदध्यादित्यर्थः। **यद्यदिति**। पूर्ववदर्थः। अत्र च शिरोपच्छेदद्वयेऽप्यर्ध्याद्वयमुपदध्यात् ॥ ४४–४५ ॥

पादेष्टक इति। द्वे पादेष्टके। एका अर्धेष्टका। एवं यावन्ति पत्त्राणि व्यत्यस्य पुनरपि पादेष्टके इत्यादिनोपदध्यात्।

तत्र प्रथमपश्चिमपत्त्राग्रे प्रागग्रा पाद्या, तस्या उत्तरतः प्रत्यगग्रा पाद्या, तस्याः पुरस्तात् उत्तरपूर्वदीर्घबाह्यकर्णां पादेष्टकादीर्घपार्श्वेन प्रक्रमेण संगतां अर्धेष्टकामुपदध्यात्। एवं पञ्चपत्त्रेषूपधानम्। विशये पक्षात्मसन्धिषु निर्णामाद्यन्तेषु यदपच्छिन्नं क्षेत्रं तस्मिन् अर्धेष्टकाः पादेष्टकाश्च यथासम्भवमुपदध्यात्। विशय उक्तार्थः ॥ ४४ ॥

**शेषमग्निं चतुर्भागीयाभिः प्रच्छादयेत्। पाद्याभिः साध्याभिः संख्यां पूरयेत् ॥ ४५ ॥**

शेषमिति। पूर्वमेव व्याख्यातः। तत्रैवमुपधानम्।

पुच्छे विशयस्थरीत्या सह उदीच्यश्चतस्रो रीतयः। तत्र प्रथमं पुच्छाग्रे पञ्चदश पादेष्टकाः पूर्वमुक्ताः। ततः पूर्वस्यां मध्ये पञ्च चतुर्थ्यः पार्श्वयोरर्ध्ये। तृतीयस्यां मध्ये तिस्रश्चतुर्थ्यः पार्श्वयोरर्ध्ये। सन्धिरीत्यां प्रागग्रास्तिस्रः पादेष्टकाः। तासां पुरस्तात् प्रत्यगग्रं हंसमुखीद्वयं व्यतिषक्तमुपदध्यात्। एवं पञ्चेष्टका सन्धिरीतिः।

तत्रात्मनि पक्षयोश्च प्रागायता अष्टादशरीतयः। तत्र आत्ममध्यमे रीती शिरसा सह। तत्र आत्ममध्यमरीत्योर्दक्षिणा उच्यते। पूर्वं पुच्छात्मसन्धिरीत्यां दक्षिणतः प्रत्यगग्रं उपहिताया हंसमुख्याः पुरस्तात् तिस्रश्चतुर्थ्यः। ततः प्रागग्रा हंसमुखी (तस्याः पुरस्तात् प्रत्यगग्रा हंसमुखी इति थिबो महाशयेनानुमितः पतितः पाठः) पूर्वहंसमुख्या अग्रेणाग्रसंगता। तयोर्मध्ये दक्षिणत उत्तरतश्च उदग्दक्षिणाग्रे पादेष्टके। एवमुपहितचतुष्टयस्य पुरस्तात् तिस्रश्चतुर्थ्यः। ततः पञ्च अर्धेष्टकाः। एवं पञ्चदशेष्टका रीतिः।

ततो दक्षिणस्यां चतुर्दशार्धेष्टकाः। ततः पक्षात्मविशयरीत्यां पश्चाद् अर्धेष्टका ततश्चतस्रश्चतुर्थ्यः। ततः सन्धौ मध्यतः प्रागग्रा पाद्या। पार्श्वयोर्दक्षिणोत्तराग्रे द्वे पादेष्टके। एवं पाद्यात्रयमग्रेण संगतं भवति। एवं अष्टेष्टका सन्धिरीतिः।

तस्या दक्षिणतो रीतिद्वयेनाष्टौ चतुर्थ्यः। पार्श्वयोश्चतस्र अर्धेष्टकाः।

निर्णामरीत्यां आदौ मध्यतः प्रत्यगग्रा पादेष्टका। तस्या दक्षिणत उत्तरतश्च उदग्दक्षिणाग्रे द्वे पादेष्टके। एवं पाद्यात्रयं अग्रसङ्गतं भवति। ततः चतस्रश्चतुर्थ्यः। तत एका पाद्या प्रागग्रा। एवं अष्टेष्टका रीतिः।

ततो रीतिद्वयेन अष्टौ चतुर्थ्यः। पार्श्वयोश्चतस्र अर्ध्याः तयोर्दक्षिणा रीतिः पत्त्रैः सह पूर्वमेवोक्ता पञ्चदशेष्टकात्मिका।

उत्तरपार्श्वस्याप्येवमुपधानम्। एवं पुच्छे द्वाविंशदिष्टकाः। अष्टपञ्चाशद् आत्मशिरसोः। पक्षयोर्दशशतम्।

अस्मिन् प्रस्तारे अष्टषष्टिश्चतुर्थ्यः। अर्धेष्टकाः सप्ततिः। षट्पञ्चाशत् पादेष्टकाः। हंसमुख्यः षट् ॥ ४५ ॥

**अथापरः ॥ ४६ ॥**

पञ्चपत्तृश्येननिरूपणान्तरं षट्पत्तृश्येनप्रकारो निरूप्यते तन्निरूपणाधीननिरूपणत्वादित्यर्थः । **अथेति** ॥ ४६ ॥

अथ उक्तमेव श्येनचितं प्रकारान्तरेणाह—अथापर इति । अथशब्दः पूर्वेण सम्बन्धार्थः । ये पूर्वस्य उक्ता धर्माः अंसापच्छेदनादय अस्यापि ते भवन्तीति । अपरः प्रकारः । श्येनाकृतेरपरः प्रकारो वक्ष्यत इत्यर्थः ॥ ४६ ॥

**पुरुषस्य पञ्चमीभिः शतमशीतिः सप्तार्धश्च सारत्निः प्रादेशः सप्तविधः संपद्यते ॥ ४७ ॥**

**पुरुषस्येति** । पुरुषस्य विंशत्युत्तरशताङ्गुलप्रमाणस्य पञ्चमीभिः पञ्चमांशप्रमाणाभिरिष्टकाभिरित्यर्थः । सर्वतोऽरत्निप्रमाणाभिरिति यावत् । पञ्चमीभिरिति षष्ठ्यर्थे तृतीया । शतमशीतिः सप्तार्धश्च सारत्निप्रादेशः सप्तविधः संपद्यते, अर्धाष्टमोत्तराशीत्यधिकशतेष्टकापरिमितक्षेत्रविशेषः सार्धसप्तविधोऽग्निर्भवतीत्यर्थः ॥ ४७ ॥

पुरुषस्येति । षष्ठ्यर्थे तृतीया । पुरुषस्य पञ्चमीनां इष्टकानां शतमशीतिश्च सप्त चार्धेष्टका च सारत्निप्रादेशः सप्तविधः संपद्यते । पुरुषक्षेत्रे पञ्चविंशतिः पञ्चम्यः शेरते । अर्धपुरुषक्षेत्रे अर्धत्रयोदश । एवं सारत्निः ॥ ४७ ॥

**तासां पञ्चाशद् द्वे चात्मनि ॥ ४८ ॥**

**तासामिति** । पञ्चमीनामित्यर्थः । पञ्चाशद् द्वे चेष्टके आत्मनि यथा सम्भवन्ति तथोपदध्यात् । एवञ्च सति षष्टिरिष्टकाः शेरते, अवशिष्टानामिष्टकानां वक्ष्यमाणेन (३।५२) स्रक्त्यपच्छेदेन निवृत्तिर्भवति ॥ ४८ ॥

ताभिरिष्टकाभिरात्मपक्षपुच्छशिरसां मानमाह—तासामिति । उपदध्यादिति शेषः । एवं सर्वत्र । सामर्थ्यादात्मक्षेत्रं षडरत्निविस्तारं द्विपुरुषायामं दीर्घचतुरस्रं भवति । तत्र षष्टिः पञ्चम्यः शेरते । अर्धव्यायामेन स्रक्तीनामपच्छेद (३।५२) इति वक्ष्यते । एवं श्रोण्यंसेषु द्वाभ्यां द्वाभ्यामरत्निभ्यामपच्छेदने कृते अरत्न्यष्टकं निरस्तं भवति । शेषाः पञ्चाशद् द्वे च भवन्ति ॥ ४८ ॥

**अर्धचतुर्थाः शिरसि ॥ ४९ ॥**

**अर्धचतुर्था** इति । अर्धं चतुर्थं (च) यासां ता अर्धचतुर्था इत्यर्थः । मूर्ध्नि उपदध्यादित्यर्थः । शिरसः अंसापच्छेदार्थमेकपञ्चमीक्षेत्रेण सह द्व्य-

रत्निव्यासं सपादद्वयरत्निदीर्घंचतुरश्रं कुर्यादित्यर्थः। एवञ्च अर्धपञ्चमे अवशिष्ट (!) शिरोऽपच्छेदनेन एकस्याः पञ्चम्या निवृत्तेर्भविष्यति ॥ ४९ ॥

अर्धेति। पूर्ववच्छिरःस्थानेऽरत्निद्वयव्यासं चतुःपञ्चाशदङ्गुलायामं दीर्घचतुरस्रं विहृत्य आकृतिः शिरसो नित्या (३।५६) इति वक्ष्यमाणत्वाद् इह अरत्नौ पूर्वद्वयेनप्रक्रमभक्तिं कृत्वा पूर्वस्याः करण्या मध्याद् दक्षिणोत्तरयोररत्निमात्रे पूर्वभागे निपातयेत्। एवं अर्धचतुर्थाः पञ्चम्यो भवन्ति ॥ ४९ ॥

**पञ्चदश पुच्छे ॥ ५० ॥**

**पञ्चदशपुच्छ** इति। यथा पञ्चदशेष्टकाः पुच्छे सम्भवन्ति तथोपदध्यादुपधानं कुर्यादित्यर्थः ॥ ५० ॥

पञ्चदशेति। अरत्निविस्तारं अष्टारत्निदीर्घं उदगायतं चतुरस्रं कृत्वा पूर्वद्वयेनवत् प्रक्रमस्थाने त्रिभिस्त्रिभिररत्निभिः अंसमपच्छिन्द्यात्। पञ्चदश पञ्चम्यः शेरते ॥ ५० ॥

**अष्टपञ्चाशत् साध्यर्धा दक्षिणे पक्ष उपदध्यात्। तथोत्तरे ॥५१॥**

**अष्टपञ्चाशदिति**। पक्षाग्रे अध्यर्धाभिः षट् चतुरश्राणि कृत्वा पूर्ववदवाञ्चमक्षणयापच्छिन्द्यादेवम् अष्टपञ्चाशत् साध्यर्धा दक्षिणे पक्षे उपदध्यात्। **तथोत्तर** इति। अर्धनवमोत्तरपञ्चाशदिष्टका दक्षिणे पक्ष उपदध्यात्। एवमेवोत्तरे पक्ष उपदध्यात्। एवञ्च पक्षयोः सप्तदशाधिकशतेष्टकाः संपन्नाः। दक्षिणपक्षाग्रे उपयोगो वक्ष्यते ॥ ५१ ॥

पक्षस्थाने षडरत्निविस्तारं नवारत्न्यायामं उदगायतं दीर्घचतुरस्रं विहृत्य पक्षयोस्त्रिभिस्त्रिभिररत्निभिरपनाम ( ३।५४ ) इति वक्ष्यमाणत्वात् त्रिभिररत्निभिः पक्षनमनम्। चतुःपञ्चाशत् पञ्चम्यः शेरते। अध्यर्धाध्यर्धाभिः षट् षट् पत्त्राणि कुर्यादिति ( ३।५५ ) वक्ष्यमाणत्वात् पक्षाग्रे अध्यर्धाभिः षट् चतुरस्राणि कृत्वा पूर्ववद् अवाञ्चं अक्षणया अपच्छिन्द्यात्। एवं पत्त्रेषु अर्धपञ्चमाः पञ्चम्यः शेरते। एवं अष्टपञ्चाशत् साध्यर्धा दक्षिणे पक्षे उपदध्यात्। तथोत्तरइति। अष्टपञ्चाशदित्यनुवर्त्तते ॥ ५१ ॥

**अर्धव्यायामेन स्रक्तीनामपच्छेदः ॥ ५२ ॥**

उक्तानामात्मादिपञ्चचतुरश्राणामपच्छेदनादिकं क्रमेणाह—**अर्धव्यायामेनेति**। षडरत्निव्यास-दशारत्निदीर्घ-चतुरश्रस्य पूर्वोक्तस्यात्मन

स्रक्तीनां कोणानामर्धव्यायामेन द्वाभ्यामरत्निभ्यामपच्छेदः कर्त्तव्य इत्यर्थः । अयमर्थः—चतुरश्रस्य दक्षिणांसकोणादारभ्य पश्चिमपार्श्वेऽरत्निद्वयं मित्वा तत्र शङ्कुं निहत्य, एवमुत्तरपार्श्वेऽप्यरत्निद्वयं मित्वा तत्र शङ्कुं निहत्य शङ्कोरुपरि स्पन्द्यां नियम्य ( बहिः ? ) स्पन्द्यमपछिन्द्यात् । एवं तिसृषु स्रक्तिषु अपच्छेदो द्रष्टव्य इति । एवं चात्मनि पञ्चाशद् द्वे चेष्टका भवन्ति ॥ ५२ ॥

अर्धेति । उक्तार्थम् ॥ ५२ ॥

**संनतं पुच्छम् ॥ ५३ ॥**

**संनतमिति** । विस्तृतमित्यर्थः । संनतं पुच्छमित्युक्त्या पञ्चदश पुच्छेत्युक्त्या च त्र्यरत्निव्यासाष्टारत्निदीर्घचतुरश्रस्य त्रिभिस्त्रिभिररत्निभिः पुच्छापच्छेदः । वक्रश्येनपुच्छचतुरश्रस्य दक्षिणादंसादारभ्य उत्तरपार्श्वेऽरत्नित्रयं मित्वा पुच्छयोस्त्रिभिस्त्रिभिरपनामं कुर्यात् ॥ ५३ ॥

संनतमिति । पुच्छपूर्वान्तस्य द्व्यरत्नित्वात् पूर्वस्मात् संनतं संकुचितम् । विस्पष्टार्थं सिद्धस्य पुनर्वचनम् ॥ ५३ ॥

**पक्षयोस्त्रिभिस्त्रिभिररत्निभिरपनामः ॥ ५४ ॥**

**पक्षयोरिति** । अयमर्थः—पक्षार्थं कृतस्य षडरत्निव्यास नवारत्निदीर्घ-दीर्घचतुरश्रस्यापरस्याः करण्या मध्यादारभ्य पुरस्तादरत्नित्रयं मित्वा तत्र शङ्कुं निहत्य श्रोणिस्रक्त्योरपि शङ्कुद्वयं निहत्य शङ्कूनामुपरि स्पन्द्यां नियम्य बहिःस्पन्द्यमपच्छिन्द्यात् । यदपच्छिन्नं तत् पुरस्ताद् दध्यात् । एवमुत्तरपक्षस्याप्यपनामो द्रष्टव्यः ॥ ५४ ॥

पक्षयोरिति । निर्णाम इत्यर्थः । पूर्वश्येने त्रिभिः प्रक्रमैर्दृष्टम् । इह अरत्निभिरित्यर्थः ॥ ५४ ॥

**अध्यर्धाध्यर्धाभिः षट् षट् पत्त्राणि कुर्यात् ॥ ५५ ॥**

**अध्यर्धाध्यर्धाभिरिति** । वक्ष्यमाणप्रमाणाभिः प्रतिपार्श्वं षट् षट् पत्त्राणि कुर्यादित्यर्थः ॥ ५५ ॥

अध्यर्धेति । व्याख्यातप्रायमेतत् ॥ ५५ ॥

**आकृतिः शिरसो नित्या ॥ ५६ ॥**

**आकृतिरिति**। पूर्वोक्तस्य द्व्यरत्निव्यास-सपादद्व्यरत्निदीर्घ-चतुरश्रस्य अंसस्रक्ती आरभ्य प्रत्यक् प्रत्येकमरत्निमात्रं मित्वा शङ्कुद्वयं निहत्य प्राक्-पार्श्वमध्यप्रदेशे एकं शङ्कुं निहत्य शङ्कूनामुपरि स्पन्द्यां नियम्य बहिः-स्पन्द्यमपच्छिन्द्यात्। एवञ्च सति सार्धास्तिस्रः पञ्चम्यः शेरते ॥ ५६ ॥

आकृतिरिति। तस्यांसौ प्रक्रमेण (३।३४) इत्यनेन प्रकारेणोक्तेत्यर्थः। इह अरत्निनेति विशेषः ॥ ५६ ॥

**अथेष्टकानां विकाराः ॥ ५७ ॥**

**अथेति** ॥ ५७ ॥

अथशब्दः संबन्धार्थः। एतस्येत्यर्थः ॥ ५७ ॥

**पुरुषस्य पञ्चम्यः। ता एवैकतोऽध्यर्धाः। ता एवैकतः सपादाः। पञ्चमभागोयायाः साध्यर्धाः पाद्याः। तथाध्यर्धायाः। तयोश्चाष्टमभागौ तथा श्लेषयेद् यथा तिस्रः स्रक्तयो भवन्ति। पञ्चमभागोयायाश्चाष्टम्यः। तानि दश ॥ ५८ ॥**

**पुरुषस्येति**। पञ्चमभागीया इष्टकाः सर्वतोऽरत्निप्रमाणा इत्यर्थः। **ता एवैकत** इति। ता एवैकतोध्यर्धा एकेन पार्श्वेनार्धारत्निप्रमाणयुक्ताः षट्त्रिंशदङ्गुलप्रमाणदैर्घ्याः अरत्निप्रमाणव्यासा इति यावत्। एवं सपादाः। **पञ्चमेति**। पञ्चमभागीया या इष्टकाः पञ्चमीमक्ष्णया भिन्द्यादिति (३।३०) अक्ष्णयापच्छेदेन कृता अर्ध्याः पाद्याश्च। **तथेति**। एवमध्यर्धायाश्चार्ध्याः पाद्याश्च। **तयोरिति**। उभयोः (पञ्चम्यर्धं पञ्चम्यर्ध-पञ्चम्योः) अध्यर्धपञ्चम्योः। अष्टमभागौ तयोः पादयोः अक्ष्णया अर्धंशः कृतौ इत्यर्थः। यथा तिस्रः स्रक्तयो भवन्ति तथा पूर्वोक्तौ संयोजयेत्। अस्या उभयीति संज्ञा। उभयावयवनिर्मितत्वात्। **पञ्चमभागोयाया** इति। **तानीति**। पूर्वोक्तानि करणानि दश इत्यर्थः। यद्यपि नवैव करणानि प्रागुक्तानि तथापि अध्यर्धायाः पाद्यानां करणद्वयसम्भवात्तदभिप्रायेण दशेत्युक्तम् ॥ ५८ ॥

पुरुषस्यैति । ता एव इति । ता एव पञ्चम्यः । एक पार्श्वतोऽध्यर्धाः । अरत्निव्यासास्त्रिप्रादेशदीर्घा इत्यर्थः । ता एवैकेति । अरत्निव्यासास्त्रिंशदङ्गुलायामाः । एवं त्रीणि प्रधानानि करणानि । पञ्चमभागीयाया इति । नित्यमक्ष्णयापच्छेदनमनादेशे(३।३०) इत्युक्तत्वात् पञ्चमीमक्ष्णया भिन्द्यात् । तस्या द्वे पार्श्वे चतुर्विंशत्यङ्गुले । तृतीयं तिलद्वयोनं चतुस्त्रिंशदङ्गुलम् । पाद्यायाः तिलद्वयोनसप्तदशाङ्गुले द्वे फलके । चतुर्विंशत्यङ्गुलमेकम् । तथेति । अध्यर्धाया अपि पाद्याः साध्यर्धाः । तत्र अध्यर्धाया अरत्निप्रमाणमेकम् । त्रिप्रादेशमपरम् । नवतिलसहितत्रिचत्वारिंशदङ्गुलं तृतीयं कर्णरूपम् । अध्यर्धायाः पाद्यासु विशेषः । अध्यर्धां भूमौ लिखित्वा अक्ष्णया उभयतो भिन्द्यात् । एवं कृते तिर्यङ्मानीप्रदेशस्था पाद्या शूलपाद्येति संज्ञिता । तस्या द्वे फलके सैकविंशतितिले एकविंशत्यङ्गुले । इतरदरत्निप्रमाणम् । पार्श्वमानीप्रदेशस्था पाद्या दीर्घपाद्येति संज्ञिता । तस्या अपि द्वे फलके सैकविंशतितिले एकविंशत्यङ्गुले । त्रिप्रादेशमितरत् । तयोश्चेति । तयोः पञ्चमभागीयाध्यर्धयोः । अष्टमभागौ पादेष्टकयोरर्ध्ये । तथा श्लेषयेद् यथा श्लिष्टे तिस्रः स्रक्तयो भवन्ति । तत्र त्रीणि फलकानि । त्रिंशदङ्गुलमेकम् । तिलोनसप्तदशाङ्गुलमपरम् । सैकविंशतितिलमेकविंशत्यङ्गुलं तृतीयम् । अस्या उभयीति संज्ञा । उभयावयवनिर्मितत्वात् । पञ्चमभागीयाया इति । अष्टमीनां द्वादशाङ्गुले द्वे प्रमाणे । तिलोनसप्तदशाङ्गुलमेकं प्रमाणम् । तानीति । अध्यर्धपाद्यानां प्रकारद्वयसूचनमिदं संख्यावचनम् । तत्र पञ्चम्यश्चतुरशीतिशतम् । तदर्ध्या अष्टशतम् । तत्पाद्या द्वाविंशतिः । चतस्रोऽष्टम्यः । अष्टाचत्वारिंशत् सपादाः । षोडशोभय्यः । चतुःपञ्चाशच्छतद्वयमध्यर्धाः । तदर्ध्याः षण्णवतिशतद्वयम् । षट्पञ्चाशद् दीर्घपाद्याः । द्वादश शूलपाद्याः । चोडानाकसदश्चतस्रः पञ्चम्यः द्वे तदर्ध्ये चतस्रोऽध्यर्ध्याः । एवं पञ्चसहस्रमिष्टकाः ॥ ५८ ॥

## आत्मनि पञ्चमभागीयाः साध्यर्धा उपदध्यात् ॥ ५९ ॥

**आत्मनीति** । आत्मनि पञ्चमभागीयाः साध्यर्धा एवोपदध्यात् ॥५९॥

अथोपधानम् । आत्मनीति । पञ्चमभागीयास्तदर्ध्याश्च उपदध्यात् । न पाद्या नापि अध्यर्धा इत्यर्थः ॥ ५९ ॥

## तथा पुच्छे ॥ ६० ॥

**तथेति** । एवं पुच्छपक्ष ( ! ) योरिति ॥ ६० ॥

तथेति । पञ्चमभागीयाः साध्यर्धा इत्येव ॥ ६० ॥

## पक्षयोश्चाध्यर्धाः साध्यर्धाः ॥ ६१ ॥

**पक्षयोरिति** । अध्यर्धा एवोपदध्यात् ॥६१॥

पक्षयोरिति । पूर्वेण व्याख्यातम् ॥ ६१ ॥

**शिरसि याः सम्भवन्ति ॥ ६२ ॥**

**शिरसीति ।** शिरसि याः संभवन्ति ता उपदध्यात् । अर्धे द्वे, सपादपञ्चम्यौ द्वे । एवं प्रथमे प्रस्तारे उपरि द्रष्टव्यः । एवञ्च प्रतिपक्षं चतुःपञ्चाशदिष्टकाः सम्पन्नाः प्रतियोज्यमानाः ॥६२॥

शिरसीति । द्वे अर्ध्ये द्वे सपादे इत्यर्थः । एवं सामान्येनोपधानमुक्तम् ।

अत्रैवमुपधानम् । पुच्छात्मशिरसां उदीच्यः पञ्चदशरीतयः । तत्र पुच्छाग्रे मध्यतः षट् पञ्चम्यः । पार्श्वयोर्द्वे तदर्ध्ये । पूर्वस्यां मध्यतश्चतस्रः पञ्चम्यः । पार्श्वयोर्द्वे तदर्ध्ये । तृतीयस्यां षडर्ध्याः । एवं चतुर्थी रीतिः । पञ्चमीपार्श्वयोरर्ध्ये मध्यतश्चतस्रः पञ्चम्यः । ततः षड्भिः षड्भिः पञ्चमीभिः षड् रीतयः । पञ्चमीवद् द्वादशी । चतुर्थीवत् त्रयोदशी । शिरसि चतुर्दश्यां प्रागायते द्वे सपादे । पञ्चदश्यां शिरसोऽग्रे द्वे अर्ध्ये बहिर्विशेषे । पक्षे पत्त्रवर्जाः षड् रीतयः प्राच्यः । तत्र पक्षमूलरीत्यां मध्ये पञ्च तिरश्च्योऽध्यर्धाः । पश्चात् पुरस्ताच्च द्वे अध्यर्धार्ध्ये । तस्या दक्षिणतोऽप्येवम् । तस्या दक्षिणतो निर्णामसमीपरीत्यां द्वादश अध्यर्धार्ध्याः । निर्णामदक्षिणरीत्यामप्येवम् । ततो दक्षिणतो द्वे रीती पक्षमूलरीतिद्वयवत् । पक्षपत्त्रेषु षड् अध्यर्धार्ध्या उदीच्यः । एवमुत्तरः पक्षः ।

आत्मनि षष्टिरिष्टकाः । विंशतिः पुच्छे । चतस्रः शिरसि । पक्षयोः षोडशशतम् ।

अस्मिन् प्रस्तारे चतुः पञ्चाशत् पञ्चम्यः । अष्टाविंशतिरर्ध्याः । द्वे सपादे । चत्वारिंशदध्यर्धाः । षट्सप्ततिरध्यर्धार्ध्याः ॥ ६२ ॥

**अपरस्मिन् प्रस्तारे पूर्वयोः पक्षाप्यययोरेकैकामुभयीमुपदध्यात् । एकैकामपरयोः ॥ ६३ ॥**

**अपरस्मिन्निति ।** पूर्वयोः पक्षाप्यययोः पक्षात्मसन्ध्योर्मूलप्रदेशयोः एकैकामुभयीमुपदध्यात् । **एकैकामिति ।** अपरप्रदेशयोः पूर्वोक्तयोरेकैकामित्यर्थः ॥६३॥

अपरस्मिन्निति । पूर्वयोः पक्षात्मसन्ध्योरेकैकां उभयीं प्रागग्रां प्रत्यग्दीर्घपार्श्वां पक्षस्थाध्यर्धाष्टमभागीयां उपदध्यात् । दीर्घपार्श्वेन अष्टाङ्गुलेन पक्षं प्राप्तामित्यर्थः । एकैकामिति । अपरयोः पक्षात्मसन्ध्योरेकैकां उभयीं प्रत्यगग्रां अध्यर्धाष्टमभागेन पक्षं प्राप्तां उपदध्यात् ॥ ६३ ॥

**द्वे द्वे शिरसः पार्श्वयोः ॥ ६४ ॥**

**द्वे द्वे** इति । शिरसः पार्श्वयोर्द्वे द्वे उभय्यौ ॥ ६४ ॥

द्वे द्वे इति । दक्षिणोत्तरपार्श्वयोः दक्षिणोदगग्रे अन्तर्दीर्घपार्श्वे शिरसोऽपच्छेदस्रक्तिगताग्रे एकैकां उभयीं, तयोः पश्चाद् बाह्यदीर्घपार्श्वे दक्षिणोदगग्रे ताभ्यां संश्लिष्टे उपदध्यात् ॥ ६४ ॥

**पुच्छस्यावस्तादध्यर्धाः प्राचीर्यथावकाशम् । पार्श्वयोः पाद्याः साष्टभागाः ॥ ६५ ॥**

**पुच्छस्यावस्तादिति ।** पुच्छस्यावस्तात् पश्चाद्भागे पश्चाध्यर्धाः प्रागदीर्घा यथावकाशमुपदध्यात् । **पार्श्वयोरिति ।** पुच्छपार्श्वयोः पञ्चमभागीया ( पाद्या ? ) स्तस्या एवाष्टमभागौ चोपदध्यात् ॥ ६५ ॥

पुच्छस्येति । पुच्छस्य पश्चिमान्ते पार्श्वयोरुभयत्र प्रादेशत्रयमवशिष्य मध्ये पञ्च अध्यर्धाः प्रागायता उपदध्यात् । पार्श्वयोरिति । उपहितानामध्यर्धानां पार्श्वयोः पञ्चमीपाद्याः पञ्चम्यष्टमभागसहिताः । तत्र पुच्छश्रोण्योः प्रागग्रे पश्चिमदीर्घपार्श्वे द्वे पादेष्टके । तयोर्दक्षिणत उत्तरतश्च प्रत्यगग्रे द्वे । एवं चतस्रः पाद्याः । उभयत्र पाद्याद्वन्द्वस्य दक्षिणत उत्तरतश्च अध्यर्धामूलसंहितां एकैकामष्टमीं उपदध्यात् । उभयत्रोपहितत्रिकस्य पुरस्ताद् अध्यर्धासमीपे पञ्चम्यर्ध्याक्षेत्रं परिशिष्टं भवति ॥ ६५ ॥

**पक्षयोश्चाध्यर्धाः सावयवाः ॥ ६६ ॥**

**पक्षयोरिति ।** पक्षयोरध्यर्धाः सावयवा उपदध्यात् ॥ ६६ ॥

पक्षयोरिति । अवयवशब्देन दीर्घशूलपाद्ये उच्येते । नियमार्थं वचनम् ॥ ६६ ॥

**शेषं यथायोगं यथासङ्ख्यं यथाधर्मञ्चोपदध्यात् ॥६७॥**

**शेषमिति ।** शेषमपि यथा आकृतिनिष्पत्तिर्भवति, यथासङ्ख्यं प्रस्तारं यथा द्विशतमिष्टकाः संभवन्ति, यथाधर्म्यं यथा दक्षिणे पक्षे तथोत्तरे पक्षेऽप्युपदध्यादित्यर्थः ॥६७॥

शेषमिति । अनुपहितक्षेत्रं यथायथं युज्यते । तथा यथासंख्यं यथा द्विशतपूर्त्तिः । तथा यथाधर्मं यथाभिधर्मं रूपं पशुधर्मं भेदवर्जनादि अविनाशयन् उपदध्यात् । भेदपरिहारेण पशुधर्म इत्यपरिग्रहेण यत्र या इष्टकाः सम्भवन्ति तथा उपदध्यादित्यर्थः । तत्रैवमुपधानम् ।

सन्धिरीत्या सह पुच्छे उदीच्यस्तिस्रो रीतयः । तत्र पुच्छाग्ररीत्यां दक्षिणान्ते प्रागग्रा प्रत्यग्दीर्घपार्श्वा पञ्चमीपाद्या । तस्या उत्तरतो विपरीता । तयोरुत्तरतोऽष्टमी

प्रागुत्तरविशेषिका। एवं उपहितत्रिकस्य पुरस्ताद् बाह्यविशेषा पञ्चम्यध्यर्धा। एवमस्मिन् क्षेत्रे चतस्र इष्टकाः। तासामुत्तरेण पञ्च अध्यर्धाः प्रागायताः। ततो दक्षिणक्षेत्रवद् उत्तरश्रोणिक्षेत्रोपधानम्। एवं त्रयोदशेष्टका रीतिः। द्वितीयस्यां मध्ये तिस्रः पञ्चम्यः। पार्श्वयोः तदर्ध्ये। सन्धिरीत्यां मध्ये पञ्चमी एका। अभितः तदर्ध्ये बाह्यविशेषे प्रत्यगरत्निपार्श्वे। तस्यामेव रीत्यां आत्मनि दक्षिणत उत्तरतश्च प्रत्यगग्रं पादिकाद्वयम्। एवं पञ्चेष्टका सन्धिरीतिः।

ततः पुरस्ताद् आत्मनि पार्श्वयोरुभयत्र प्रादेशमवशिष्य शिरसोऽप्ययरीत्या सह अष्टौ उदीच्यः। तत्र पुच्छाप्ययरीत्याः पुरस्तान्मध्ये तिस्रः पञ्चम्यः। पार्श्वयोस्तदर्ध्ये। ततः पूर्वस्यां पञ्च सपादाः प्रागायताः। ततोऽध्यर्धापञ्चकेन प्रागायता एका रीतिः। ततः स्वयमातृण्णावकाशे प्राक्प्रत्यगग्रके शूलपाद्ये। दक्षिणत उत्तरतश्च उदग्दक्षिणाग्रे दीर्घपाद्ये। एवमुपहितस्य चतुष्टयस्य अभितो द्वे द्वे अध्यर्धार्ध्ये। तयोरभितो द्वे अध्यर्धे। एवं दशेष्टका रीतिः। तस्याः पुरस्तात् तिस्रो रीतयः पश्चिमभागवत्।

शिरोऽप्ययरीत्यां मध्ये पञ्चमी। अभितस्तदर्ध्ये बाह्यविशेषे प्रत्यगरत्निपार्श्वे। ततः पुरस्ताद् अप्ययस्य पञ्चम्या संगता प्रागायता एका सपादा। तस्या अभितः सपादपार्श्वसंहितां अन्तस्त्रिंशदङ्गुलपार्श्वां पूर्वभागस्थपञ्चम्यष्टमांशां एकैकां उभयीं उपदध्यात्। तयोः पश्चात् विपरीतां एकैकां उभयीम्। शिरसोऽग्रे पञ्चमीपाद्या एका।

दक्षिणपक्षसन्धिरीत्यां आदितः प्रत्यगग्रा उभयी। सा च पञ्चम्यष्टमांशेन आत्मानं प्राप्ता। तस्याः पश्चाद् आत्मांशे एका पञ्चमीपाद्या। तयोः पुरस्तात् पञ्च सपादा उदगायता आत्मानं प्रादेशेन प्राप्ताः। तासां पुरस्ताद् आत्मभागस्थपञ्चम्यष्टमांशा प्रागग्रा एका उभयी। तस्याः पुरस्ताद् आत्मभागे एका पञ्चमीपाद्या दक्षिणाग्रा। दक्षिणांशे एका शूलपाद्या उदगग्रा। एवं दशेष्टका रीतिः। तस्याः दक्षिणतः प्राच्यौ द्वे रीती। तयोर्मध्ये पञ्च पञ्च तिरश्च्योऽध्यर्धाः। पार्श्वयोश्चतस्रस्तदर्धाः।

निर्णामरीत्यग्रे प्रागग्रा प्रत्यक् षट्त्रिंशदङ्गुला दीर्घपाद्या। तस्याः पश्चात् पञ्च अध्यर्धा उदगायताः। तासां पश्चाद् अध्यर्धासङ्गतषट्त्रिंशदङ्गुलपार्श्वा बाह्यपश्चिमोत्तरदीर्घकर्णा उदक्स्थारत्निपार्श्वा एकां अध्यर्धार्ध्या उपदध्यात्। निर्णामादौ दक्षिणत उदगग्रा शूलपाद्या। एवं अष्टेष्टका रीतिः। तस्या दक्षिणत उत्तरपार्श्ववद् रीतिद्वयम्।

पत्त्ररीत्यां पश्चिमपत्त्राग्रे प्रत्यग्दीर्घपार्श्वा दीर्घपाद्या। तस्या उत्तरतः प्राग्दीर्घपार्श्वा प्रत्यगग्रा एका। तस्याः पुरस्तात् प्रत्यक् षट्त्रिंशदङ्गुलोदक्स्थारत्निका प्रागुदग् दीर्घकर्णा एका अध्यर्धार्ध्या। एवं पञ्चपत्त्रेषु। एवमुत्तरः पक्षः।

शिरसि नवेष्टकाः। द्विषष्टिरात्मनि। एकविंशतिः पुच्छे। पक्षयोरष्टशतम्। अस्मिन् प्रस्तारे एकादश पञ्चम्यः। द्वादश तदर्ध्याः। एकादश तत्पाद्याः। द्वे अष्टम्यौ। एकविंशतिः सपादाः। उभय्यः अष्टौ। सप्तषष्टिरध्यर्धाः। चतुस्त्रिंशत् तदर्ध्याः। अष्टाविंशतिः दीर्घपाद्याः। षट् शूलपाद्याः॥ ६७॥

[ इति वक्रपक्षव्यस्तपुच्छश्येनचिदुपधानम्। ]

**कङ्कचित एतेनात्मा पुच्छश्च व्याख्यातम्॥ ६८॥**

**कङ्कचित** इति। कङ्को नाम वयोविशेषः। स इव चीयत इति कङ्कचित्। **एतेनेति**। षट्पत्त्रश्येनेनेत्यर्थः॥ ६८॥

कङ्कचित इति। कङ्को नाम वयोविशेषः। कङ्क इव चित् कङ्कचित्। तस्य अनन्तरोक्तेन श्येनेन आत्मा पुच्छञ्च व्याख्यातम्। पञ्चमीनां पञ्चाशद् द्वे च आत्मनि। पञ्चदश पुच्छे इत्यर्थः। क्षेत्रकरणमपि तथैव। आत्मा षडरत्निव्यासो दशारत्न्यायामः। अर्धव्यायामेन स्रक्तीनामपच्छेदः। पुच्छस्त्र्यरत्निव्यासोऽष्टारत्न्यायाम उदगायतः। तस्यांसौ त्रिभिस्त्रिभिररत्निभिरपच्छिन्द्यात्॥ ६८॥

**शिरसि पञ्चोपदध्यात्॥ ६९॥**

मूर्ध्निक्षेत्रविशेषमाह—**शिरसीति**॥६९॥

शिरसीति। सामर्थ्याद् द्व्यरत्निव्यासमरत्निदीर्घं शिरो भवति॥ ६९॥

**तस्याकृतिर्व्याख्याता॥ ७०॥**

शिरसोऽग्रे पूर्ववदेवापच्छेदः कर्त्तव्य इत्याह—**तस्येति**॥ ७०॥

तस्याकृतिरिति। तस्यांसयोः प्रक्रमेण(२।३४)इत्युक्तप्रकारेणारत्निनाऽपच्छेद इत्यर्थः। एवमपच्छिन्ने पञ्च पञ्चम्यो भवन्ति॥ ७०॥

**सप्तपञ्चाशद् दक्षिणे पक्ष उपदध्यात्। तथोत्तरे। व्यायामेन सप्रादेशेन पक्षयोरपनामः। पञ्चमभागीयार्ध्याभिः षट् षट् पत्त्राणि कुर्यात्॥ ७१॥**

**सप्तपञ्चाशदिति**॥ ७१॥

सप्तपञ्चाशदिति। द्वितीयार्थे प्रथमा। षडरत्निव्यासं नवारत्न्युदगायतं दीर्घचतुरस्रं कृत्वा व्यायामेन सप्रादेशेन पक्षयोरपनाम इति वक्ष्यमाणत्वात् नवप्रादेशेन पक्षनमनं कृत्वा पक्षान्ते पञ्चम्यर्ध्याभिः षट् षट् पत्त्राणि कुर्यात्। एवं सप्तपञ्चाशत् सप्तम्यो भवन्ति। तथोत्तर इति। सप्तपञ्चाशद् उपदध्यादित्येव। व्यायामेनेति।

उक्तार्थः । पञ्चमभागीयेति । व्याख्यातप्रायम् । एवं आत्मपुच्छशिरःपक्षेषु षडशीतिशतं पञ्चम्यो भवन्ति ॥ ७१ ॥

**अध्यर्धा विशिष्यते । तया पुच्छस्यावस्तात् पादावरत्नि-मात्रावरत्न्यन्तरालौ प्रादेशव्यासौ भवतः । तयोरवस्तादभितो-द्वौ द्वावष्टमभागौ प्राग्भेदावुपदध्यात् ॥ ७२ ॥**

**एवं सारत्निः प्रादेशः सप्तविधः संपद्यते ॥ ७३ ॥**

अवशिष्टाया अध्यर्धाया विनियोगं दर्शयति—**अध्यर्धा विशिष्यत** इति। पुच्छस्य पश्चाद्भागे मध्यप्रदेशे अरत्निद्वयं मित्वा मध्ये एकां अरत्निं विहाय अभितोऽवशिष्टार्धारत्निव्यासौ अरत्निदीर्घौ पादौ कुर्यादित्यर्थः। एवञ्च एका पञ्चमी विनियुक्ता भवति । अवशिष्टार्धपञ्चमीक्षेत्रस्य विभज्य विनियोगं दर्शयति—**तयोरिति**। तयोः प्रत्येकं पश्चादभागस्य पार्श्वद्वये द्वौ द्वावष्टम-भागौ प्राग्भेदावुपदध्यात् । दक्षिणतः प्रागुदक्सविशेषौ, उत्तरतः प्राग्-दक्षिणसविशेषौ । शिष्टं स्पष्टम् ॥ ७२ ॥ ७३ ॥

अध्यर्धेति : अध्यर्धा पञ्चम्याः परिशिष्यते । तयेति । तया अध्यर्धया पुच्छ-स्यावस्तात्। तन्वोपप्लवमध्यै(२।१५)रित्युक्तेऽपि अन्तरालविधानेन आत्मन्यसम्भवात् पुच्छाग्रे । दक्षिणत उत्तरतश्च त्र्यरत्निमात्रमवशिष्य अनन्तरं अरत्निदीर्घौ प्रादेश-व्यासौ प्रत्यञ्चौ पादौ भवतः । एवं पञ्चमी विनियुक्ता भवति । अर्थादरत्न्यन्त-रालौ च भवतः ।

तयोरवस्तादिति । तयोः प्रादेशव्यासारत्निदीर्घयोः पदयोः पुरस्तात् प्रादेश-प्रमाणमवशिष्य पश्चिमप्रादेशभागस्य अभितो दक्षिणत उत्तरतश्च प्रत्येकं द्वौ द्वावष्टम-भागौ प्राग्भेदावुभयत्र, दक्षिणतः प्रागुत्तरविशेषौ, उत्तरतः प्राग्दक्षिणविशेषौ । एवं चतुर्भिरष्टमभागैः पञ्चम्यर्धा विनियुक्ता भवति । एवं अध्यर्धा, साकल्येन पादयो-र्विनियुक्ता भवति ॥ ७२ ॥

एवमिति । एवं आत्मप्रभृतिषु शतमशीतिः सप्तार्धाश्च पञ्चम्यो द्रष्टव्याः॥७३॥

**अथेष्टकानां विकाराः ॥ ७४ ॥**

**अथेष्टकानामिति** ॥ ७४-७७ ॥

अथेति ॥ ७४ ॥

**पञ्चमभागीयाः सावयवाः । पादेष्टकां चतुर्भिः परिगृह्णीयात् । अर्धप्रादेशेनाध्यर्धप्रादेशेन प्रादेशेन प्रादेशसविशेषेणेति । अध्य-**

**र्धेष्टकां चतुर्भिः परिगृह्णीयादर्धव्यायामेन द्वाभ्यामरत्निभ्यामरत्निसविशेषेणेति ॥ ७५ ॥**

पञ्चमभागीया इति। पञ्चमभागीयाः तदर्ध्याः तत्पाद्याः तदष्टम्य इत्यर्थः। नित्यमक्ष्णयापच्छेदन ( ३।३० ) मित्यस्य सार्वत्रिकत्वाद् वचनादृते सर्वत्राक्ष्णयापच्छेदनम्। पादेष्टकामिति। पञ्चम्याश्चतुर्भागीयं क्षेत्रं चतुर्भिः फलकैः कुर्यात्। अर्धप्रादेशेनेति। चतुरस्रपाद्यासूत्रेण व्याख्यातम्। अत्र दक्षिणत उत्तरतः पश्चात् पुरस्ताच्चेति क्रमः। अध्यर्धेष्टकामिति। अर्धव्यायामेन द्व्यरत्निनोत्तरं फलकम्। द्वाभ्यामरत्निभ्यां प्रत्यग्दक्षिणफलके। अरत्निप्रमाणे इत्यर्थः। अरत्निसविशेषेण पूर्वफलकम्। एवं सन्निवेशेऽर्धाधिका पञ्चमी भवति ॥ ७५ ॥

**ताः षट् ॥ ७६ ॥**

ता इति। एवं षट्प्रकारा इष्टका इत्यर्थः। विस्पष्टार्थं वचनम्। तत्र नवत्यधिकं शतत्रयं पञ्चम्यः। अशीतिशतमर्ध्याः। अष्टशतं पाद्याः। विंशतिरष्टम्यः। विंशतिश्चतुरस्रपाद्याः। द्व्यशीत्यधिकं शतद्वयं अध्यर्धाः। चोडानाकसदः षडर्ध्याः। पञ्चम्यश्चतस्रः ॥ ७६ ॥

**तासां चतुरस्रपाद्याः साष्टमभागाः पादयोरुपधाय शेषं यथायोगं यथासङ्ख्यं यथाधर्मञ्चोपदध्यात् ॥ ७७ ॥**

अथोपधानम्— तासामिति। तासां षट्प्रकाराणां मध्ये। पादयोः प्रादेशव्यासारत्निदीर्घप्रदेशे द्वे द्वे चतुरस्रपाद्ये अन्तर्विशेषे उपधाय एकैकस्य द्वौ द्वौ अष्टमभागौ अभितः पश्चिमार्धे प्राग्भेदावुपधाय शेषाः चतुःप्रकाराः यथायोगमित्यादि व्याख्यातम्। प्रस्तारद्वयस्य प्रपञ्चेनानुक्तिः।

तत्रैवमुपधानम्। शिरोऽग्रे बहिर्द्वे अर्ध्ये। ततः शिरसि अरत्निचतुष्टयम्। आत्मापच्छेदेषु चतुर्षु बहिर्विशेषा अष्टौ अर्धेष्टकाः। आत्मशेषे अष्टचत्वारिंशदरत्नयः।

पुच्छपार्श्वयोः षडर्ध्याः। मध्ये रीतित्रयेण द्वादश पञ्चम्यः। एवं आत्मशिरःपुच्छेषु पादाभ्यां सह अष्टाशीतिरिष्टकाः।

निर्णामाग्रे एकैका पाद्या। ततः पश्चात् पञ्चमी। ततः पश्चाद् द्वे अध्यर्ध्ये प्राक्प्रत्यगग्रिके। तयोः पश्चात् प्रत्यगग्रिका अध्यर्ध्या। निर्णामादौ दक्षिणत उत्तरतो वा अवशिष्टक्षेत्रे पादेष्टकाः। एवं षडिष्टका रीतिः।

निर्णामरीतिमभितः चतस्रोऽध्यर्धारीतयः चतुरिष्टकाः प्राच्यः। तासामभितश्चतस्रोऽरत्निरीतयः। तासु मध्ये पञ्च पञ्च पञ्चम्यः पार्श्वेषु अष्टार्ध्याः। एवं सप्तेष्टका रीतयः। पक्षाङ्गुलाः षडर्ध्याः स्युः।

आत्मनि षट्पञ्चाशत् । पुच्छेऽष्टादश । पादयोरष्टौ । षट् शिरसि । पक्षयोर्द्वादशशतम् ।

अस्मिन् प्रस्तारे षडधिकं शतं पञ्चम्यः । चतुश्चत्वारिंशदर्ध्याः । चतस्रः पाद्याः । अष्टत्रिंशदध्यर्ध्याः ।

अथ अपरः प्रस्तारः । शिरोऽग्रे प्रागग्रा पाद्या । तस्याः पश्चात् प्राक्प्रत्यगश्रिके अक्ष्णयासंगते द्वे अध्यर्धे । तयोः पश्चिमा आत्मानं अर्धारत्निना व्याप्ता । तयोरध्यर्धयोरभितः शिरसि चतस्रश्चतस्रः पाद्याः । तासां पश्चात् प्रागरत्निपार्श्वे प्रागुदक् प्राग्दक्षिणा सविशेषे । आत्मशिरःसन्धौ द्वे अर्ध्ये । एवं शिरसि त्रयोदशेष्टकाः ।

तासां पश्चाद् अध्यर्धाद्वयं दक्षिणोत्तरं अक्ष्णयासंगतम् । पार्श्वयोरर्ध्ये । ततः पश्चात् पक्षाप्ययर्योरुभयत्र प्रादेशमवशिष्य पञ्चमीरीतयः पञ्चेष्टकाः सप्तोदीच्यः । तासां पश्चाद् अध्यर्धाद्वयम् । पार्श्वयोरर्ध्ये ।

ततः पश्चात् पुच्छात्मसन्धौ मध्ये पञ्चमी । तामभितो द्वे अर्ध्ये आत्मगतारत्निपार्श्वे दक्षिणोत्तरसविशेषे । तयोः पश्चिमपार्श्वे पुच्छक्षेत्रे प्रागग्रे द्वे पाद्ये । एवं पञ्चेष्टका सन्धिरीतिः ।

ततः पश्चादध्यर्धाद्वयं दक्षिणोत्तरम् । पार्श्वयोरर्ध्ये । ततश्चतस्रोऽध्यर्धास्तिरश्च्यः । ततः पुच्छाग्ररीत्यां पार्श्वयोः पाद्याः पञ्च पञ्च । ततो द्वे अर्ध्ये पदमध्यगताश्रिके प्राक्स्थारत्निपार्श्वे दक्षिणोत्तरपार्श्वस्थसविशेषे । तयोर्मध्ये प्रागग्रा पाद्या । तामभितः प्रत्यगश्रिके द्वे अष्टम्यौ । पादान्तयोर्द्वे द्वे चतुरस्रपाद्ये दक्षिणोत्तरायते प्रत्यक्स्थदीर्घपार्श्वे । ततः पूर्वप्रविष्टाध्यर्ध्याग्रसंहितां एकैकां अष्टमीं पादमध्ययोरुपदध्यात् । एवं समस्ता एकविंशतिरिष्टकाः ।

पक्षात्मसन्धिरीत्योश्चतस्रश्चतस्रोऽध्यर्धाः प्रागायताः । तासां पौरस्त्यपाश्चात्याः प्राक्प्रत्यगश्रिकाः । तत्र पूर्वपक्षात्मसन्ध्योर्दक्षिणोत्तरभागे द्वे पाद्ये उदग्दक्षिणाग्रे । एवं पञ्चेष्टके एते रीत्यौ । पक्षयोः पत्रसन्धिरीत्योर्मध्ये चतुरिष्टका अध्यर्ध्यारीतयः । प्रत्येकमष्टौ । पक्षपत्रेषु पादेष्टके अर्धेष्टकामिति ( ? ) पूर्ववदुपधानम् । एवं शिरसि त्रयोदशेष्टकाः । आत्मनि पक्षपुच्छसन्धिरीतिभिः सह षटपञ्चाशत् । पुच्छे एकत्रिंशत् । पक्षयोः शतम् ।

अस्मिन् प्रस्तारे षट्त्रिंशत् पञ्चम्यः । चतुर्विंशतिरर्ध्याः । अष्टाचत्वारिंशत् पाद्याः । चतस्रोऽष्टम्यः । चतस्रश्चतुरस्रपाद्याः । चतुरशीतिरध्यर्धाः ।

अत्र कल्पोक्तो विधिरनुसन्धेयः । तत्रैवमुक्तम्—कङ्कचितं चिन्वीत यः कामयेत शीर्षन्वानमुस्मिंल्लोके स्यामिति । एतस्यैव सतोऽरत्निमात्रेण प्राक् शिर इव निरूहति । स तथा विमितो भवति यथा न बहिर्वेदि यूपः स्यादिति (बौ. श्रौ. सू. १७।२८ पृः ३०७ ) ।

तत्र अरत्निमात्रेण प्राक् शिर इव निरूहतीत्यस्य व्याख्यानाभिप्रायेणोक्तं शिरसि पञ्चोपदध्यादिति ॥ ७७ ॥

[ इति कङ्कचिदुपधानप्रकारः । ]

**अलजचित एतेनात्मा शिरः पुच्छञ्च व्याख्यातं पादावपोद्धृत्य ॥ ७८ ॥**

अलजचिति विशेषं वक्ष्यन् कङ्कचित्समानमङ्गमाह—**अलजचितमिति** । (अलजचितं चिन्वीत । इत्यधिकः पाठः शुल्बमीमांसायाम् । ) **पादाविति** । कङ्कचिति सार्धपञ्चमीक्षेत्रौ यौ पादावुक्तौ तावपोद्धृत्य पक्षयोर्योजयेत् । पञ्चमीक्षेत्रे द्वेधा विभज्य अर्धन्तु अपनामपूरणार्थं निदध्यात् ॥ ७८ ॥

अलजचित इति । पादौ वर्जयित्वा अनन्तरोक्तेन कङ्कचिता अलजचित आत्मा शिरःपुच्छञ्च व्याख्यातम् । अस्य पादौ न भवत इत्युक्तं भवति । अलजोऽपि वयोविशेषः । पञ्चमीनां पञ्चाशद् द्वे चात्मनि । पञ्चदश पुच्छे । शिरसि पञ्चोपदध्यादित्यर्थः । क्षेत्रकरणमपि पूर्ववत् ॥ ७८ ॥

**त्रिषष्टिर्दक्षिणे पक्ष उपदध्यात् । तथोत्तरे । पुरुषेण पक्षयोरपनामः । अपरस्मादपनामात् प्राञ्चमरत्निं मित्वा तस्मिन् स्पन्द्यां नियम्यापरं पक्षपत्त्रापच्छेदमन्वायच्छेत् । एवं पञ्च पञ्चम्यः साध्या उद्धृता भवन्ति ॥ ७९ ॥**

एवञ्च कङ्कचिदपेक्षया प्रत्येकमर्धपञ्चमीक्षेत्रमधिकं भवति । तथा च पक्षयोः प्रत्येकं सार्धसप्ताधिकपञ्चाशत् क्षेत्रे संपद्यमाने अपनामविशेषसिध्यर्थं प्रत्येकं सार्धं पञ्चमीक्षेत्रं योजनीयमित्याह—**त्रिषष्टिरिति** । अपनामविशेषं दर्शयति—**अपरस्मादिति** । एवमपच्छेदे क्रियमाणे प्रतिपक्षं यत्सार्धं पञ्च पञ्चमीक्षेत्रमवनमनार्थं योजितं तत्त्यक्तं भवति । यत्पूर्वमर्धपञ्चमीक्षेत्रनिहितं तद् द्वेधा विभज्य पक्षापनामप्रदेशयोः द्वाभ्यां प्रादेशः सप्तविधः सम्पद्यते ॥ ७९ ॥

पक्षयोर्विशेषमाह । त्रिषष्टिरिति । द्वितीयार्थे प्रथमा । सामर्थ्यात् षडरत्निव्यासं दशारत्निदीर्घं उदगायतं दीर्घचतुरस्रं कृत्वा पुरुषेण पक्षयोरपनाम इति वक्ष्यमाण-

त्वात् पुरुषेण नमनं कृत्वा पक्षाग्रे अरत्न्यर्ध्याभिः षट् पत्राणि कुर्यात् । एवं त्रिषष्टिः पञ्चम्यो भवन्ति । तथोत्तर इति । त्रिषष्टिः पक्षे उपदध्यादित्येव । पुरुषेणेति । व्याख्यातप्रायम् । आत्मशिरःपुच्छेषु द्वासप्ततिः पञ्चम्यः । पक्षयोः षड्विंशतिशतं पञ्चम्यः । तत्र पक्षयोरर्धाधिका दश पञ्चम्योऽतिरिच्यन्ते । तासां निरसनप्रकारमाह—अपरस्मादिति । उभयत्र अपरस्मान्निर्णाममूलाद् आरभ्य प्राञ्चमरत्निं मित्वा तत्र शङ्कुं निहत्य तस्मिन् स्पन्द्यां प्रतिमुच्य अपरपक्षपत्त्रापच्छेदं उभयत्र पश्चिमपत्त्रस्य कर्णरूपपार्श्वमानीं आलक्ष्यीकृत्य निपातयेत् । एवमिति । निर्णामबहिर्भूतपक्षांशे षड्भिः पत्रैः सह त्रयस्त्रिंशत् पञ्चम्यः । उक्तेन प्रकारेण षष्ठांशे निरस्ते एकैकस्मिन् पक्षे साध्र्याः पञ्चम्यो निरस्ता भवन्ति । एवं एकादश निरस्ता भवन्ति । साधा दश पञ्चम्यो निरस्याः ॥ ७९ ॥

**पादेष्टकामपनाम उपधाय तासां चतुरस्रपाद्याः साष्टमभागा अपोद्धृत्य शेषा यथायोगं यथासङ्ख्यं यथाधर्मश्चो पदध्यात् ॥ ८० ॥**

**पादेष्टकामिति** । तासां पञ्चमीनामिष्टकानां चतुरश्रपाद्या अष्टमभागीयाश्च वर्जयेत् प्रयोजनाभावात् । अवशिष्टानि चत्वारि करणानि पुरुषस्य पञ्चमी, तस्या अर्ध्या, तथा पाद्या, चतुरस्ररूपा अध्यर्धा । तस्याः प्रमाणम् अर्धव्यायामेन, द्वाभ्यामरत्निभ्यामरत्निसविशेषेणेति । **शेषमिति** । अवशिष्टमग्निं यथासंख्यं प्रतिप्रस्तारं यथा द्विशतमिष्टका भवन्ति, यथायोगमाकृतिनिष्पत्तिर्भवति, यथाधर्म्यं पूर्वापरयोः प्रस्तारयोः सन्ध्यपिधानं यथा भवति तथेत्यर्थः ॥ ८० ॥

पादेष्टकामिति । उपदध्यादिति वक्ष्यमाणेन सम्बन्धः । पादेष्टकां निर्णाममूले उद्धृतदेशे कुटिलस्थाने दक्षिणपक्षे दक्षिणाग्रां उत्तरपक्षे उत्तराग्राम् । एवं अर्धेष्टका प्रक्षिप्ता भवति । अतः साध्र्या दश गता भवन्ति ।

अथोपधानम् । तासां षण्णामिष्टकानां कङ्कचित्युक्तानां मध्ये चतुरस्रपाद्याः साष्टमभागा वर्जयित्वा, तासां कङ्कचिति पादोपधानार्थत्वात्, इह पादयोरभावात् तासामभाव इति भावः । शेषाश्चतस्र इष्टकाः पञ्चम्योऽर्ध्याः पाद्या अध्यर्धाश्च । यथायोगमित्यादि व्याख्यातम् । न्यायमार्गेणोपधानस्य सुकरत्वात् विस्तरेण नोक्तिः ।

तत्र चत्वारि करणानि । अरत्निरेकम् । तदर्ध्या अक्ष्णयाभिन्ना एकम् । पाद्या उभयतोऽक्ष्णयाभिन्ना एकम् । पूर्वोक्ता अध्यर्धा एकम् ।

तत्र पञ्चम्यः षट्पञ्चाशच्चतुःशतम् । द्व्यधिकं शतद्वयं अर्ध्याः । षडधिकं शतं पाद्याः । षट्त्रिंशदधिकं शतद्वयं अध्यर्धाः । चोडानाकसदः षडर्ध्याः चतस्रः पञ्चम्यः ।

प्रथमे प्रस्तारे शिरोसोऽग्रे बहिर्द्वे अर्ध्ये । ततोऽरत्निचतुष्टयम् । आत्मनि अर्धाष्टकं अपच्छेदेषु । मध्येऽष्टचत्वारिंशदरत्नयः ।

पुच्छपार्श्वयोः षडर्ध्याः । मध्ये द्वादशारत्नयः । पञ्चार्ध्या अङ्गुलानि ।

तत्र निर्णामाद् दक्षिणासु पञ्चसु पुरतस्तिस्रस्तिस्रोऽध्यर्धाः । पश्चाद् एकैकार्ध्या । चतुरिष्टकाः पञ्च रीतयः । निर्णामादुत्तराः सर्वाः पञ्चम्यः । पार्श्वेषु अर्ध्याः । एवं सप्तेष्टकाः पञ्च रीतयः । तत्र निर्णामादुत्तरस्यां आदिभूतां अर्ध्यां तदनन्तरां पञ्चमीं चोद्धृत्य अध्यर्धा निधेया । एवमुत्तरः पक्षः । पूर्वमेवोभयत्र निर्णामादौ पाद्ये उक्ते ।

तत्र आत्मनि षट्पञ्चाशत् । शिरसि षट् । पुच्छेऽष्टादश । पक्षयोर्विंशतिशतम् ।

अस्मिन् प्रस्तारे द्वादशशतं पञ्चम्यः । चतुःपञ्चाशदर्ध्याः । द्वे पाद्ये । द्वात्रिंशदध्यर्धाः ।

अथ अपरः प्रस्तारः । शिरसोऽग्रे प्राची पाद्या । पश्चादध्यर्धाद्वयम् । पार्श्वयोश्चतस्रश्चतस्रः पाद्याः । तासां पश्चाद् बहिर्द्वे अर्ध्ये । एवं त्रयोदश । ततः पश्चाद् अर्ध्याभ्यां पार्श्वयोरुक्तं अध्यर्धाद्वयम् ।

तत्पश्चात् पञ्चमीरीतयः सप्त पञ्चेष्टकाः । ततः पश्चात् पूर्ववद् अध्यर्धाद्वयम् । पार्श्वयोरर्ध्ये । पुच्छात्मसन्धौ मध्ये पञ्चमी । उभयत्र अर्ध्ये ।

सन्धिरीतिशेषे पुच्छक्षेत्रे द्वे प्रागग्रे पाद्ये । एवं पञ्चेष्टका रीतिः । ततः पश्चात् पूर्ववद् अध्यर्धाद्वयमर्ध्ये च । ततोऽध्यर्धाश्चतस्र एका रीतिः । ततः पुच्छाग्रे पञ्चदश पाद्याः । एवं आत्मशिरःपुच्छेषु चतुरशीतिः ।

निर्णामाग्रे एका पाद्या । ततः पश्चादरत्निचतुष्टयम् । ततः प्रत्यङ्मुखी अध्यर्धा । एवं षडिष्टका रीतिः । निर्णामादुत्तरतः पञ्च रीतय अध्यर्धाः चतुरिष्टकाः प्राच्यः । तत्र आत्मसन्धिरीत्यां पुरस्ताद् अन्यतरत्र पाद्या । निर्णामाद् दक्षिणतश्चतुरिष्टकाश्चतस्रः प्राच्यः । तासु मध्ये द्वे द्वे पञ्चम्यौ । आद्यन्तयोर्द्वे द्वे अध्यर्धे । अथ पादेष्टके अर्धेष्टका (३।४४) मित्यादि पूर्ववत् पत्त्रेषु । एवमुत्तरः पक्षः ।

आत्मनि षट्चत्वारिंशत् । त्रयोदश शिरसि । पुच्छे पञ्चविंशतिः । एवं चतुरशीतिः । पक्षयोः षोडशशतम् ।

अस्मिन् प्रस्तारे षष्टिः पञ्चम्यः । विंशतिरर्ध्याः । पञ्चाशत् पाद्याः । सप्ततिरध्यर्धाः ।

अत्र कल्पोक्तो विधिरनुसन्धेयः। तत्रैवमुक्तम्। अलजचितं चिन्वीत चतुःसीतं प्रतिष्ठाकाम इति। एतस्यैव सतोऽरत्निमात्रेण पक्षाग्रावणीयांसौ भवतः। तावन्मात्रेणापि पक्षौ वरीयांसौ तौ प्रागपनतौ। परोणीयांसौ भवत। एकैकामत्र सीतां कृषतीति ( बौ श्रौ. सू. १७।२८ पृ. ३०७ )।

अत्र चतुःसीतमिति तिस्रस्तिस्र इत्यादिषु एकैकां कृषतीत्यर्थः। परोणीयांसाविति अपनामाद् दक्षिणत उत्तरतश्च। पक्षमूलादणुतरौ भवत इत्यर्थः॥ ८०॥

[ इति अलजचिदुपधानम्। ]

**प्रउगचितं चिन्वीतेति॥ ८१॥**

एवं सपक्षपुच्छानग्नीनुक्त्वा इदानीमपक्षपुच्छानाह—**प्रउगचितमिति**॥ ८१॥

प्रउग इति। शकटस्येषयोः संयोगप्रदेशः प्रउगः। तद्वच्चीयत इति प्रउगचित्॥ ८१॥

**यावानग्निः सारत्निप्रादेशस्तावत् प्रउगं कृत्वा तस्या अपरस्याः करण्या द्वादशेनेष्टकास्तदर्धव्यासाः कारयेत्। तासामर्ध्याः पाद्याश्च॥ ८२॥**

**यावानग्निरिति**। अग्निः सप्तविधः सारत्निप्रादेशः सन् यावान् संपद्यते सार्धसप्तविध इत्यर्थः। तावत्क्षेत्रपरिमितं प्रउगं कुर्यादित्यर्थः।

एतदुक्तं भवति—पादोनपञ्चषष्ट्यधिकचतुःशताङ्गुलपरिमाणेन समचतुरश्रं कृत्वा पूर्वस्याः पार्श्वमान्या मध्ये शङ्कुं निहत्य श्रोण्योरपि शङ्कू निहत्य शङ्कूनामुपरि स्पन्द्यां नियम्य बहिःस्पन्द्यमपच्छिन्द्यादिति। **तस्या** इति। प्रउगस्य पश्चिमपार्श्वमान्याः द्वादशेन नवतिलोननवत्रिंशदङ्गुलिदीर्घपरिमाणेन तदर्धविस्तारेण बृहद्दीर्घचतुरश्रेष्टकाः कुर्यादित्यर्थः। **तासामिति**। बृहतीनामर्ध्याः पाद्याश्च अक्ष्णया कुर्यादित्यर्थः॥ ८२॥

यावानिति। चतुरस्रं प्रउगं चिकीर्षन् (१।४५) इत्यनेन प्रकारेण प्रउगं कुर्यात्। तत्र सारत्निप्रादेशस्य सप्तविधस्याग्नेः समचतुरस्रकरणी त्रीणि शतान्यष्टाविंशतिश्चाङ्गुलय अर्द्धद्वाविंशाश्च तिलाः। तस्याः द्विकरणी पादोनपञ्चषष्टिचतुःशताङ्गुला द्विस्तावत्याश्चतुरस्रकृतायाः पञ्चदशपुरुषाया भूमेः करणी। एवं चतुरस्रीकृतायाः पूर्वस्याः

करण्या मध्याच्छ्रोणीं प्रत्यालिखेत्। तत्र कर्णरूपयोः पार्श्वमान्योः प्रमाणं अर्धोनविंशतिपञ्चशताङ्गुलयः। तस्य प्रउगस्य अपरस्याः करण्याः पादोनपञ्चषष्टिचतुःशताङ्गुलाया द्वादशेन नवतिलोननवत्रिंशदङ्गुलेन तदर्धेन द्वाविंशतितिलहीनविंशत्यङ्गुलव्यासेन इष्टकाः कारयेत्। तासां बृहत्य इति संज्ञा।

तासामिति। तासां बृहतीनां अर्ध्या अक्ष्णया भिन्नाः पाद्याश्च उभयविधा दीर्घपाद्याः शूलपाद्याश्च कारयेत्। द्व्यधिकनवतिचतुःशतं बृहत्यः। चतुरधिकं चतुःशतं अर्ध्याः। शतं शूलपाद्याः। दीर्घपाद्याश्चतस्रः। चोडानाकसद अष्टावर्ध्या द्वे बृहत्यौ॥ ८२॥

**तासां द्वे अर्धेष्टके वाह्यविशेषे चुबुक उपदध्यात्। अर्ध्याश्चान्तयोः। शेषमग्निं बृहतीभिः प्रच्छादयेत्। अर्धेष्टकाभिः संख्यां पूरयेत्॥ ८३॥**

क्षेत्रेष्टकापरिमाणमुक्त्वा उपधानप्रकारं दर्शयति—**तासामिति**। **चुबुकेति**। अग्र इत्यर्थः। **अन्तयोरिति**। परिच्छिन्नप्रदेशयोरित्यर्थः। **शेषमग्निमिति**। अवशिष्टमग्निक्षेत्रं बृहतीभिः पूरयेदित्यर्थः। **अर्धेष्टकेति**। यथा द्विशतमिष्टकाः सम्भवन्ति तथार्धेष्टकाभिः पूरयेदित्यर्थः॥ ८३॥

अथोपधानम्— तासामिति। चुबुके पूर्वस्मिन् अग्रे। स्पष्टार्थं वचनम्। उत्तरेण सिद्धत्वात्। अर्ध्येति। च शब्दोऽवधारणार्थः। अन्तयोः दक्षिणोत्तरयोः सामर्थ्यात्। पूर्वोपहिताभ्यां सह द्वादश। अर्धेष्टकाभिरिति। अर्धेष्टकाभिरेव न पादेष्टकाभिः। तत्रैवमुपधानम्—

प्राच्यश्चतुर्विंशति रीतयः। श्रोण्योर्बहिर्द्वे अर्ध्ये प्रागायते। तयोरभ्यन्तररीती त्र्यधिके। तयोरभ्यन्तराः पुरोऽर्ध्यायुक्ता बृहतीरीतयः षोडश। ताः षोडशरीतिस्थाश्चतुरधिकं शतमिष्टकाः। तासामभ्यन्तरे द्वे रीती एकविंशाधिके। ततस्त्रयोविंशाधिके अग्निमध्यरीती। एवं द्विशतमिष्टकाः। अष्टाशीतिर्बृहत्यः। द्वादशशतमर्ध्याः॥ ८३॥

**अपरस्मिन् प्रस्तारेऽपरस्मिन्ननीके सप्तचत्वारिंशत्पादेष्टका व्यतिषक्ता उपदध्यात्। चुबुक एकाम्। दीर्घे चेतरे चतस्रः स्वयमातृण्णावकाश उपदध्यात्। अर्ध्याश्चान्तयोः। शेषमग्निं बृहतीभिः प्रच्छादयेत्। अर्धेष्टकाभिः सङ्ख्यां पूरयेत्॥ ८४॥**

द्वितीयप्रस्तारोपधानप्रकारं दर्शयति—**अपरस्मिन्निति**। अनीक इति

पश्चिमान्त्यप्रदेश इत्यर्थः । **सप्तचत्वारिंशदिति** । अपरस्मिन् भागे प्रागग्राश्चतुर्विंशतिः पाद्याः प्रत्यगग्रास्त्रयोविंशतिः पाद्याः इत्येवं व्यासेनोपदध्यादित्यर्थः । **चुबुक** इति । अग्रप्रदेशे प्रागग्रां शूलपाद्यामित्यर्थः । **दीर्घे चेतर** इति । दीर्घे द्वे पाद्ये आहृत्य चतस्रः पाद्याः प्राक्प्रत्यग् दीर्घचतुरश्रं यथा भवति तथा स्वयमातृण्णास्थाने उपदध्यादित्यर्थः ॥ ८४ ॥

अपरस्मिन्निति । अपरस्मिन्ननीके अपरान्ते । पादेष्टकाः शूलपाद्याः इतरासामसम्भवात् । चतुर्विंशतिः प्रागग्राः । चुबुक इति । शूलपाद्याम् । दीर्घ इति । दक्षिणत उत्तरतश्चाभ्यन्तराग्रे दीर्घपाद्ये । इतरे शूलपाद्ये प्राक्प्रत्यगग्रिके । नियमार्थं वचनम् । अर्ध्येति । व्याख्यातम् । शेषमिति । पूर्ववत् । तत्रैवमुपधानम्—

पश्चिमार्धे शूलपाद्याः सप्तचत्वारिंशत् । पूर्वान्ते चैका । मध्ये उदीच्यः एकादश रीतयः । तासु सर्वासु पार्श्वयोरर्ध्याः प्रागायताः । मध्यरीत्यां मध्यमामुद्धृत्य तस्याः स्थाने पूर्वोक्तपाद्याचतुष्टयम् । चतुर्थीपञ्चमीरीत्योः पार्श्वतस्तिस्रस्तिस्रो बृहतीरुद्धृत्य षट् षट् अर्ध्या निधेयाः । एवं द्विशतः प्रस्तारः ।

अस्मिन् प्रस्तारे चतुर्दशशतं बृहत्यः । चतुस्त्रिंशदर्ध्याः । पञ्चाशत् शूलपाद्याः । द्वे दीर्घपाद्ये ।

अत्र कल्पोक्तो विधिरनुसन्धेयः । तत्रैवमुक्तम् । प्रउगचितं चिन्वीत भ्रातृव्यवानिति । स एतस्यैव सतः समुद्गृह्यांसौ प्रागायातयति स तथा विहृतो भवति । न बहिर्वेदियूपः स्यात् ( बौ० श्रौ० सू० १७।२८, पृ० २०७ ) इति । समुद्गृह्येति अंसौ संकोचयित्वेत्यर्थः ॥ ८४ ॥

[ इति प्रउगचिदुपधानप्रकारः । ]

**उभयतः प्रउगं चिन्वीतेति ॥ ८५ ॥**

**उभयत** इति ॥८५॥

उभयत इति । विज्ञायते इति शेषः ॥ ८५ ॥

**यावानग्निः सारत्निप्रादेशस्तावदुभयतःप्रउगं कृत्वा नवमेन तिर्यङ्मान्याः प्रउगचितोक्ता विकाराः ॥ ८६ ॥**

**यावानग्निरिति** । यावानग्निः सार्धसप्तविधाग्निक्षेत्रमुभयतःप्रउगाकारं कृत्वेत्यर्थः ।

एतदुक्तं भवति—सार्धैकविंशतितिलाधिकविंशत्युत्तरशताङ्गुल(?)तिर्यङ्मानीकं द्विगुणपार्श्वमानीकं प्राक्प्रत्यग्दीर्घचतुरश्रं विहृत्य पूर्वापरदक्षि-

णोत्तरेषु मध्ये शङ्कुचतुष्टयं निहत्य शङ्कुषु स्पन्द्यामाबध्य बहिःस्पन्द्यमपच्छिन्द्यादिति ।

**नवमेनेति** । तिर्यङ्मान्या मध्यकरण्या नवमांशेन अर्धतिलाधिकसार्धषट्त्रिंशदङ्गुलमानेनेत्यर्थः । **प्रउगचितोक्तेति** । सप्तम्यर्थे तृतीया । अस्मिन्नुक्ता विकारा इष्टकानां कर्त्तव्या इत्यर्थः ।

एतदुक्तं भवति—तिर्यङ्मानीनवमांशायामास्तदर्धव्यासा बृहतीः तासामध्याः पाद्याश्च कुर्यादिति ॥ ८६ ॥

यावानिति । इष्टकाः कुर्याद् इत्यध्याहारः । अर्धाष्टमपुरुषक्षेत्रकरणोक्तेन विधिना उभयतःप्रउगं कृत्वा (१।४६), अयमत्र प्रकारः—सार्द्धसप्तविधक्षेत्रकरणीविस्तारं द्विगुणायामं दीर्घचतुरस्रं विहरेत् । तत्र त्रीणि शतान्यष्टाविंशतिश्च अङ्गुलय अर्धविंशांश्च तिलास्तिर्यङ्मानी । द्विगुणा पार्श्वमानी । एवं विहृत्य पूर्वापरयोः करण्योर्मध्यात् दक्षिणोत्तरयोर्मध्ये निपातयेत् । बहिःस्पन्द्यमपछिन्द्यात् । एवं कृते अर्धाधिकसप्तषष्टिशतत्रयमङ्गुल्यः करण्यो भवन्ति ।

नवमेनेति । इष्टकानामिति शेषः । तिर्यङ्मानी त्रीणि शतानि अष्टाविंशतिश्चाङ्गुलयोऽर्धद्वाविंशाश्चतिलाः । तस्या नवमभागेन प्रउगचितोक्ता विकाराः । नवमभागं द्वादशस्थानीयं कृत्वा नवमभागायामास्तदर्धव्यासा बृहत्यः । तासामध्याः, उभयप्रकाराः पाद्याश्च कारयेदित्यर्थः । तत्र बृहत्योऽष्टाविंशत्यधिकं षट्शतम् । षट्पञ्चाशत्त्रिशतमध्याः । अष्टौ शूलपाद्याः । तथा दीर्घपाद्याः चोडानाकसदृश्च द्रष्टव्याः ॥ ८६ ॥

## तथोपधानम् ॥ ८७ ॥

**तथोपधानमिति** । प्रस्तारे पूर्ववदेवोपधानमित्यर्थः ॥ ८७ ॥

तथोपधानमिति । यथा प्रउगचित्युक्तम् । अत्र चुबुकयोर्द्वे द्वे अध्ये इति द्रष्टव्यम् । अध्याश्चान्तयोरित्यत्रान्तेषु चेति । शेषमग्निं बृहतीभिरित्यादि च ।

तत्रैवमुपधानम् । प्राच्योऽष्टादश रीतयः । तत्र दक्षिणस्यां स्रक्त्यां अध्याद्वयेनैका रीतिः । तस्या अन्तर्गतरीत्या मध्ये द्वे बृहत्यौ । अन्तयोरध्ये । सर्वत्र बृहत्यः प्राच्यः अध्याश्च । सर्वत्र अन्तेषु अध्याः । तृतीया षडिष्टका । तुरीया अष्टेष्टका । पञ्चमी दशेष्टका । षष्ठी द्वादशेष्टका । तत्र मध्याद् दश बृहतीरुद्धृत्य विंशतिरध्याः । सप्तमी चतुर्दशेष्टका । अष्टमी षोडशेष्टका । नवमी अष्टादशेष्टका । एवं उत्तरो विभागः । अस्मिन् प्रस्तारे चतुर्विंशतिशतं बृहत्यः । षट्सप्ततिरध्याः ॥ ८७ ॥

**अपरस्मिन् प्रस्तारे चुबुकयोर्द्वे पादेष्टक उपदध्यात् । सन्ध्यन्तयोश्चदीर्घपाद्ये । दीर्घे चेतरे चतस्रः स्वयमातृण्णावकाश**

**उपदध्यात् । अध्यश्चान्तयोः । शेषमग्निं बृहतीभिः-प्रच्छादयेदर्धेष्टकाभिः सङ्ख्यां पूरयेत् ॥ ८८ ॥**

द्वितीयप्रस्तारे विशेषमाह—**अपरस्मिन्निति । चुबुकयोरिति ।** पूर्वापरयोरग्रयोः द्वे शूलपादेष्टके प्राक्प्रत्यग्दीर्घ उपदध्यादित्यर्थः। **सन्ध्यन्तयोरिति ।** दक्षिणोत्तरयोः स्रक्त्योः द्वे दीर्घपाद्ये । स्वयमातृण्णावकाशे पूर्ववच्चतस्रः पाद्या उपदध्यादित्यर्थः । शिष्टं स्पष्टम् ॥ ८८ ॥

चुबुकयोरिति । शूलपाद्ये । सन्ध्यन्तयोरिति । प्रउगसन्ध्यन्तयोः दक्षिणोत्तरस्रक्त्योरित्यर्थः । शेषमिति । पूर्वेण व्याख्यातम् ।

तत्रैवमुपधानम् । पूर्वपश्चिमचुबुकयोर्द्वे शूलपाद्ये । मध्ये सप्तदश उदीच्यो रीतयः । सर्वत्र प्रागायता इष्टकाः । मध्ये बृहत्यः । अन्तेषु अर्ध्याः । दक्षिणोत्तरस्रक्त्योर्दीर्घपाद्ये । मध्यमायां रीत्यां मध्यमायाः स्थाने पूर्ववत् पाद्याः । चतसृषु दिक्षु चतस्रश्चतस्रो बृहतीरुद्धृत्य अष्टावष्टावर्ध्या निधेयाः । एवं द्विशतः प्रस्तारः ।

अस्मिन् प्रस्तारे अष्टाविंशतिशतं बृहत्यः । चतुःषष्टिरर्ध्याः । चतस्रः शूलपाद्याः । चतस्रोदीर्घपाद्याः ।

अत्र कल्पोक्तो विधिरनुसन्धेयः । तत्रैवमुक्तम् । उभयतःप्रउगं चिन्वीत यः कामयेत प्रजातान् भ्रातृव्यान्नुदेय प्रतिजनिष्यमाणानिति । एतस्यैव सतः समुद्गृह्यैव श्रोणीं प्रत्यायातयति स तथा विहृतो भवति यथा न बहिर्वेदियूपः स्यादिति ( बौ. श्रौ. सू. १७।२८ पृ. २०७ ) ॥ ८८ ॥

[ इति उभयतःप्रउगचिदुपधानप्रकारः । ]

**रथचक्रचितं चिन्वीतेति विज्ञायते ॥ ८९ ॥**

**रथचक्रचितमिति ।** रथचक्रमिव चीयत इति (तं ?) रथचक्रचितमित्यर्थः ॥ ८९ ॥

रथेति । रथस्य चक्रमिव चीयत इति रथचक्रचित् पूर्वेष्टकाकरणेचानुक्तेऽपि श्रुतौ गम्यमानायां विज्ञायत इति विशेषप्रतिपादनार्थमुक्तम् ॥ ८९ ॥

**द्वयानि तु खलु रथचक्राणि भवन्ति साराणि च प्रधियुक्तानि च । अविशेषात्ते मन्यामहेऽन्यतरस्याकृतिरिति ॥ ९० ॥**

**साराणीति ।** साराणि अरैः सह वर्तंत इति साराणि । प्रधियुक्तानि प्रधयो नाम मण्डलकृतचतुरश्राद्बहिःप्रदेशास्तैर्युक्तानीत्यर्थः । **अविशेषादिति ।** रथचक्रचितं चिन्वीतेति ब्राह्मणे सारत्वप्रधियुक्तत्वादिविशेषाश्रवणादित्यर्थः ।

**अन्यतरस्याकृतिरिति** । अर्थद्वयविशिष्टब्राह्मणद्रष्टारः अन्यतरस्य (सारस्य ?) प्रधियुक्तस्य वा रथचक्रस्याकृतिविकल्पे चोद्येते इति ॥ ६० ॥

अमुमेव प्रतिपादयति—द्वयानीति । तु शब्दोऽवधारणे । तत्र द्विप्रकाराणि लोके रथचक्राणि भवन्त्येव । कानि पुनस्तानि ? सह अरैर्वर्त्तन्त इति साराणि । प्रधियुक्तानि च । प्रधयो नाम चक्रस्य अन्ताः । तद्युक्तानि च । ब्राह्मणे रथचक्रचितं चिन्वीतेति अविशेषेण श्रूयते । तस्मादविशेषात् ते वयं मन्यामहे । अन्यतरस्याकृतिरिति । तस्मादुभयप्रकारं वक्ष्याम इत्यर्थः ॥ ९० ॥

**अथाग्निं विमिमीते । यावानग्निः सारत्निप्रादेशस्तावतीं भूमीं परिमण्डलां कृत्वा तस्मिन् यावत् सम्भवेत् समचतुरश्रं कृत्वा तस्य करण्या द्वादशेनेष्टकाः कारयेत् ॥ ९१ ॥**

**परिमण्डलामिति** । मध्ये शङ्कुं निहत्य पञ्चाशीतिशताङ्गुलेन चतुर्दशतिलयुक्तेन परिमण्डलं भ्रामयेदित्यर्थः । क्षेत्रप्रभाणमुक्त्वा करणीप्रकारं दर्शयति—**तस्मिन्निति** । परिमण्डले यावत् सम्भवति तावत् समचतुरश्रं कृत्वा तस्य समचतुरश्रस्य करण्याः पार्श्वमान्याः द्वादशेन द्वाविंशत्यङ्गुलेन पञ्चतिलोनेन समचतुरश्रं कारयेदित्यर्थः ॥ ६१ ॥

अथाग्निमिति । तस्य करण्या द्वादशेनेष्टकाः कारयेदिति वक्ष्यमाणेन सम्बन्धः । विष्कम्भो मण्डलविधा ( १।४७–४६ ) वेव प्रपञ्चितः ।

मध्ये शङ्कुं निहत्य पञ्चाशीतिशताङ्गुलेन चतुर्दशतिलयुक्तेन परिमण्डलं भ्रमयेत् । तस्य मध्ये विष्कम्भार्धद्विकरण्या सप्ततिलाधिकया द्विषष्टिशतद्वयाङ्गुलया समचतुरस्रं कुर्यात् । चतुरस्राद् बहिः चत्वारः प्रधयः । द्वाविंशत्यङ्गुलेन पञ्चतिलोनेन समचतुरस्रकरणम् । चतुरस्रमध्ये चतुश्चत्वारिंशच्छतं इष्टकाः शेरते ॥ ६१ ॥

**तासां षट् प्रधावुपधाय शेषमष्टधा विभजेत् । अस्मिन् प्रस्तारे चतुरश्रस्रक्तीरवान्तरदेशान् प्रति संपादयेत् ॥ ९२ ॥**

**अपरं प्रस्तारं तथोपदध्याद् यथा प्रध्यनीकेषु स्रक्तयो भवन्तीति ॥ ९३ ॥**

**तासामिति** । पूर्वोक्तेष्टकानां मध्ये षट् षट् प्रधिमूलेषु उपधायावशिष्टं प्रधीनां क्षेत्रमष्टधा विभजेदित्यर्थः । प्रध्यनीकेषु प्रधिमध्येषु महादिक्षु चतुरस्रस्य स्रक्तयः कोणप्रदेशेषु यथा भवन्ति तथोपदध्यादित्यर्थः ॥ ६२ ॥ ९३ ॥

तासामिति । प्रधिमूलमध्ये षट् चतुरस्रा उपधाय तस्य प्रधेः शेषं अष्टधा विभजेत् । उपहितानां षण्णां पार्श्वयोर्द्वे द्वे, मुखे चतस्र इति । त्रिकोणमाद्यम् । त्रितिलयुक्तं षड्विंशत्यङ्गुलमेकं करणम् । सप्ततिलहीनत्रयस्त्रिंशदङ्गुलं द्वितीयम् । तिलत्रयहीनं द्विचत्वारिंशदङ्गुलं तृतीयं कर्णरूपम् । तद्धनुरिव तक्षयेद् यथा षट्तिलोनाङ्गुलः शरो भवति । द्वितीयस्य षड्विंशत्यङ्गुलं तिलत्रययुक्तमेकं तिर्यक्फलकम् । एकादशतिलयुक्तं द्विचत्वारिंशदङ्गुलं द्वितीयम् । सप्ततिलोनत्रयस्त्रिंशदङ्गुलमेकं पार्श्वम् । षट्त्रिंशदङ्गुलं षड्विंशत्तिलं पार्श्वान्तरम् । तद् धनुरिव तक्षयेद् यथा तिलत्रयोनाङ्गुलिः शरो भवति । तृतीयस्याः सार्धविंशत्यङ्गुलमेकं तिर्यक्फलकम् । त्रिंशदङ्गुलकं षोडशतिलहीनं द्वितीयम् । सप्ततिलोनत्रयस्त्रिंशदङ्गुलमेकं पार्श्वम् चतुस्त्रिंशकं पार्श्वान्तरम् । तद् धनुराकारं तक्षयेद् यथा षड्विंशति तिलाः शरो भवति । चतुर्थस्य त्रिंशदङ्गुलं षोडशतिलहीनमेकं तिर्यक्फलकम् । सार्धद्वात्रिंशद् द्वितीयम् । सप्ततिलोनत्रयस्त्रिंशदङ्गुलमेकम् । चतुस्तिलोनं त्रयस्त्रिंशदङ्गुलं पार्श्वान्तरं धनुरिव तक्षयेत् । पञ्चविंशति तिलाः शरः । एतान्यत्र चत्वारि करणानि अन्यस्मिन् प्रध्यर्धे विपर्यासेन भवन्ति । एवमेव चत्वारः प्रधयः ॥९२॥

अपरमिति । पूर्वस्मिन् प्रस्तारे महादिक्षु प्रधयः । इह तेषु प्रध्यनीकेषु प्रधिमध्येषु चतस्रः स्रक्तयः । महादिक्षु स्रक्तय इत्यर्थः । एतावानेव भेदः पूर्वस्मात् प्रस्तारात् । एवं व्यत्यासेन पञ्च चितयः । इतिकरणः समाप्तिसूचकः ॥ ९३ ॥

[ इति प्रधियुक्तरथचक्रचित्प्रधानप्रकारः । ]

## अथापरः ॥ ९४ ॥

प्रधियुक्तरथचक्रचयनप्रकारमुक्त्वा साररथचक्र (चयन?) प्रकारमाह—

**अथापर** इति । अथानन्तरमपरः प्रकार उच्यते इति शेषः ॥ ९४ ॥

अथापर इति । अनन्तरमपरः प्रकारः । साररथचक्रचिदुच्यत इत्यर्थः ॥ ९४ ॥

**पुरुषार्धात् पञ्चदशेनेष्टकाः समचतुरश्राः कारयेन्मानार्थाः । तासां द्वे शते पञ्चविंशतिश्च सारत्निप्रादेशः सप्तविधः संपद्यते । तास्वन्याश्चतुःषष्टिमावपेत् । ताभिः समचतुरस्रं करोति । तस्य षोडशेष्टकापार्श्वमानो भवति । त्रयस्त्रिंशदतिशिष्यन्ते । ताभिरन्तान् सर्वतः परिचिनुयात् ॥ ९५ ॥**

**पुरुषार्धादिति** । पुरुषक्षेत्रार्धात् । पुरुषक्षेत्रं तावच्चतुश्शताधिकचतुर्दशसहस्राण्यङ्गुलयः तदर्धं द्विशताधिकसप्तसहस्राङ्गुलयः । एवं भूतात् अर्धपुरुषक्षेत्रादित्यर्थः । **पञ्चदशेनेति** । तत्क्षेत्रपञ्चदशभागेन समचतु-

रश्रा इष्टकाः कारयेत् । एवं पञ्चदशधाविभक्तस्यैकैकस्य क्षेत्रमशीत्यधिकचतुःशतान्यङ्गुलय इत्यर्थः । ननु एवं कृतेन क्षेत्रभागेन उपधाने प्रयोजनाभावात् कथं युक्तमित्यत आह—**मानार्था** इति । नोपधेया इत्यर्थः । उत्तरत्र वक्ष्यमाणेन कर्षणेन उपधानोपयुक्तेष्टकाकरणं स्पष्टं भविष्यतीति भावः । एवं पञ्चदशधाकर्त्तव्यत्वेन चोदिता इष्टकास्त्रिंशत्तिलाधिकैकविंशत्यङ्गुलपरिमाणका इत्यर्थः । **तासामिति** । पूर्वोक्तेष्टकानामित्यर्थः । **द्वे शत** इति । उक्तासु पञ्चविंशत्यधिकद्विशतसङ्ख्याकासु अन्यास्तत्सदृशीश्चतुःषष्टिः इष्टका आवपेत् ताभिः सह संयोजयेदित्यर्थः । आहत्य एकोननवत्युत्तरशतद्वयेष्टकाः सम्पन्नास्ताभिरिष्टकाभिः समचतुरश्रं करोति । समचतुरश्रकरणं स्वयमेव विवृणोति **तस्येत्यादिना** । तस्य करिष्यमाणस्य समचतुरश्रस्य षोडशेष्टकाः सर्वतः पार्श्वमानी भवति । **एवञ्च** सर्वस्मिन् पार्श्वे षोडशेष्टकारीतिर्भवति । आहत्य उपह्रियतेष्टकाः, षट्पञ्चाशदधिकशतद्वयसङ्ख्याकाभिः समचतुरश्रं कुर्यादित्यर्थः । तत्र त्रयस्त्रिंशदिष्टका अतिशिष्यन्ते । **ताभिरिति** । ताभिस्त्रयस्त्रिंशदिष्टकाभिरवशिष्टाभिरन्तान् सर्वतः परिचिनुयादित्यर्थः । अन्तप्रदेशान्सर्वतः सर्वान् त्रयस्त्रिंशद्भागान् परिचिनुयादिष्टकाभिः प्रच्छादयेदित्यर्थः ।

यद्यपि अन्तानिति निर्देशाच्चतुर्षु पार्श्वेषु उपधानं प्रतीयते तथापि सर्वत्र षोडशेष्टकारीतित्वेन त्रयस्त्रिंशदिरश्रेसमस्यन्तीति (?) न्यायेन सोऽपि तत्र योजयितुं शक्यते, तथापि तथाकरणे पूर्वकृतेष्टकापरिमाणलोपेन तत्प्रमाणानुसारेण वक्ष्यमाणकर्षणाद्यसम्भवात् प्रागदक्षिणयोर्वा प्रागुत्तरयोर्वा पश्चिमदक्षिणयोर्वा पश्चिमोत्तरयोर्वा योजयेत् । अथवा पर्यायाभिप्रायेण बहुवचननिर्देशः । पार्श्वद्वयप्राप्तमुपधानमनियमेन ययोः कयोः पार्श्वयोः कर्त्तुं शक्यत इत्यर्थः । एवं केचिदाहुः । तत्र अवशिष्टानामिष्टकानां पुनः संयोजनं कथं ? नानार्थकापत्तेः । अन्तशब्दस्य सर्वतः प्रकृतक्षेत्रान्तपरत्वावगमेन प्रकृतरीत्यन्त(र)परत्वकल्पनानुपपन्ना । अन्तशब्दस्य क्षेत्रान्त-

परत्वे प्रायेण बहुवचनसमर्थनमेव दोषः। किञ्च "नाभिः षोडशमध्यमा" इति मध्याभिधाने सप्तदशेष्टकपार्श्वमानीकचतुरश्रप्रसङ्गेन षोडशेष्टकानाम- न्यतरतो वैषम्यप्रसङ्गेन मध्यमत्वासम्भवात् तत्र सप्तदशपार्श्वमानीक- योदशेष्टकचतुरश्रं परिगृह्य स्रक्त्येष्टकासु चतसृषु शङ्कुं निहत्य स्पन्द्यया परिचयने अष्टाविंशत्युत्तरशतेष्टकाभिः अरवेदिकरणसम्भव इति वाच्यम्। इष्टकास्वरूपभङ्गप्रसङ्गात्। तस्मादयमत्र सूत्रार्थः—ताभिर- न्तान्त्सर्वतः परिचिनुयात्ताभिस्त्रयस्त्रिंशदिष्टकाभिः अन्तान् चतुरः पार्श्वान् परिचिनुयात् संयोजयेत्। अयमत्र संयोजनप्रकारः—त्रयस्त्रिंशदिष्टकासु एकां निधाय अवशिष्टा द्वात्रिंशदिष्टका द्वेधा विभज्य प्रतिपार्श्वं षोडश षोडश संयोजयेत्। अवशिष्टामिष्टकां चतुर्धा विभज्य चतुर्षु कोणेषु योजयेदिति। इष्टकाभङ्गस्तथापि समान इति चेत्; सत्यम् तव पक्षे नाभिकरणे षोडशेष्टकानां भङ्गः, अरवेदिकरणे अष्टाचत्वारिंशदिष्टकानां भङ्ग इति दुर्बोधतया गौरवम्। मम तु त्रयस्त्रिंशदिष्टकानामेवेति लाघवम्॥ ९५॥

पुरुषार्धादिति। पुरुषक्षेत्रं चतुर्दशसहस्राणि चत्वारि शतान्यङ्गुलयः। तस्यार्धात् द्विशताधिकसप्तसहस्रात्। पञ्चदशांशं अशीत्यधिकचतुःशताङ्गुलं मूलं गृहीत्वा तेन भागेन इष्टकाः समचतुरस्राः कारयेत्। मानार्थाः एताभिरिष्टकाभिरग्निमानं वक्ष्यति तदर्थाः। नोपधानार्थाः।

तत्र पञ्चदशभागस्य करणीक्लृप्तिः। अशीत्यधिकचतुःशतमङ्गुलीश्चतुस्त्रिंशत्ति- लवर्गेण षट्पञ्चाशच्छताधिकसहस्रेण हत्वा तस्य मूलमानीय तिलवर्गमूलेन चतुस्त्रिंशधा विभज्य लब्धं एकविंशतिरङ्गुलय एकत्रिंशत्तिलाः। तेनेष्टकाः समचतु- रस्राः कारयेत्। तासामिति। तृतीयार्थे षष्ठी। अर्धपुरुषक्षेत्रे पञ्चदशेष्टकाः शेरते। ताः पञ्चदशभिर्गुणिताः द्वे शते पञ्चविंशतिश्च भवन्ति। तास्विति। तासु मानार्थासु। अन्यः तत्सदृशाः। उक्ताभ्योऽतिरिक्ताः चतुःषष्टिमिष्टका आवपेत् संयोजयेत्। एवं अग्निक्षेत्राधिकाभिः सह एकोननवतिशतद्वयं भवन्ति। ताभिरिति। ताभिः एकोननव- तिशतद्वयसंख्याकाभिः। तस्येति। पूर्वेषां चतुरस्राणां प्रदर्शनार्थमिदम्। अग्निक्षेत्रमध्यं परिगृह्य प्रथमं द्वाभ्यां द्वाभ्यां चतुरिष्टकं चतुरस्रं कृत्वा ततस्त्रिभिस्त्रिभिर्नवेष्टकम्। ततश्चतुर्भिश्चतुर्भिः षोडशेष्टकमित्यादि। षोडशभिः षट्पञ्चाशच्छतद्वयेष्टकं चतुरस्रं चात्र कुर्यादित्यर्थः।

त्रयस्त्रिंशदिति । एवं षोडशेष्टकाभिः चतुरस्रे कृते एकोननवतिशतद्वयात् त्रयस्त्रिंशदिष्टका अतिरिच्यन्ते । ताभिरिति । ताभिरतिशिष्टाभिः । अन्तान् आदित आरभ्य प्रदक्षिणमुपधीयमानत्वात् पर्यायापेक्षया बहुवचनम् । पूर्वोत्तरपार्श्वयोरित्यर्थः । पूर्वपार्श्वमान्यां षोडश । उत्तरपार्श्वमान्यां षोडश । पूर्वोत्तरकोट्यां खण्डक्षेत्रे एका । एवं त्रयस्त्रिंशत् ॥ ९५ ॥

## नाभिः षोडशमध्यमाः ॥ ९६ ॥

**नाभिरिति** । मध्यगताः षोडशेष्टका नाभिर्भवति । सप्तदशपार्श्वमानीके चतुरश्रे प्रतिपार्श्वं सार्धषडिष्टकाक्षेत्रं विहाय मध्ये चतुरिष्टकापार्श्वमानीकं नाभिं कुर्यादित्यर्थः ॥ ९६ ॥

नाभिरिति । एवमुपहितानामिष्टकानां मध्यमाः मध्यगताः षोडशेष्टकाः । चक्रस्य नाभिर्भवति । तत्र प्रकारः । मध्ये पञ्चेष्टकापार्श्वमानीकं पञ्चविंशेष्टकचतुरस्रं परिगृह्य तस्य चतुरस्रस्यावान्तरदिक्षु स्रक्तिषु या इष्टकास्तासां मध्येषु शङ्कून् निहत्य स्पन्द्यया परितनोति । एवं षोडशेष्टकं चतुरस्रं भवति । सा नाभिः ॥ ९६ ॥

## चतुःषष्टिरराः ॥ ९७ ॥

**चतुःषष्टिरिति** । अरा इति रथचक्रावयवविशेषाः ॥ ९७ ॥

चतुःषष्टिरिति । शिष्टानामिष्टकानां चतुःषष्टिरिष्टकाः चक्रस्य आराः प्रसिद्धा अवयवा भवन्ति ॥ ९७ ॥

## चतुःषष्टिर्वेदिः ॥ ९८ ॥

**वेदिरिति** । अरान्त एव प्रदेशो वेदिः । अरवेद्यर्थं अष्टाविंशत्युत्तरशतेष्टकाभिर्मध्यचतुरश्रं कुर्यादित्यर्थः । द्वादशेष्टकपार्श्वमानीकं चतुरश्रं मध्ये कुर्यात् । एवं चतुरश्रे कृते नाभ्यर्थं मध्यतः षोडशेष्टकास्वपनीतासु अष्टाविंशत्युत्तरशतेष्टकाः सम्पद्यन्ते ताभिररवेदी कुर्यादित्यर्थः ॥ ९८ ॥

चतुःषष्टिरिति । वेदिरपि चतुःषष्टिरिष्टकाः आराणामन्तरालभूमिः । वेदिसंज्ञकनामधेयत्वात् तत्र स्तरणादयो धर्माः । आराणां वेद्या (श्च ?) सह अष्टाविंशतिशतमिष्टकाः । तत्र प्रकारः चतुरस्रमध्ये त्रयोदशेष्टकपार्श्वमानीकं नवषष्टिशतेष्टकं चतुरस्रं परिगृह्य तस्य चतुरस्रस्य कोटिषु या इष्टकाश्चतस्रस्तासां मध्येषु शङ्कवः स्पन्द्यया-वेष्टिता अष्टाविंशतिशतं भवन्ति ॥ ९८ ॥

**नेमिः शेषाः ॥ ९९ ॥**

**नेमिरिति** । नेमिः रथचक्रान्त्यप्रदेशः । पञ्चचत्वारिंशच्छतेष्टका नेमिः । ताभिर्नेमिं कुर्यादित्यर्थः ॥ ९९ ॥

नेमिरिति । शेषाः विनियुक्तावशिष्टाः पञ्चचत्वारिंशच्छतमिष्टकाः नेमिर्भवन्ति । रथचक्रस्य बाह्यावयवो नेमिः ॥ ९९ ॥

**नाभिमन्ततः परिलिखेत् ॥ १०० ॥**

**नाभिमिति** । नाभ्यन्तरं कृतं चतुरश्रं परिमण्डल(१।४७)मित्यादिना परिमण्डलं कुर्यात् । यद्यपि परिलिखेदिति सामान्यनिर्देशाद् यथा कथञ्चिदुपपद्यते, तथापि लोके रथचक्रनाभिमण्डलाकारदर्शनादिहापि परिमण्डलं कर्त्तव्यमिति गम्यते ॥ १०० ॥

नाभिमिति । नाभिः षोडशमध्यमा (३।९६) इत्युक्तम् । तां नाभिमन्ततः सर्वतो लिखेत् । अक्ष्णयार्धं (१।४७) मित्यादिना ॥ १०० ॥

**नेमिमन्ततश्चान्तरतश्च परिलिख्य नेमिनाभ्योरन्तरालं द्वात्रिंशद्धा विभज्य विपर्यासं भागानुद्धरेत् । एवमावाप उद्धृतो भवति ॥ १०१ ॥**

**नेमिमिति** । नेमिमन्तरं ततः परिलिखेत् नेमेरन्तरं तस्य नेमेरन्तरं(?) तस्य नेमेरन्त्यप्रदेशे च परिमण्डलद्वयं कुर्यात् । पूर्वोक्तन्यायेनान्तप्रदेशे परिमण्डलं भवति । लोके मध्ये परिमण्डलाभावेऽपि रथचक्रकरणसम्भवादिहापि मध्ये परिमण्डलकरणे प्रमाणं नास्तीति चेन्न, अत्रापि लेखनविधानाच्चतुरश्रातिरिक्तं यत्किञ्चित्कर्त्तव्यमुभयत्रापि परिमण्डलदर्शनादविशेषादत्रापि परिमण्डलं भवति । अयमर्थः—अरवेद्यर्थं कृतं चतुरश्रं परिमण्डलं कुर्यात् । एवं नेम्यर्थं कृतं चतुरश्रं परिमण्डलं कुर्यात् । एवं त्रीणि मण्डलानि भवन्ति । ननु मण्डलत्रैविध्ये प्रमाणाभावात् प्रत्युत चतुःषष्टिरराश्चतुःषष्टिर्वेदिरिति पृथग् , नेमिः शेषा इति पृथगुपदेशाच्चत्वारि मण्डलानि भवन्ति । अथ परिमण्डलमूलभूतचतुरश्रचतुष्टयासम्भवाद् न परिमण्डलचतुष्टयं सम्भवति । अस्तु वा चतुरश्रचतुष्टयसम्भवः अथापि अरार्थंकृतपरिमण्डलादुपरि वेद्यर्थं परिमण्डलं कर्त्तव्यम् । तस्या-

न्तरालरूपत्वादरनेम्योरसम्बन्ध एव स्यादिति चेन्न, पूर्ववदेव त्रीणि मण्डलानि कृत्वा अरवेदिरूपपरिमण्डले वक्ष्यमाणानां षोडशानां मध्ये यथायोगमष्टौ निधाय अवशिष्टानामष्टानामर्धक्षेत्रं निधाय उद्धृतार्धक्षेत्रेण मध्यमण्डले यथा मण्डलान्तरं भवति तथा योजने अरवेद्योः सम्बन्धसम्भवात्।

ननु मण्डलचतुष्टयपक्षे सप्तदश करणानि भवन्ति तत्तु द्वितीयप्रस्तारे विवेचयामः। तथा च "स एष षोडशकरणः सारो रथचक्रचिदि"(३।१०७) ति सूत्रविरोधः। मैवं द्वितीयप्रस्तारे नेमिनिविष्टानामराणामन्तरालदेशेषु इष्टकाद्वयं कर्त्तव्यमिति वक्ष्यते। तत्रेष्टकाद्वयमानेन दीर्घेष्टकाकरणमप्यन्तर्गतम्। एवं षोडशसु करणेष्वेवान्तर्भावाद् न दीर्घेष्टकार्थं करणान्तरं सम्पादनीयमिति न सूत्रविरोधः।

चत्वारि परिमण्डलानीति चेन्न, मण्डलचतुष्टयपक्षस्य दुर्ज्ञेयत्वाद् मण्डलत्रितयपक्ष एव आश्रयामहे। **नेमिनाभ्योरिति**। नाभिपरिमण्डलनेमिपरिमण्डलदेशा द्वात्रिंशद्भागा यथा भवन्ति तथा समं विभजेत्। नाभिमारभ्य नेमिपर्यन्तं लिखेदित्यर्थः। तत्र द्वात्रिंशद्भागेषु एकं निधाय एकमुद्धरेदिति क्रमेण परित उद्धरेत्। एवं च षोडश भागा उद्धृता भवन्ति। पूर्वमन्तरालरूपवेद्यर्थं संयोजिता चतुःषष्टीष्टका उद्धृता भवन्ति। आवाप इति जातावेकवचनम्॥ १०१॥

नेमिमिति। अन्तत एकोननवतिशतद्वयेष्टकं अग्निक्षेत्रम्। अक्ष्णयार्ध (१।४७) मित्यादिना मण्डलं परिलिख्य अन्तरतश्चतुश्चत्वारिंशच्छतपरिमितं चतुरस्रं च मण्डलीकृत्येत्यर्थः। एवं अग्निक्षेत्रे त्रीणि मण्डलानि भवन्ति। तत्र मध्यमाद्यमण्डलयोर्मध्यवर्त्तिक्षेत्रं द्वात्रिंशद्धा विभज्य नाभेरारभ्य आ नेम्या द्वात्रिंशतं लेखा लिखित्वा विपर्यासं एकान्तरालं भागानुद्धरेत्। एवमिति। तासु अन्याश्चतुःषष्टिमावपे (३.९५) दित्युक्तास्ता अपनीता भवन्ति। जातावेकवचनम्। अराणाञ्च वेदेश्च तुल्यप्रमाणत्वादितिभावः। एवं अराः षोडश भवन्ति। तावदन्तरालाः॥ १०१॥

**नेमिं चतुःषष्टिं कृत्वा व्यवलिख्य मध्ये परिकृषेत्। ता अष्टाविंशतिशतं भवन्ति॥ १०२॥**

**नेमिमिति** । नेमिं व्यवलिख्य चतुःषष्टिभागान् कृत्वा नेमिमध्ये सर्वतः परिमण्डलरूपेण परिलिखेत् । अयमर्थः—अररेखाभिरसंयुक्ततया परिलिखेत् । एवं कृते अष्टाविंशत्यधिकशतेष्टकाः सम्पन्नाः । अन्यस्मिश्चयने सर्वत्र इष्टकानुरोधेन करणान्युन्नेयानि । अत्र नेमीष्टकासु करण-द्वयम् ॥ १०२ ॥

नेमिमिति । नेमिप्रदेशमभ्यन्तरदेशादारभ्य आ वाह्यान्तात् चतुःषष्टिं कृत्वा चतुःषष्टिभागान् समान् कृत्वा । तत्र द्वितीये प्रस्तारे अरा नेमिं प्रविशन्ति तत्र भेदो यथा न भवति तथा अराणां पार्श्वदेशभागान् षोडशभागान् कृत्वा । एकैकं भागं समशश्चतुरो भागान् कृत्वा । व्यवलिख्य व्यवधामालिख्य । नेमिं मध्ये परिकृषेत् । सर्वतः कृषेत् । ता इति । बाह्याः चतुःषष्टिः । तासामेकं करणम् । अन्ततश्चतुःषष्टिः । तासामेकं करणम् ॥ १०२ ॥

**अरांश्चतुर्धा विभजेत् । नाभिमष्टधा विभजेत् । एष प्रथमः प्रस्तार ॥ १०३ ॥**

**अरानिति** । षोडश अरानेकैकं तिर्यक् चतुर्धा विभजेत् । यद्यप्यराणां चतुर्धा विभागो दीर्घरज्ज्वाकारेणापि कर्तुं शक्यते, तथापि षोडश करणोप-पत्त्यर्थमेव विभागो सदं (?) द्रष्टव्यः । एवञ्च षोडशारेषु चतुःषष्टिरिष्टकाः सम्पद्यन्ते । अत्र चत्वारि करणानि । **नाभिमिति** । नाभिमष्टौ भागान् समान् कुर्यात् । तत्राष्टाविष्टकाः । तत्रैकं करणम् । आहत्य अस्मिन् प्रस्तारे सप्त करणानि ॥ १०३ ॥

अरानिति । अरांश्चतुर्धा विभज्य लेखाः कुर्यात् । तासां चत्वारि (करणानि ?) । ताश्चतुःषष्टिः । नाभिमिति । अत्रापि द्वितीयप्रस्तारानुगुणं विभागः । अरप्रदेश-मध्येषु लेखा इत्यर्थः । तास्त्रिभुजाः । तासामेकं करणम् । बाह्यफलकं धनुर्वक्रम् । एवं सप्त करणानि । एष इति । एवं शतद्वयसंपत्तिः । तत्र मध्ये भेदो न परिहरणीयः । न स्रक्तिपार्श्वयो ( २।९ ) रित्युक्तम् ॥ १०३ ॥

**अपरस्मिन् प्रस्तारे नाभिमन्ततश्चतुर्थवेलायां परिकृषेत् । नेमिमन्तरतः । नेमिमन्तरतश्चतुःषष्टिं कृत्वा व्यवलिखेत् ॥१०४॥**

**अपरस्मिन्निति** । नाभिमन्तरतः नाभिमन्ततः अन्त्यप्रदेशे तद्वत्प्रदेशे इत्यपेक्षायां **चतुर्थवेलायामिति** । चतुर्थांशे परिकृषेत् परिलिखेत्,

नाभेश्चतुर्थवेलायामिति इत्यवगम्यते। अयमर्थः—नाभौ मध्यप्रदेशे अंशत्रयं निधाय अवशिष्टमेकं भागमरवेदिभ्यां संयोजयेत्। अत्रापि पूर्ववदंशनिहितांशत्रयं संयोज्य चतुर्थांशयोर्मध्ये पूर्वोक्तन्यायेन मण्डलं परिलिखेत्। **नेमिमन्तरत** इति। चतुर्थवेलायां परिकृषेदित्यनुषङ्गः। अयमर्थः—नेम्यामन्ततः प्रदेशे अंशत्रयं निधाय अन्तःप्रदेशे स्थितं चतुर्थभागमरवेदिभ्यां संयोजयेत्। निहितांशत्रयं संयोज्य चतुर्थांशयोर्मध्ये पूर्ववत्परिमण्डलं कर्त्तव्यम्। एवञ्च त्रीणि मण्डलानि भवन्ति। मध्यमण्डले पूर्वापेक्षया क्षेत्रमधिकं नाभिनेमिक्षेत्राभ्यां नाभिक्षेत्रान्नेमिक्षेत्रात् किञ्चित्किञ्चित् क्षेत्रमरवेद्यर्थं मण्डलेन योजितत्वात्। नन्वेवं तर्हि पूर्वोक्तनाभ्यादिपरिमाणभङ्ग इति चेन्न, मध्यमण्डलान्तर्गतनेमिनाभिचतुर्थांशयोररत्वे प्रमाणाभावात्। "अराणां पञ्चधा विभाग" (३।१०५) इति सूत्रकारेण नेमिनाभिचतुर्थांशसहितानामरत्वेन व्यवहार एव प्रमाणमिति चेन्न, "आ परिकर्षणयो" रिति परिकर्षणद्वयसहितानामराणां पञ्चधाकरणवचनेन परिकर्षणविधातिरिक्तस्यैवारत्वविभागो द्रष्टव्यः। **नेमिमिति**। नेमिं यथा चतुःषष्टिभागा भवन्ति तथा व्यवलिखेदित्यर्थः ॥ १०४ ॥

अपरस्मिन् इति। उपधानमुच्यत इति शेषः। अन्तत अरसंयोगदेशे। चतुर्थवेलायां मध्यादारभ्य बाह्यतो नाभिचतुर्थमवशिष्य परिलिखेत्। नेमिमन्तरत इति। अरसंयोगदेशे नेमिमभ्यन्तरतो नेमिप्रमाणचतुर्थभागेऽतीते परिकृषेत्। नेमिमन्तरत इति। नेम्यन्तरं परिकर्षणबाह्यभागं चतुःषष्टिं कृत्वेत्यादि। अत्र प्रथमप्रस्तारलेखानां मध्येषु लेखास्तासामेकं करणम् ॥ १०४ ॥

**अराणां पञ्चधा विभाग आ परिकर्षणयोः ॥ १०५ ॥**

**अराणामिति**। अराणां नाभिकर्षणचतुर्थांशनेमिचतुर्थांशसहितानां पञ्चधा विभागः कर्त्तव्यः। परिकर्षणशब्देन रेखया परिगृहीतनाभिनेम्योश्चतुर्थांश उच्यते। आङ् अभिविधौ पञ्चम्यर्थे च (नेष्टा ?) तेन नाभिचतुर्थांशसहितानाम् अराणां पञ्चधा विभागः कर्त्तव्य इत्यर्थः ॥ १०५ ॥

अराणामिति। अराणां भेदपरिहारेण पञ्चधाविभागः। आ परिकर्षणयोः। परिकर्षणशब्देन नेमिनाभ्युदरेषु प्रविष्टचतुर्थांशावुच्येते। नाभ्यामराणां

भेदपरिहारेण पञ्चधा विभाग इत्यर्थः। ता अशीतिरिष्टकाः। तासां पञ्च-करणानि ॥ १०५ ॥

**नेम्यामन्तरालेषु द्वे द्वे। नाभ्यन्तरालेष्वेकैकाम्। यच्छेषं नाभेस्तदष्टधा विभजेत् ॥ १०६ ॥**

**नेम्यामिति**। अरान्त्येष्टकाद्वयान्तरालनेमिचतुर्थांशेषु एकैकस्मिन् द्वे द्वे इष्टके उपदध्यात्। **यच्छेषमिति**। उपर्युक्तचतुर्थांशव्यतिरिक्तनाभेस्त्रिभाग-देशमष्टधा विभजेत् ॥ १०६ ॥

नेम्यामिति। अराणामन्तरालेषु वेदिप्रदेशसमीपे नेम्यां द्वे द्वे इष्टके। अराणां नेम्यां प्रविष्टत्वान्न नेमिचतुर्भागा वेदिविस्तारभूमयः सम्भवन्ति। तासामनूचीनां विभागः। तासामेकं करणम्। ता द्वात्रिंशत्। नाभ्यन्तरालेति। अराणां नाभौ प्रविष्टत्वान्नाभिचतुर्थांशा वेदिविस्तारभूमयः सम्भवन्ति। तेष्वेकामिष्टकाम्। ताः षोडश। यच्छेषमिति। चतुर्थवेलायां परिकृषे ( ३।१०४ ) दित्युक्तम्। ततोऽभ्यन्तर-मित्यर्थः। तद्भेदपरिहारेणाष्टधा विभजेदित्यर्थः। तासामेकं करणम्। ता अष्टा-विष्टकाः। एवं नव करणानि। नेम्यन्ते एकम्। नेम्यन्तराले एकम्। अरेषु पञ्च। नाभ्यन्तराले एकम्। नाभिशेषे एकम्।

इष्टकास्तु नाभ्यां अष्टौ। नाभ्यन्तरालेषु षोडश। अरेषु अशीतिः। नेम्यन्त-रालेषु द्वात्रिंशत्। नेम्यन्तरेषु चतुःषष्टिः। एवं द्विशतपूर्त्तिः। एवमिष्टकाविभागे नव करणान्युक्तानि भवन्ति। सर्वत्र भूमौ लिखित्वा इष्टकाः कारयेत् ॥ १०६ ॥

**स एष षोडशकरणः सारो रथचक्रचित् ॥ १०७ ॥**

**स एष** इति। प्रस्तारद्वयनिष्कृष्टकरणसङ्ख्यानिर्देशपुरःसरमुपसंहारः कृतः। अस्मिन् प्रस्तारे नव करणानि। तथाहि नाभित्रिभागे एकं करणम्, नाभिचतुर्थांशान्तराले एकम्, अ(प)रेषु पञ्च, नेमिचतुर्थांशान्तराले एकम्, नेम्यामेकमिति नव करणानि। प्रथमप्रस्तारे सप्त आहत्य षोडशकरणानीति यावत् ॥ १०७ ॥

स एष इति। उत्तरपटलोऽपि द्रष्टव्यः। पूर्वत्र सप्त। अपरस्मिन् नव। सुख-ग्रहणार्थं करणानां ग्रहणम्।

अत्र कल्पोक्तो विधिरनुसन्धेयः। तत्रैवमुक्तम्। रथचक्रचितं चिन्वीत भ्रातृ-व्यवानिति विज्ञायते। आकृतिविकारस्य शब्दसंयोगाद् यावानग्निः सारत्निप्रादेश-स्तावतीं भूमिं परिमण्डलां कृत्वा अनुशर्करमिष्टकाः परिचिनोति। अथान्तरतोऽथा-

न्तरत एवमेव स्वयमातृण्णायाः। अथाभितः स्वयमातृण्णाया मध्ये नाभिमिव करोति। तस्यानुदिशमवान्तरदिशमराणि च नेमिमिवेष्टका आयातयति। स एष रथचक्रचिद् भ्रातृव्यवतः परिकृष्यत इति ( बौ. श्रौ. सू. १७।२९ पृ : ३०७ )। तत्र परिकर्षणं मण्डलकर्षणम् ॥ १०७ ॥

[ इति साररथचक्रचिदुपधानप्रकारः। ]

**द्रोणचितं चिन्वीतेति विज्ञायते ॥ १०८ ॥**

साररथचक्रचयनमुक्त्वा द्रोणचयनप्रकारमाह **द्रोणचितमिति**॥१०८॥

द्रोणेति। द्रोणाकारमिव चिन्वीतेति विज्ञायते ॥ १०८ ॥

**द्वयानि तु खलु द्रोणानि भवन्ति चतुरश्राणि परिमण्डलानि च। अविशेषात्ते मन्यामहेऽन्यतरस्याकृतिरिति ॥ १०९ ॥**

यद्यपि श्रुतौ सामान्यतः द्रोणचितं चिन्वीतेति वर्तते तथापि लोके द्विविधानि द्रोणानि अन्नसाधनत्वेन दृष्टानीत्यभिप्रायेणाह— **द्वयानीति** ॥ १०९ ॥

द्वयानीति। द्वयानि द्विप्रकाराणि लोके प्रसिद्धानि। त्सरुमन्ति चतरस्राणि। परिमण्डलानि ओष्ठवन्ति। एतत् सर्वं रथचक्रे व्याख्यातम् ॥ १०९ ॥

**अथाग्निं विमिमीते। चतुरश्र आत्मा भवति। तस्य त्रयः पुरुषास्त्रिभागोनाः पार्श्वमानी भवति। पश्चात् त्सरुर्भवति। तस्यार्धपुरुषो दशाङ्गुलानि प्राची। त्रिभागोनः पुरुषः उदीची। एवं सारत्निः प्रादेशः सप्तविधः संपद्यते ॥ ११० ॥**

**तस्येति**। तस्यात्मनस्त्रयः पुरुषा एकपुरुषतृतीयेन भागेनोनाः त्रिभागोना विंशत्यधिकत्रिशताङ्गुलप्रमाणका पार्श्वमानी भवतीत्यर्थः। **पश्चात् त्सरुर्भवतीति**। त्सरुः पुच्छस्थाना भवतीत्यर्थः। **तस्यार्धेति**। प्राक् प्रत्यक् सप्तत्यङ्गुलदीर्घं दक्षिणोत्तरमशीत्यङ्गुलदीर्घमेवं दीर्घचतुरश्रं कुर्यात्। आत्मना अव्यवहिततया कुर्यादित्यर्थः। एवं सारत्निप्रादेशः सप्तविधः संपद्यते ॥ ११० ॥

चतुरश्रेति। तस्याग्नेः समचतुरस्र आत्मा भवति। तस्येति। तस्य आत्मनः। त्रयः पुरुषास्त्रिभागोनाः द्वौ पुरुषौ तृतीयः तृतीयभागहीनः पुरुषः। न प्रत्येकम्। एवं त्रिभागोनास्त्रयः पुरुषाः। विंशत्यधिकशतत्रयाङ्गुला पार्श्वमानी भवति।

पश्चादिति । पश्चात् पुच्छस्थाने त्सरुर्भवति । तस्यैति । तस्य त्सरोः । अर्धपुरुषः षष्टिरङ्गुलयो दशाङ्गुलानि च । एवं सप्ततिरङ्गुलयः प्राची भवति । त्रिभागोन इति । अशीतिरङ्गुलय उदीची भवति । आत्मपश्चिमपार्श्वमान्या दक्षिणत उत्तरतश्चोभयत्र पुरुषमात्रमवशिष्य मध्यतोऽशीत्यङ्गुलदक्षिणोत्तरं सप्तत्यङ्गुलायतं ( दीर्घचतुरस्रं ) पश्चात् त्सरुर्भवतीत्यर्थः । इति करणो मानसमाप्त्यर्थः । एवमिति । अस्याग्नेः षष्ठीनां प्रथमकरणत्वात् ताभिः संपत्तिरुच्यते । आत्मनि षट्पञ्चाशच्छतद्वयं षष्ठ्यः शेरते । त्सरौ चतुर्दश । एवं सारत्निप्रादेशः सप्तविधः सप्ततिशतद्वयं षष्ठ्यः संपद्यन्ते ॥ ११० ॥

**तस्येष्टकाः कारयेत् पुरुषस्य षष्ट्यस्ता एवैकतोऽध्यर्धास्तासामध्यास्तिर्यग्भेदाः पुरुषस्य चतुर्थ्य इति ॥ १११ ॥**

तस्येष्टकाः कारयेदित्येतत्सूत्रमारभ्य चतुरश्रद्रोणचयनप्रतिपादकसूत्रपर्यन्तं सूत्रभङ्गीकृतव्याख्यानं दूषयितुं वाक्यतो नोपपद्यते, तथा हि—**तस्येष्टका** इति । षष्ठ्यः विंशत्यङ्गुलास्ता एवैकतोऽध्यर्धास्त्रिंशदङ्गुलपार्श्वमान्यस्तासामध्यास्तिर्यग्भेदाः । **पुरुषस्य चतुर्थ्य** इति । षष्ठ्यः विंशत्यङ्गुलाः ता एवैकतोऽध्यर्धास्त्रिंशदङ्गुलपार्श्वमान्यस्तासामध्यास्तिर्यग्भेदाः विंशत्यङ्गुलपार्श्वमानीकाः दशाङ्गुलतिर्यङ्मानीकाः चतुर्थ्यस्त्रिंशदङ्गुलाः । तत्र द्विचत्वारिंशत्षष्ठ्यः द्विपञ्चाशत्ससप्तशतमध्यर्धा द्विषष्टिशतमध्याश्चत्वारिंशच्चतुर्थ्यः । तत्र चोडानाकसदः अष्टा अध्यर्धा द्वे (अर्ध्ये ?) इति करणः (प्र) करणसमाप्तिसूचकः ॥ १११ ॥

अथेष्टकानां विकाराः । तस्येष्टका इति । षष्ठ्यो विंशत्यङ्गुलाः । ता एवैकतोऽध्यर्धाः त्रिंशदङ्गुलपार्श्वमान्यः । तासामध्यास्तिर्यग्भेदाः विंशत्यङ्गुलपार्श्वमानीका दशाङ्गुलतिर्यङ्मानीकाः । चतुर्थ्यस्त्रिंशदङ्गुलाः । तत्र द्विचत्वारिंशत् षष्ठ्यः । द्विपञ्चाशत्सप्तशतमध्यर्धाः । द्विषष्टिशतमर्ध्याः । चत्वारिंशच्चतुर्थ्यः । तत्र चोडानाकसद अष्टावध्यर्धाः । द्वे अर्ध्ये । इति करणः करणसमाप्तिसूचकः ॥ १११ ॥

**तासां त्सरुश्रोण्यन्तरालयोः षट् षट् षष्ठीरुपधाय शेषमग्निं बृहतीभिः प्रच्छादयेत् । अर्धेष्टकाभिः सङ्ख्यां पूरयेत् ॥ ११२ ॥**

**तासामिति** । अध्यर्धाभिः प्राचीभिः प्रागायताभिः प्रच्छादयेत् । षोडश हीयन्ते । तत्र **अर्धेष्टकाभिरिति** । भेदपरिहारेणोभयस्मिन् पार्श्वे चतस्रश्चतस्रोऽध्यर्ध्या उद्धृत्य द्वादश द्वादशार्ध्या निधेयाः । एवमुपधाने भेदं संभवं

मत्वान्यथोपधानमाहुः। तत्र त्सर्वग्रे चतस्रोऽर्धेष्टका उदगायताः। ततश्चतस्रस्तु षष्ठ्यः। ततश्चतस्रोरीतयः प्रत्येकं द्वादशाध्यर्धेष्टकाः प्रागायताः। ततः त्सरुश्रोण्यन्तयोर्द्वादश द्वादश प्रागायतार्ध्याः। ततः पार्श्वयोः प्रागायताभिरध्यर्धाभिः षट् षड् रीतयो दश दशेष्टकाः। एवं द्विशतः प्रस्तारः। अस्मिन् प्रस्तारे चतस्रः षष्ठ्यः, अष्टषष्टिशतमध्यर्धाः, अष्टाविंशतिरर्ध्याः ॥११२॥

तासांमिति। अध्यर्धाभिः प्राचीभिः प्रागायताभिः प्रच्छादयेत्। षोडशहीयन्ते। तत्र अर्ध इति। भेदपरिहारेण उभयस्मिन् पार्श्वे चतस्रश्चतस्रोऽध्यर्धा उद्धृत्य द्वादश द्वादश अर्ध्या निधेयाः। एवमुपधाने भेदं सम्भवं मत्वा अन्यथोपधानमाहुः। तत्र त्सर्वग्रे चतस्रोऽर्धेष्टका उदगायताः। ततश्चतस्रः षष्ठ्यः। ततश्चतस्रो रीतयः प्रत्येकं द्वादश अध्यर्धेष्टकाः प्रागायताः। त्सरुश्रोण्यन्तयोर्द्वादश द्वादश प्रागायता अर्ध्याः। ततः पार्श्वद्वये प्रागायताभिरध्यर्धाभिः षड्रीतयो दशेष्टकाः। एवं द्विशतः प्रस्तारः। अस्मिन् प्रस्तारे चतस्रः षष्ठ्यः। अष्टषष्टिशतमध्यर्धाः। अष्टाविंशतिरर्ध्याः ॥ ११२ ॥

**अपरस्मिन् प्रस्तारे दक्षिणेंऽसेऽध्यर्धामुदीचीमुपदध्यात्। तथोत्तरे। पूर्वस्मिन्ननीके षड्भागीया उपदध्यात्। दक्षिणोत्तरयोश्चतुर्भागीयाः। त्सरोः पुरस्तात् पार्श्वयोर्द्वे चतुर्भागीये उपदध्यात्। तयोरवस्तादभितो द्वे द्वे अध्यर्धे विषूची। तयोरवस्तान्मध्यदेशे षष्ठ्यौ प्राच्यौ। शेषमग्निं बृहतीभिः प्रच्छादयेत्। अर्धेष्टकाभिः सङ्ख्यां पूरयेत् ॥ ११३ ॥**

**अपरस्मिन्निति**। आत्मनो दक्षिणेंऽसे। उदीचीमुदगायताम्। **तथोत्तर** इति। अध्यर्धामुदीचीमित्येव। **पूर्वस्मिन्निति**। आत्मपूर्वान्ते अंसयोः पूर्वोपहिताध्यर्धयोर्मध्ये। अर्थात् त्रयोदश षड्भागीयाः। **दक्षिणोत्तरयोरिति**। अनीकानुवृत्ते दक्षिणोत्तरयोरनीकयोरर्थाद्दश दश चतुर्भागीयाः। **त्सरोरिति**। त्सरोः पूर्वान्ते द्वयोः पार्श्वयोरेकैका चतुर्भागीया। **तयोरवस्तादिति**। तयोरुपहितयोश्चतुर्भागीययोः पश्चादभितः पार्श्वयोर्द्वे द्वे अध्यर्धे विषूची दक्षिणोत्तरायते उपदध्यात्। **तयोरवस्तादिति**। तयोः पूर्वोक्तचतुर्थ्योः पश्चाद्भूतप्रदेशे। मध्यदेशे त्सरुमध्यदेशे। त्सरुमध्यपश्चिमान्तादारभ्य षष्ठीद्वयमुपदध्यादित्यर्थः। **शेषमग्निमिति**। त्सरुणि(?)

चतुर्थ्योर्मध्ये एका बृहती श्रोण्योर्द्वे। एवं त्सरौ नवेष्टकाः। आत्मनि त्रिंशच्छतमध्यर्धाः प्राच्यः न्यूनाः षड्विंशतिः। **अर्धेष्टकाभिरिति**। आत्मनि पुरस्ताद्भागे मध्ये वा त्रयोदश वृहतीरुद्धृत्य एकोनचत्वारिंशदध्यर्धाः निधेयाः। अस्मिन् प्रस्तारे भेदपरिहारं दुःशकं मत्वान्यथोपधानमाहुः। त्सरौ पूर्ववत् नवेष्टकाः। आत्मनि दक्षिणत उत्तरतश्च दश दश चतुर्थ्यः। अंसयोर्द्वे अध्यर्धे उदीची। आत्ममध्ये प्राच्यास्त्रयोदशरीतयस्तास्वेकैकस्यमादितो नव नवाध्यर्धाः प्रागायताः। तत एकैकार्धेष्टका उदीची। तत एकैका षष्ठी। ततो द्वे द्वे अर्धेष्टके तिरश्च्यौ। एवं त्रयोदशेष्टकाः त्रयोदश रीतयः। एवं द्विशतः प्रस्तारः।

अस्मिन् प्रस्तारे पञ्चदश षष्ठ्यः। चतुर्विंशतिशतमध्यर्धाः। एकोनचत्वारिंशदध्यर्धाः। द्वाविंशतिः चतुर्थ्यः।

अयमत्रसूत्रभंगिनोऽभिप्रायः—सूत्रानुसारेण प्रथमप्रस्तारे इष्टकोपधानं कृत्वा वक्ष्यमाणसूत्रोक्तप्रकारेणेष्टकोपधाने सन्धिदर्शनात् अस्मि...त्प्रसंगेनान्यथैवोपधानमिति। अयन्तु सर्वथानुपपन्नः। सूत्रोक्तोपधानपक्षे सत्यपि सन्धिदर्शने सूत्रकारवचनप्रामाण्येन तस्यादोषत्वात्। ननु भेदान् वर्जयेत्, अधरोत्तरयोः पार्श्वसन्धानं भेदा ( २।९ ) इत्युपहितसन्धिपिधानस्यापिधर्मत्वेनोपन्यासात् कथं सन्धिदर्शनमदोष इति? न, तदग्न्यन्तेषु न विद्यते, न स्रक्तिपार्श्वयो(२।९)रित्यस्य उपलक्षणत्वेन चतुरश्रदोणचयनव्यतिरिक्तचयनविषयत्वेनापि भेदवर्जनवचनोपपत्तेः। यदि च सन्ध्यपिधानमभिहितं स्यात् तदापि सूत्रोक्तप्रकारेण प्रथमद्वितीयप्रस्तारयोः अन्यतरोपधानं कृत्वा तदनुरोधेन यथा सन्ध्यपिधानं भवति तथा एकप्रस्तारकल्पनामात्रेणापि तदुपपत्तौ प्रस्तारद्वयान्यथाकरणास्यात्यन्तायुक्तत्वात्।

तस्मादेवं हि सूत्रार्थः। तथाहि तस्येष्टकाः कारयेत्, तस्य द्रोणस्येत्यर्थः। पुरुषस्य षष्ठयः सर्वतो विंशत्यङ्गुलप्रमाणकाः समचतुरश्रा इष्टका इत्यर्थः। ता एवैकतोध्यर्धाः, पूर्वोक्ता एवेष्टका एकेन पार्श्वेनार्धाधिकाः त्रिंशदङ्गुलदीर्घा विंशत्यङ्गुलपार्श्वाः। तासां, अध्यर्धानां चेत्यर्थः। पुरुषस्य

चतुर्थ्यं इति, सर्वत्रस्त्रिंशदङ्गुलप्रमाणका इत्यर्थः। तासां त्सरुश्रोण्यन्तरालयोः षट् षट् षष्ठीरुपधाय शेषमपि बृहतीभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेत्। तासां पूर्वोक्तानामिष्टकानां मध्ये त्सरुश्रोण्यन्तरालयोः त्सरुश्च श्रोण्यौ च त्सरुश्रोण्यः, तस्य च तयोश्चान्तराले त्सरुश्रोण्यन्तरालयोः षट् षट् षष्ठीरुपधायान्तरालद्वये प्रत्येकं षड्भागीया उपदध्यादित्यर्थः।

अयमत्र प्रकारः—त्सरुक्षेत्रं तावत्प्राक् प्रत्यक् सप्तत्यङ्गुलं दक्षिणोदगशीत्यङ्गुलम् आत्मनः क्षेत्रन्तु विंशत्यधिकत्रिशताङ्गुलचतुरश्रम्। तत्रात्मचतुरश्रे पश्चिमपार्श्वे मध्ये त्सरुक्षेत्रम् अव्यवहिततया यथा दक्षिणोदक्दीर्घचतुरश्रं भवति तथा योजयेत्। एवञ्च त्सरोः दक्षिणांसादारभ्यात्मनः दक्षिणश्रोणिपर्यन्तं विंशत्युत्तरशताङ्गुलमस्यैव क्षेत्रस्य त्सरुश्रोण्यन्तरालत्वम् अस्मिन्नन्तराले आत्मदक्षिणपश्चिमपार्श्वे षट् षड्भागीया उपदध्यात्। एवं त्सरोरुत्तरप्रदेशेऽपि षट् षड्भागीया उपदध्यात्। आहत्य द्वादश आत्मनि पश्चिमपार्श्वे। प्राक्-प्रत्यक् विंशत्यङ्गुलं दक्षिणोत्तरम् अशीत्यङ्गुलमुपहितेष्टकासंनिहितक्षेत्रं निदध्यात्। ततः प्राक् त्रिशताङ्गुलं दक्षिणोत्तरं विंशत्युत्तरत्रिशताङ्गुलं वर्तते। ततः पश्चान्निहितक्षेत्रादारभ्य त्सरुपश्चिमक्षेत्रपर्यन्तं नवत्यङ्गुलं दक्षिणोत्तरम् अशीत्यङ्गुलं दीर्घचतुरश्रं विद्यते। उभयत्रापि काभिरिष्टकाभिरुपधानमित्याकाङ्क्षायामाह—बृहतीभिरिति। अर्ध्येष्टका पक्षे या (च ?)चतुर्थीनां बृहतीत्वात् ताभिरुपधानं स्यादित्याशङ्क्याह—प्राचीभिरिति। सर्वत्रापि प्रागायताभिरध्यर्धाभिरिष्टकाभिरुपधानं कुर्यादित्यर्थः। एवञ्च पूर्वोक्तात्मक्षेत्रे षष्ठ्युत्तरशतेष्टका अध्यर्धाः यथा प्रागायता भवन्ति तथोपदध्यात्। निहितक्षेत्रसहितत्सरुक्षेत्रे द्वादशेष्टका अध्यर्धा यथा प्रागायता भवन्ति तथोपदध्यात्। आहत्य चतुरधिकाशीत्युत्तरशतेष्टकाः सम्पन्नाः। अर्धेष्टकाभिः सङ्ख्यां पूरयेत्। तत्र द्विशतसङ्ख्यापूरणार्थं षोडश योजनीयाः। आत्मनि प्राक् पार्श्वे द्वितीयायाम् अध्यर्धेष्टकारीत्यां मध्यदेशे अष्टावध्यर्धा एकैकां तिर्यक् त्रेधा विभजेत्। एवञ्चैकैकस्यां अध्यर्धायां तिस्रस्तिस्रोऽर्ध्याः सम्पन्नाः। आहत्य चतुर्विंशतीष्टकाभिः द्विशतसङ्ख्यां पूरयेदित्यर्थः।

अपरिस्मन् प्रस्तारे आत्मनः दक्षिणेंऽसे प्रागदक्षिणकोणप्रदेशे एकामध्यर्धामुपदध्यात् । पूर्वस्मिन्ननीके षड्भागीया उपदध्यात्। उपहितयोरध्यर्धयोर्मध्ये षष्ठ्युत्तरद्विशताङ्गुलं वर्तते। तत्र त्रयोदश षड्भागीया विंशत्यङ्गुलप्रमाणकाः पूर्वस्मिन्ननीकेऽग्रे प्रदेशे अध्यर्धासहिततया उपदध्यादित्यर्थः। दक्षिणोत्तरयोश्चतुर्भागीयामुपदध्यात्। तत्राप्यनीकानुवृत्ते आत्मनो दक्षिणोत्तरयोरग्रप्रदेशयोः पूर्वोपहिताध्यर्धयोः पश्चात्ताभ्यां सहिताः दश दश चतुर्थ्य उपदध्यादित्यर्थः। त्सरोः पुरस्ताद् द्वे (द्वे) चतुर्भागीये उपदध्यात्। त्सरोः पुरस्तात्प्राक् प्रदेशे पार्श्वयोः दक्षिणोत्तरयोः पार्श्वयो द्वे (द्वे) चतुर्भागीये उपदध्यादित्यर्थः। तयोरवस्तादभितो द्वे द्वे अध्यर्धे विषूची तयोश्चतुर्थ्योरवस्तात् पश्चाद्देशेऽभितः दक्षिणोत्तरपार्श्वद्वये द्वे द्वे अध्यर्धे विषूची दक्षिणोदगूदीर्घे उपदध्यादित्यनुषङ्गः। तयोरवस्तात्तयोश्चतुर्थ्योः पश्चिमदेशे पूर्वोपहितानां चतःसृणामध्यर्धानां मध्ये द्वे षष्ठ्यौ प्राच्यौ प्राक् प्रत्यगदीर्घे उपदध्यादित्यनुषङ्गः। शेषमग्निं बृहतीभिः प्रच्छादयेत्, त्सरुगतचतुर्थ्योः मध्ये एका अध्यर्धा। आत्मनि पश्चिमदेशादारभ्याध्यर्धानां प्राक् प्रत्यगदीर्घानां प्राक् प्रत्यक् (त्रयोदश ?) रीतयः। दक्षिणोत्तरमष्टा (दश ?) रीतयः। उपहितानामध्यर्धानां प्राग्देशगतानाम् अष्टानां पुरस्ताद् अध्यर्धानां पञ्चदशाङ्गुलव्यासां विंशत्यङ्गुलदीर्घामेकैकामध्यर्धां दक्षिणोत्तरदीर्घामुपदध्यात्। पुनरुपहितानामुपरि अष्टावध्यर्धाः प्रागायता उपदध्यात्। पुनस्तासामुपरि अध्यर्धानामर्ध्याः पूर्ववदष्टा उपदध्यात्। एवञ्च दक्षिणपार्श्वे दक्षिणोत्तरं चत्वारिंशदङ्गुलं वर्तते। तत्राध्यर्धानामुदगायतानां दक्षिणोत्तरं रीतिद्वयं (दक्षिणोत्तरं रीतिशतकं) उत्तरपार्श्वेऽपि षष्ठ्यङ्गुलं वर्तते। दक्षिणोत्तर ? तत्राध्यर्धानां दक्षिणोदग् (प्राक्प्रत्यक् ?) रीतित्रयं प्राक्प्रत्यक् रीतिशतकम् (?) आहृत्य शतकमशीतिः द्वे इष्टकाः सम्पन्नाः। तत्राष्टादश योजनीयाः। दक्षिणपार्श्वस्थितचतुर्थीभ्यां उत्तरतः विद्यमानासु दशसु मध्ये प्रागायताम् एकां विधाय इतरा नवेष्टकाः

प्रत्यक् तिर्यक् त्रेधा विभजेत् । एवं सप्तविंशतिरिष्टकाः संपन्नाः । तत्र पूर्वसङ्ख्यार्थं नवधा अष्टादशभिरिष्टकाभिः द्विशतसङ्ख्यां पूरयेदित्यर्थः ॥ ११३ ॥

अपरस्मिन्निति । आत्मनो दक्षिणेंऽसे । उदीचीमुदगायताम् । तथविति । अध्यर्धामुदीचीमित्येव । पूर्वस्मिन्निति । आत्मपूर्वान्ते अंसयोः पूर्वोपहिताध्यर्धयोर्मध्ये । अर्थात् त्रयोदश षड्भागीयाः । दक्षिणोत्तरयोरिति । अनीकानुवृत्तेर्दक्षिणोत्तरयोरनीकयोः । अर्थात् दश दश चतुर्भागीयाः । त्सरोरिति । त्सरोः पूर्वान्ते द्वयोः पार्श्वयोरेकैका चतुर्भागीया । तयोरिति । तयोरुपहितयोश्चतुर्भागीययोः पश्चादभितः पार्श्वयो र्द्वे द्वे अध्यर्धे विषूची दक्षिणोत्तरायते उपदध्यात् । तयोरिति । तयोः पूर्वोक्तचतुर्थ्योः । पश्चाद्भूतप्रदेशे । मध्यदेशे त्सरुमध्यदेशे । प्राच्यौ प्रागपवर्गे । त्सरुमध्यपश्चिमान्तादारभ्य षष्ठीद्वयमुपदध्यादित्यर्थः । शेषमिति । त्सरुणि चतुर्थ्योर्मध्ये एका बृहती । श्रोण्योर्द्वे । एवं त्सरौ नवेष्टकाः । आत्मनि त्रिंशच्छतं अध्यर्धाः प्राच्यः । न्यूनाः षड्विंशतिः । अर्ध इति । आत्मनि पुरस्ताद्भागे मध्ये वा बृहतीरुद्धृत्य एकोनचत्वारिंशद् अर्ध्या निधेयाः । अस्मिन् प्रस्तारे भेदपरिहारं दुःशकं मत्त्वा अन्यथोपधानमाहुः । त्सरौ पूर्ववत् नवेष्टकम् । आत्मनि दक्षिणत उत्तरतश्च दश दश चतुर्थ्यः । अंसयोर्द्वे अध्यर्धे उदीची । आत्ममध्ये प्राच्यस्त्रयोदश रीतयः । तासु एकैकस्यां आदितो नव नव अध्यर्धाः प्रागायताः । तत एकैका अर्धेष्टका उदीची । तत एकैका षष्ठी । ततो द्वे द्वे अर्धेष्टके तिरश्च्यौ । एवं त्रयोदशेष्टकाः त्रयोदशरीतयः । एवं द्विशतः प्रस्तारः । अस्मिन् प्रस्तारे पञ्चदशषष्ठ्यः । चतुर्विंशतिशतं अध्यर्धाः एकोनचत्वारिंशद् अर्ध्याः । द्वाविंशतिः चतुर्थ्यः ॥ ११३ ॥

[ इति चतुरस्रद्रोणचिदुपधानप्रकारः । ]

**अथापरः ॥ ११४ ॥**

अथ चतुरस्रद्रोणचयनानन्तरं परिमण्डलद्रोणचयनप्रकारमाह— **अथापर** इति ॥ ११४ ॥

अथेति । अनन्तरमपरो द्रोणचिदुच्यते ॥ ११४ ॥

**पुरुषस्य षोडशीभिर्विंशशतं सारत्निप्रादेशः सप्तविधः संपद्यते । तासामेकामपोद्धृत्य शेषाः परिमण्डलं करोति । तत्पूर्वेण रथचक्रचिता व्याख्यातम् ॥ ११५ ॥**

**पुरुषस्येति** । पुरुषस्य षोडशीभिः सर्वतस्त्रिशदङ्गुलप्रमाणाभिरिष्टकाभिः । **विंशशतमिति** । विंशत्युत्तरशतेष्टकाक्षेत्र इत्यर्थः । **शेषा** इति । एकोनविंशत्युत्तरशतेष्टकाः यथा परिमण्डलं भवति तथा कुर्यादित्यर्थः ।

**तत्पूर्वेणेति** । तत्परिमण्डलं पूर्वेण प्रधियुक्तरथचक्रचिता । पूर्ववच्चतुरश्रस्य परिमण्डलकरणं परिमण्डलमध्ये चतुरश्रकरणमेतत्सर्वं व्याख्यातमित्यर्थः ॥ ११५ ॥

पुरुषस्येति । षोडशीभिः सर्वतः त्रिंशदङ्गुलाभिः । विंशत्यधिकं शतम् । तासामिति । तासां षोडशीनां मध्ये एकां षोडशीमपोद्धृत्य शेषा एकोनविंशत्यधिकं शतं षोडशीः परिमण्डलं करोति । तत्र सारत्निप्रादेशस्य सप्तविधस्याग्नेः क्षेत्रं लक्षमष्टौ सहस्राण्यङ्गुलयः । तस्मात् षोडशीपरिमितं नवशताङ्गुलक्षेत्रमुद्धृत्य शिष्टं लक्षं सप्त सहस्राणि शतञ्च । तस्य मूलमानीय नवतिलसहितसप्तविंशत्यङ्गुलसहितशतत्रयाङ्गुलप्रमाणेन समचतुरस्रं कृत्वा अक्ष्णयार्धं ( १।४७ ) मित्यादिना मण्डलं करोतीत्यर्थः । तत्पूर्वेणेति । तत् द्रोणचित उपधानम् । पूर्वेण प्रधियुक्तेन रथचक्रचिता । व्याख्यातं तस्मिन् यावत् सम्भवेत् तावत् समचतुरस्र ( ३।९१ ) मित्यादि । तद्वत् कर्त्तव्यम् ॥ ११५ ॥

**षोडशीं पुरस्ताद् विंशाय उपधाय तया सह मण्डलं परिलिखेत् । यदवस्तादपच्छिन्नं तत् पुरस्तादुपदध्यात् । प्रधीनां सप्तधा विभागः । प्रधिमध्यमाः प्रक्रमव्यासा भवन्ति । चतुरश्राणामध्याभिः सङ्ख्यां पूरयेत् ॥ ११६ ॥**

**षोडशीमिति** । प्राक्प्रदेशविंशये मध्ये अव्यवहिततया उपधाय तया षोडश्या सह आत्ममण्डलमूलभूतचतुरश्रं परिलिखेत् । **यदवस्तादिति** । षोडश्याः पुरस्ताद्यथा धनुराकारतया षोडश्या संमितं भवति तथोपदध्यादित्यर्थः । अयमत्र प्रकारः—विंशत्युत्तर (शतं १) षोडश्यात्मकं सार्धसप्तविधस्याग्नेः क्षेत्रं तावत् लक्षमष्टौ सहस्राण्यङ्गुलयः । तत्राप्येकैकस्याः षोडश्याः क्षेत्रं नवशताङ्गुलं (क्षेत्रं)। तत्रैकां षोडशीमपोद्धृत्यावशिष्टाभिरेकोनविंशत्युत्तरशतेष्टकाभिः षोडशीभिश्चतुरश्रं कुर्यात् । नवतिलाधिकसप्तविंशत्यधिकशतत्रयाङ्गुलेन समचतुरश्रं कुर्यादित्यर्थः । अस्य चतुरश्रस्य पुरस्तान्मध्यदेशे निहितां षोडशीमव्यवहिततया योजयेत् । अस्मिन चतुरश्रे "चतुरश्रं परिमण्डलमि"त्यादि (१।४७) न्यायेन परिमण्डलं कुर्यात् । एवं परिमण्डले क्रियमाणे एतत्परिमण्डलगतं षोडशीपश्चिमदेशक्षेत्रं यदवशिष्टं तत् षोडश्याः पुरस्ताद् धनुराकारतया योजयेत् । एवञ्चास्य क्षेत्रस्य सार्धसप्तविधत्वं

सम्पन्नम् । अस्मिन् परिमण्डले यावत्समचतुरश्रं कर्तुं शक्यते तावत् कर्तव्यम् । द्वादशेनेष्टकाः कारयेत् तासां षट् प्रधावुपधाय (३।९१,९२)इत्यादि प्रधियुक्तरथचक्रचयनवत् । तथाहि अस्मिन् परिमण्डले चतुस्तिलोनैकषष्टिशतद्वयाङ्गुलेन चतुरश्रं कर्तव्यम् । तिलषष्ठांशसहितपञ्चविंशतितिलाधिकैकविंशत्यङ्गुलप्रमाणेन समचतुरश्रा इष्टकाः कारयेत् । चतुश्चत्वारिंशदधिकशतेष्टकाभिः परिमण्डलमध्यगते चतुरश्रे उपधानं कुर्यात् । प्रधियुक्तरथचक्रचयनापेक्षया अत्र प्रधिषु विशेषमाह–**प्रधीनामिति** । चतुर्षु प्रधिषु प्रधिमूलोपहितेष्टकानां पार्श्वेषु द्वे द्वे मध्ये तिस्रस्तिस्र इष्टका यथा भवन्ति, यथा चतुर्षु प्रधिषु चतस्रो मध्यमाः प्रक्रमव्यासा भवन्ति, तथा विभजेदित्यर्थ ओष्ठ उपधाय (३।११७) इति वक्ष्यमाणत्वात् । अस्मिन् प्रस्तारे चतुरश्रस्रक्तयः महादिक्ष्विति ज्ञायते परिकर्षणवेलायां मण्डलद्वयप्रतिपादनेनेष्टकाद्वयं व्याख्यातमिति अत्र पृथङ्नोक्तम् । आहत्य द्विन्यूनशतद्वयेष्टकाः सम्पन्ना । अवशिष्टेष्टकाद्वयसम्पत्तिप्रकारमाह—**अर्ध्याभिरिति** । अत्र यद्यपि द्वयोश्चतुरश्रेष्टकयोरर्ध्याभ्यां सङ्ख्या शक्यते पूरयितुमिति बहुवचनानुपपत्तिः । तथापि प्रस्तारद्वयाभिप्रायेण तदुपपत्तिरिति ध्येयम् ॥ ११६ ॥

परिमण्डलकरणे विशेषमाह—षोडशीमिति । अपोद्धृतां षोडशीं चतुरस्रस्य पुरस्तात् विशये उपधाय तया सह मण्डलं परिलिखेत् । तत्र मण्डलकरणे द्वाविंशतितिलसहितचतुरशीतिशताङ्गुलो विष्कम्भार्धः । तेन मण्डलकरणे विशय उपहितषोडशी मध्ये तिलसहितैकविंशत्यङ्गुलप्रमाणे मण्डलं प्रवर्त्तते । यदिति । यन्मण्डलादवस्तात् पश्चात् मण्डलान्तर्भूतं षोडश्यपच्छिन्नं तन्मण्डलाद् बहिर्भूतषोडशीखण्डस्य पुरस्तात् त्रिंशदङ्गुलपार्श्वसङ्गतमुपदध्यात् । एवमुपहिते षोडशी खण्डद्वयात्मिका परिमण्डलाग्रा मण्डलसन्धौ धनुर्वक्रा भवति । प्रधीनामिति । मण्डलमध्ये चतुस्तिलाधिकैकषष्टिशतद्वयाङ्गुलेन समचतुरस्रं कृत्वा तस्य करण्या द्वादशेन इष्टकाः कृत्वा मध्ये चतुश्चत्वारिंशच्छतमिष्टका उपधाय तासां षट् प्रधावुपधाय शेषमष्टधे (३।९२) त्यत्र सप्तधा विभागः । ततः प्रधिमूलमध्ये उपहितानां षण्णां पार्श्वेषु द्वे द्वे मुखेषु तिस्रस्तिस्रः । प्रधीति । द्वितीये प्रस्तारे प्रधिमध्यमामोष्ठ उपधाये (३।११७) ति वक्ष्यमाणत्वात् प्रथमे प्रस्तारे महादिक्षु स्रक्तयः । चतुरश्राणामिति । आत्मनि चतुश्चत्वारिंशच्छतम् । प्रधिमूलेषु चतुर्विंशतिः । ओष्ठे द्वे इष्टके । एवम् द्व्यूनशतद्वयं भवति । तत्र पश्चात् पुरस्तात् चतुरस्रस्रक्तिगतयोश्चतुरस्रयोरक्ष्णया भेदः ॥ ११६ ॥

**अपरस्मिन् प्रस्तारे प्रधिमध्यमामोष्ठ उपधाय यदवस्तात्तद् द्वेधा विभजेत्। स एष नवकरणो द्रोणचित् परिमण्डलः ॥ ११७ ॥**

**अपरस्मिन्निति**। दक्षिणोत्तरयोः प्रधिमध्यमां(नां) पूर्वोक्तां क्रमविस्तारां स्वसन्निहितमण्डलान्तर्गतैकदेशयुक्ते उपधायोपहितेष्टकायाः पश्चाच्चतुरश्राणां पुरस्ताद् यत्क्षेत्रं तद्दक्षिणोत्तरभागेन द्वेधा विभजेत्। एवं करणेन च युक्त (?) मण्डलाकारो द्रोणचितोऽग्निर्निष्पद्यते इत्यर्थः।

अयमत्र प्रकारः—पूर्ववत् परिमण्डलं कृत्वा तस्मिन् यथा महादिक्षु स्रक्तयो भवन्ति तथा चतुरस्रं कुर्यात्। तस्मिन् पूर्ववच्चतुश्चत्वारिंशच्छतेष्टकाभिरुपधानं कुर्यादित्यर्थः। अ (यम) त्र पूर्ववच्चतुर्षु प्रधिषु प्रत्येकमष्टाविष्टका उपदध्यात्। पूर्ववत् त्रीन् परिधीन् (प्रधीन् ?) सप्तधा विभजेत्। पूर्वस्मिन् प्रधौ तु विशेषोऽस्ति। इष्टकाचयसंमिते ओष्ठे धनुराकारक्षेत्रे प्रधिमध्यमामेकां बृहतीमात्मनिवेशितामुपदध्यात्। अस्याः पश्चात् प्रधिगतानामिष्टकानां पुरस्ताद् ओष्ठक्षेत्रसंमितं यदस्ति तद्दक्षिणोत्तरभागेन द्वेधा विभजेत्। अस्या दक्षिणत उत्तरतश्च द्वे तयोर्दक्षिणत उत्तरतश्च द्वे द्वे। एवं च द्विन्यूनद्विशतेष्टकाः सम्पन्नाः। तत्र द्विशतसंख्यापूरणार्थं द्वयोश्चतुरश्रयोर्द्वाभ्यां द्विशतसङ्ख्यां पूरयेत्। द्वितीयप्रस्तार इति प्रथमप्रस्तार एवोक्तं सूत्रकारेणेत्यस्माभिर्वर्णितं अत्रैव। **स एष** इति। नव करणानि आत्मगतानां चतुरश्राणां प्रधिगतानां चतुरश्राणां (च ?) एकं करणं। शिरसीष्टकाद्वयस्य करणद्वयं। प्रधिमध्यगतानां प्रक्रमविस्ताराणां चतसृणामेकं करणम्। तत्पार्श्वोपधेयानामेकं करणम्। प्रध्युपान्त्यानामेकं करणम्। प्रध्यन्त्यानामेकं करणम्, अर्ध्यानामेकं करणम्। आहृत्य प्रथमे प्रस्तारेऽष्टौ करणानि। द्वितीयप्रस्तारे ओष्ठोपहितेष्टकापश्चिमक्षेत्रोपहितेष्टका तस्या एकं करणम्। एवं नव करणानीति। सर्वतः षड्विंशतितिलसहितैकविंशत्यङ्गुलप्रमाणफलकं चतुरश्रेष्टकानामेकं करणम् ॥ ११७ ॥

अपरस्मिन्निति। विधिर्वक्ष्यते। ओष्ठस्य प्रक्रमविस्तारत्वात् तया पूर्यते। प्रधिमध्यमायाः प्रक्रमादधिकं तिलोनाङ्गुलित्रयं मण्डले प्रविशति। तस्मादोष्ठसन्धौ

भेदाभावः । यदवस्ताद् (तद् ?)द्वेधा विभजेत् । प्रधिमध्यमायाः पश्चात् चतुरस्राणां पुरस्तात् यत् क्षेत्रं प्रक्रमपरिमितं तद् द्वेधा अविशेषात् समं विभजेत् ।

अत्रापि चतुरस्राः चतुश्चत्वारिंशच्छतम् । प्रधिमूलेषु चतुर्विंशतिः । प्रधिषु अष्टाविंशति । ओष्ठे एका । तामभितः पश्चाद् द्वेधा भेदेन संगता एका । एवं द्व्यूनशतद्वयम् । दक्षिणोत्तरस्रक्तिगतयोः चतुरस्रेष्टकयोः पूर्ववद् भेदः । एवं द्विशतसम्पत्तिः ।

अयमत्र प्रकारः । अग्निक्षेत्रमध्ये शङ्कुं निहत्य द्वाविंशतितिलसहितचतुरशीतिशताङ्गुलया रज्ज्वा मण्डलं परिलिख्य मण्डलमध्यशङ्कोः पुरस्तात् त्रिंशदङ्गुले विंशतितिलोनचतुरशीतिशताङ्गुले शङ्कू निहत्य द्वयोः पौरस्त्यशङ्क्वोः पुरस्तात् प्रक्रमप्रमाणं चतुरस्रं ओष्ठार्थं विहृत्य नाभेः पौरस्त्यमध्यमे शङ्कौ पाशं नियम्य विष्कम्भार्धेन ओष्ठचतुरस्रस्य उत्तरांसमारभ्य आ दक्षिणांसात् परिलिखेत् ।

मण्डलमध्ये चतुस्तिलोनैकषष्टिशतद्वयाङ्गुलप्रमाणेन महादिक्षु यथा स्रक्तयस्तथा चतुरस्रं कृत्वा तस्य करण्या द्वादशेन षड्विंशतितिलसहितेनैकविंशत्यङ्गुलेन प्रमाणेनेष्टकाः कुर्यात् । प्रधीष्टकानां चत्वारि करणानि । आद्यं प्रध्यन्तं त्रिकोणम् । तस्य मण्डलमध्यचतुरस्रसंहितं पार्श्वं द्वादशतिलोनं त्रयस्त्रिंशदङ्गुलम् । षड्विंशत्यङ्गुलं अन्यत्पार्श्वम् । सपञ्चविंशतितिलमेकचत्वारिंशदङ्गुलं तृतीयं कर्णरूपं धनुरिव तक्षेत् । षट्तिलयुक्ताङ्गुलिः शरः । द्वितीयस्यापि पार्श्वद्वयं पूर्ववदेव । द्विचत्वारिंशदङ्गुलं साष्टतिलं तृतीयम् । षट्त्रिंशत् सषोडशतिलं पार्श्वान्तरं कर्णरूपं धनुरिव तक्षेत् । त्रिंशत्तिलाः शरः । तृतीयस्य प्रधिसंगतं पार्श्वं सदशतिलं पञ्चाशदङ्गुलम् । सार्धविंशत्यङ्गुलमेकं पार्श्वम् । सपञ्चविंशतितिलमेकत्रिंशदङ्गुलं पार्श्वान्तरम् । अष्टादशतिलमेकपञ्चाशदङ्गुलं चतुर्थं कर्णरूपं धनुरिव तक्षेत् । सप्ततिलोनमङ्गुलिद्वयं शरः । प्रधिमध्यमाया व्यासो द्वात्रिंशदङ्गुलम् । सपञ्चविंशतितिलमेकत्रिंशदङ्गुलं पार्श्वद्वयम् । बाह्यफलकं धनुराकारम् । द्विचत्वारिंशत्तिलाः शरः ।

ओष्ठेष्टकयोः प्रथमप्रस्तारार्थं करणद्वयम् । तयोः प्रथमस्य तिलहीननवाङ्गुलं पार्श्वद्वयम् । त्रिंशदङ्गुलमितरत् पार्श्वद्वयम् । तयोः पश्चिमफलकं अन्तर्वक्रम् । द्विचत्वारिंशत्तिलाः शरः । यथैवमिष्टकारूपं सौष्ठमण्डलसन्धौ उपधेया ( ? ) । ओष्ठेष्टकयोर्द्वितीयस्याः सैकतिलमेकविंशत्यङ्गुलं पार्श्वद्वयम् । इतरद्द्वयं त्रिंशदङ्गुलम् । तस्य बाह्यफलकं धनुरिव तक्षेत् । द्विचत्वारिंशत्तिलाः शरः । यथैवमिष्टकारूपं सौष्ठाग्नं उपधेया ।

द्वितीयप्रस्तारे प्रधिमध्यमस्थानेष्टकयोः एकैकं करणम् । त्रिंशदङ्गुलं पार्श्वद्वयम् । पञ्चदशाङ्गुलं पार्श्वद्वयम् । ते ओष्ठे उपहितप्रधिमध्यमायाः पश्चादुपधेये । संख्यापूरणार्थमक्ष्णया भेदेन चतुरस्रार्धेष्टकार्थमेकं करणम् । तस्या द्वे पार्श्वे चतुरस्रवत् पञ्चदशतिलं त्रिंशदङ्गुलम् । तृतीयं कर्णरूपम् । एवं नव करणानि ।

प्रथमे प्रस्तारे चतुरस्रगताः चतुश्चत्वारिंशच्छतम्। प्रधिमूलगताः चतुर्विंशतिः। प्रधिगता अष्टाविंशतिः। ओष्ठार्थकयोरिष्टकयोः ह्रस्वेष्टकां मण्डलसन्धावुपदध्यात्। बृहतीं तस्याः पुरस्तात्। पश्चात् पुरस्ताच्च चतुरस्रस्रक्तिगते उद्धृत्य द्वे द्वे अर्धेष्टके। एवं द्विशत प्रस्तारः।

द्वितीयेऽपि प्रस्तारे पूर्ववत् प्रधिवर्जमेव उपधानम्। अत्र अवान्तरदिक्षु स्रक्तयः। पूर्वस्मिन् प्रधौ मध्यमामुद्धृत्य ओष्ठे प्राग् धनुर्वक्रामुपदध्यात्। तस्याः पश्चात् प्रधिमध्यमस्थाने द्वितीयप्रस्तारार्थकरणेष्टके उपधेये। मण्डलमध्यचतुरस्रस्रक्त्योर्दक्षिणत उत्तरतश्च द्वे चतुरस्रे उद्धृत्य द्वे द्वे अर्धेष्टके। एवमपरः प्रस्तारः। स एष इति। स्पष्टार्थं वचनम्। कूर्मस्यान्ते तनुपुरीषमुपदध्यात्, मध्ये बहुलं, एतदेव द्रोणे विपरीत ( ३।१४१ ) मिति वक्ष्यमाणं स्मर्त्तव्यम्।

अत्र कल्पोक्तो विधिरनुसन्धेयः। तत्रैवमुक्तम्। द्रोणचितं चिन्वीत अन्नकाम इत्येतस्यैव सतो त्रिमात्रेण प्रागोष्ठमिव निरूहति। अथ मध्ये निम्नमिवेष्टकाया आयातयति। स एष द्रोणचिदन्नकामस्य परिकृष्यते ( बौ० श्रौ० सू० १७।२९ पृ० ३०८ ) इति ॥ ११७ ॥

[ इति परिमण्डलद्रोणचित्युपधानप्रकारः। ]

**समूह्यपरिचाय्यौ पूर्वेण रथचक्रचिता व्याख्यातौ ॥ ११८ ॥**

परिमण्डलद्रोणचयनप्रकारमुक्त्वा समुह्यपरिचाय्यचयनप्रकारमाह—**समुह्यपरिचाय्याविति**। समुह्ये परिचाय्ये च प्रधियुक्तरथचक्रचयनधर्माः परिमण्डलकरणधर्माः चतुरश्रकरणेष्टकानिर्माणोपधानादयः सर्वेऽपि प्राप्नुवन्तीत्यर्थः ॥ ११८ ॥

समूह्येति। यावानग्नि ( ३।९१ ) रित्यादि परिमण्डलान्तं कुर्यात् ॥ ११८ ॥

**समूह्यस्य दिक्षु चात्वालान् खानयित्वा तेभ्यः पुरीषं समूह्योपदध्यात् ॥ ११९ ॥**

ननूक्तरीत्या समूह्ये सर्वधर्मप्राप्तौ को विशेषस्तमाह—**समूह्यस्येति**। समूह्यस्य वाग्नेर्महादिक्षु चात्वालान् खानयित्वा तेषु च नामातिदेशतः सर्वधर्मान् (?) चात्वालेभ्यः पुरीषं समूह्य गृहीत्वा अग्निक्षेत्रे मन्त्रैः क्रमाद् यथा पञ्चप्रस्तारा भवन्ति तथोपदध्यादित्यर्थः।

अयमत्र प्रकारः—प्रधियुक्तरथचक्रचयनवत् सार्धसप्तपुरुषप्रमाणं चतुरश्रं विहृत्य "चतुरश्रं परिमण्डल" (१।४७) मिति न्यायेन परिमण्डलं कर्त्तव्यम्। तस्मिन् परिमण्डलमध्ये यावत्समचतुरश्रं कर्तुं शक्यते तावत्

कृत्वा तस्योत्तरतः यथास्थाने चात्वालं कृत्वा दक्षिणतः एकं तथा यूपस्य पुरस्तादेकं शालामुखीयवेद्योर्मध्ये एकम् एषु चात्वालेषु लोकाग्न्याहरणादीनां धर्माणां नामातिदेशतः कर्त्तव्यत्वम् । एभ्यश्चात्वालेभ्यः पुरीषं गृहीत्वा तैः पुरीषैरग्निक्षेत्रे सर्वतः प्रचिनुयात् । एतदुपरि प्रधियुक्तरथचक्रचयनवत् सर्वा इष्टका लिखित्वा आसु लिखितासु इष्टकासु मन्त्रोपधानं कर्तव्यम् ।

अपरस्मिन् प्रस्तारे पुनरपि पुरोषैरग्निक्षेत्रे सर्वतः परिचिनुयात् । अस्मिन् मण्डले यथा स्रक्तय अवान्तरदिक्षु भवन्ति तथा चतुरश्रं कृत्वा तस्मिन् पूर्ववदिष्टका लेखनीयाः । अवान्तरदिक्षु विद्यमानेषु प्रधिषु अपीष्टका लेखनोयाः । आस्विष्टकासु मन्त्रैरुपधानं कर्त्तव्यम् । एवं क्रमेण पुरीषैर्जानुदघ्नं यथा भवति तथा पञ्चप्रस्ताराः कर्त्तव्याः ॥ ११९ ॥

समूह्यस्य विशेषः । नान्या सर्वचात्वालेषु धर्मप्राप्तिः । शालामुखीयमहावेद्योरन्तरा पश्चिमचात्वालः । एवं चात्वालेभ्यः पुरीषं समूह्य गृहीत्वा इष्टकास्थानेषु उपदध्यात् । यावत् सम्भवेत् तावत् चतुरस्रमित्यादि (३।९१) शुष्केष्टकान्यायेन अग्निक्षेत्रे तत्रैवोपधेया । इष्टकाः सर्वा लिखित्वा उपधानकाले तैस्तैर्मन्त्रैस्तेषु तेषु स्थानेषु पुरीषमुपदध्यात् ।

अपरस्मिन् प्रस्तारे प्रध्यनीकेष्वि ( ३।९२ ) त्यादि तुल्यम् । जानुदघ्नं पञ्चचितीकमिति च ।

तत्र कल्पोक्तो विधिरप्यनुसन्धातव्यः । तत्रैवमुक्तम् । समूह्यं चिन्वीत पशुकाम इति विज्ञायते । पुष्करपर्णं कूर्मं हिरण्मयं पुरुषं स्रुचावित्येतल्लक्ष्माणीत्याचक्षते । कुरुत एवैतदपो पुरीष्यस्येष्टका आयातयति । आ स्वयमातृण्णायाः । अथाभितः स्वयमातृण्णा इष्टकाः परिचिनोति स एष समूह्यः पशुकामस्य परिकृष्यत इति ( बौ० श्रौ० सू० १७।२९ पृः ३०८ ) पुष्करपर्णादीनामुपधानस्थानेषु तत्तद्रूपेण चिह्नानि कुर्यादित्यर्थः ॥ ११९ ॥

## परिचाय्य इष्टकानां देशभेदः ॥ १२० ॥

समूह्यपरिचाय्यौ प्रधियुक्तरथचक्रचयनवत् कर्त्तव्यावित्युक्त्या सर्वधर्माणामुभयत्रापि प्राप्तौ समूह्येषु पुरीषैरुपधानविधानादिष्टकोपधानबाधः । परिचाय्ये तु तथा विशेषविधानाभावात् तथैवेष्टकोपधाने प्राप्ते

देशादिभेदमाह—**परिचाय्येति** । परिचाय्यचयने इष्टकानां देशभेदः देशभेदेनोपधानमित्यर्थः ॥ १२० ॥

परिचाय्य इति । इष्टकानां स्थानभेदो न रथचक्रचिद्वत् । तस्मिन् यावत् सम्भवेद् ( ३।९१ ) इत्यादि कर्त्तव्यमित्यर्थः ॥ १२० ॥

**तं सर्वाभिः प्रदक्षिणं परिचिनुयात् ॥ १२१ ॥**

अमुमर्थं स्वयमेव विवृणोति—**तं सर्वाभिरिति** । तं सार्धसप्तपुरुष-प्रमाणमण्डलरूपमग्निं सर्वाभिर्द्विशतेष्टकाभिः प्रदक्षिणं यथा भवति तथा परिचिनुयादुपधानं कुर्यादित्यर्थः । अपरस्मिन् प्रस्तारे यथा सन्धिपिधानं भवति तथैव परिचिनुयात् । एवं क्रमेण पञ्चप्रस्ताराः कर्त्तव्याः ॥ १२१ ॥

देशभेदं स्वयमेवाह—तमिति । तं अग्निम् । सर्वाभिरिष्टकाभिः । प्रदक्षिणं सर्वतः चिनुयात् ।

छन्दश्चिदध्यायेऽप्युक्तम् । परिचाय्यचितं चिन्वीत ग्रामकाम इति । अनुशर्करमन्तःशर्करमिष्टकाः परिचिनोति । अथान्तरतोऽथान्तरत एवमेव करोति । स एष परिचाय्यो ग्रामकामस्य परिकृष्यत इति ( बौ० श्रौ० सू० १७।२६ पृ० ३०८ ) । तत्र अनुशर्करमिति सावित्राग्निवत् परिमण्डलाकारं अग्निक्षेत्रं विहृत्योपदध्यादित्यर्थः । परिकृष्यत इति । द्वादशसीताः परिमण्डलाः कर्षणीया इत्यर्थः ।

अयमत्र प्रकारः । अग्निक्षेत्रे समान्तरालानि षण्मण्डलानि कृत्वा नाभिमष्टधा विभजेत् । नाभिमण्डलादारभ्य द्वितीयतृतीयमण्डले प्रत्येकं षोडशधा विभजेत् । चतुर्थं द्वात्रिंशधा विभजेत् । पञ्चमषष्ठमण्डले प्रत्येकं चतुःषष्टिमिष्टकाः कुर्यात् । एवं द्विशतपूर्त्तिः । प्रतिमण्डलं करणभेदः । एवं षट् करणानि ।

अपरस्मिन् प्रस्तारे पूर्वोक्तमण्डलमध्येषु मध्यवर्जितेषु परिलिखेत् । एवं अत्रापि षण्मण्डलानि संपद्यन्ते । पूर्वप्रस्तारवदेव यथा भेदो न भवति तथा विभागः । मध्यममष्टधा पूर्वलेखान्तरालेषु विभजेत् । द्वितीयतृतीयमण्डले षोडशके । द्वात्रिंशकं चतुर्थम् । पञ्चमषष्ठे चतुःषष्टिद्वयम् । सर्वत्र भेदपरिहारेण लेखनीयाः । एवं द्विशतः प्रस्तारः । अत्रापि षट् करणानि । स एष द्वादशकरणः परिमण्डलः परिचाय्यचित् ॥ १२१ ॥

**स एष द्वादशकरणः परिमण्डलः परिचाय्यचिदिति ॥१२२॥**

**स एष** इति । अयं परिचाय्यचिद् द्वादशकरण इत्युक्त इत्यर्थः । प्रधि-युक्तरथचक्रचयनवदिदं कर्तव्यमित्युक्तत्वाद् अग्नेर्मण्डलाकारत्वं सिद्धमिति

परितो मण्डलानि यस्येति व्युत्पत्त्या मण्डलान्तराणि कर्तव्यानीति सूचयति। तानि च द्वादशकरणानि इत्युक्त्या प्रतिप्रस्तारं षण्मण्डलानि इति विज्ञायते।

अयमत्र प्रकारः—सार्धसप्तपुरुषप्रमाणं चतुरश्रं विहृत्य तत्र "चतुरश्रं परिमण्डल"(१।४७)मिति न्यायेन परिमण्डलं कृत्वा तस्मिन् परिमण्डले षट् परिमण्डलानि कृत्वा मध्यपरिमण्डलमष्टधा विभजेत्। द्वितीयञ्च तृतीयञ्च प्रत्येकं षोडशधा विभजेत्। चतुर्थं द्वात्रिंशद्धा विभजेत्। पञ्चमं षष्ठञ्च प्रत्येकं चतुःषष्टिधा विभजेत्। आहत्य द्विशतेष्टकाः। अस्मिन् प्रस्तारे एकमेकं करणम्। आहत्य षट् करणानि। अपरस्मिन् प्रस्तारे मध्यमध्येषु षण्मण्डलानि कृत्वा पूर्ववद्विभजेत्॥ १२२॥

१२२ संख्यकं सूत्रं द्वारकानाथेन न पठितम्।

[ इति समूह्यपरिचाय्यचितोरुपधानप्रकारः। ]

**श्मशानचितं चिन्वीतेति विज्ञायते॥ १२३॥**

समूह्यपरिचाय्यचयनप्रकारमुक्त्वा श्मशानचयनप्रकारमाह— **श्मशानचितमिति**॥ १२३॥

**सर्वमग्निं चतुरश्रान् पञ्चदशभागान् कृत्वा तेषामाख्यातमुपधानम्॥ १२४॥**

**सर्वमग्निमिति**। सार्धसप्तविधपुरुषप्रमाणं चतुरश्रान् समानपञ्चदशभागान् कुर्यादित्यर्थः। सार्धसप्तविधपुरुषप्रमाणं क्षेत्रं तावल्लक्षमष्टौसहस्राण्यङ्गुलयः। एकैकस्य पञ्चदशभागस्य क्षेत्रं सप्तसहस्राणि द्वे शते अङ्गुलयः। एवंभूतैः पञ्चदशभागैः अग्निक्षेत्रं कुर्यादिति यावत्। नन्वेतत्सूत्रानुसारेण क्षेत्रनिर्माणं कथं स्यादित्याशङ्क्याह—**तेषामिति**। तेषां पञ्चदशधा विभक्तानां भागानामेकतोऽणिमद्दीर्घचतुरश्राकारतयोपधानं क्षेत्रनिर्माणमाख्यातमुक्तमित्यर्थः।

तदुक्तं कल्पसूत्रे—श्मशानचितं चिन्वीत यः कामयेत पितृलोकमा-

प्नुयामिति । षट् प्राञ्चः पुरुषास्त्रयः पुरस्तात्तिर्यञ्चौ द्वौ पश्चात्तिर्यञ्चौ स आत्मेति । अस्यायमर्थः—पुरुषशब्देन पञ्चदशभागा एवोच्यन्ते, षट् पञ्चदशभागायामं प्राक् प्रत्यग् भागत्रयव्यासं पुरस्ताद्, भागद्वयव्यासं पश्चादेकतोऽणिमद्दीर्घचतुरश्रं कुर्यात् । स इदृग्रूपविशिष्टः आत्मेत्यर्थः ॥ १२४ ॥

सर्वमग्निमिति । सर्वमग्निक्षेत्रं पञ्चदशधा विभज्य समचतुरस्रान् कृत्वा । किम् ? कल्पे छन्दश्चिदध्याये तेषां चतुरस्रीकृतानां पञ्चदशधा विभक्तानां भागानां उपधानविनियोगः तैः क्षेत्रक्रिययेत्यर्थः । आख्यातमुक्तम् । तत् तत्रैवानुसन्धेयम् इत्यर्थः ।

श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति ( बौ० श्रौ० सू० १७।३० पृ० ३०९ षट् प्राञ्चः पुरुषास्त्रयः पुरस्तात् तिर्यञ्चौ तौ (?) द्वौ । स आत्मेति ।

तत्र पुरुषशब्देन पञ्चदशधा विभक्ता भागा एवोच्यन्ते । अस्यायमर्थः । अग्निक्षेत्रं सर्वं लक्षमष्टौसहस्राण्यङ्गुलयः । ताः पञ्चदशधा विभज्य लब्धं सप्तसहस्राणि द्वे शते चाङ्गुलयः । तस्य भागस्य समचतुरस्रकरणी षट्तिलोनपञ्चाशीत्यङ्गुला । एवं पुरुषशब्दितैर्भागैः षट् प्राञ्चः पुरुषाः । षड्भागप्रमाणायामा इत्यर्थः । स च षट्त्रिंशतितिलोनदशाधिकपञ्चशताङ्गुलयः । त्रयः पुरस्तात् पार्श्वे तिर्यञ्चो दक्षिणोत्तराः । सार्धपञ्चाशच्छतद्वयाङ्गुलयः पुरस्तात् तिर्यगित्यर्थः । द्वौ पश्चात् तिर्यञ्चौ द्वादशतिलोनसप्ततिशताङ्गुलयः पश्चात् तिर्यगित्यर्थः । स आत्मा ! ईदृग् विशिष्टरूप आत्मा । नान्यदङ्गमस्तीत्यर्थः । एवं कल्पोक्तप्रकारेण क्षेत्रकरणमुक्तम् ॥ १२३-१२४ ॥

**त्रिभिर्भागैर्भागार्धव्यासं दीर्घचतुरस्रं विहृत्य पूर्वस्याः करण्या मध्याच्छ्रोणी प्रत्यालिख्यान्ताबुद्धरेत् । तस्य दशधा विभागः । तानि विंशतिः सर्वोऽग्निः संपद्यते ॥ १२५ ॥**

क्षेत्रकरणमुक्त्वा इष्टकाकरणमाह—**त्रिभिर्भागैरिति** । भागत्रयायामं एकतिलोनसार्धचतुःपञ्चाशच्छतद्वयाङ्गुलायामं भागार्धव्यासं चतुर्दशतिलाधिकद्विचत्वारिंशदङ्गुलव्यासम्, एवं दीर्घचतुरश्रं विहृत्य पूर्वस्याः करण्यास्तिर्यङ्मान्या मध्यदेशादारभ्य द्वे श्रोणी प्रत्यालिख्यान्तावुद्धरेत् । बहिःस्पन्द्यमपच्छिन्द्यात् । एवञ्च प्रउगःसंपद्यते । **तस्य दशधेति** । तस्य प्रउगस्य दशधा विभागः प्रकारः । अस्मिन् प्रउगे चुबुके एकमुभयतः प्रउगम्, ततो द्वे उभयतः प्रउगे तत्संयुक्ते, ततस्त्रीणि उभयतः प्रउगाणि,

पृथ्वनीके चत्वारि प्रउगाणि, षडुभयतःप्रउगाणि आहृत्य दश संपद्यन्ते। तानि विंशतिरिति। हंसमुखीश्चतस्रश्चतसृभिः पादेष्टकाभिः संयोजयेत्त-त्तिर्यक् स्वयमातृण्णावकाश उपदध्यादितीति (?)। तानि दशधा विभक्तानि प्रउगाण्यङ्गक्षेत्रे विंशतिः संपद्यन्ते। एवञ्च द्विशतेष्टकाः संपन्नाः। उभयतः प्रउगाकारेष्टका विंशतिशतं, प्रउगेष्टका अशीतिः। तत्र प्रउगेष्टकाप्रमाणं सार्धविंशतितिलाधिकदशाङ्गुलं पृथ्वनीकमुभयपार्श्वे सार्धविंशतितिलाधिक-त्रिषष्ट्यङ्गुले। ते द्वे पृथ्वनीकदेशाभ्यां सङ्गते उभयतः प्रउगम्।

अत्रैवमुपधानप्रकारः। पूर्वस्मिन्ननीके चतुर्विंशतिः प्रउगेष्टकाः प्रत्यगग्राः, ततः पश्चादुभयतःप्रउगास्त्रयोविंशतिः, ततः पश्चाद् द्वाविंशतिः, तत एकविंशतिः, ततः पश्चात् प्रागग्रा विंशतिः प्रउगाः, ततः पश्चात् प्रत्यगग्रा विंशतिः प्रउगाः, ततः पश्चात् उभयतःप्रउगा एकोनविंशतिः, ततः पश्चात् अष्टादश, ततः सप्तदश, ततोऽपरस्मिन् अनीके प्रत्यगग्राः षोडश प्रउगाकाराः। एवमुदीच्यो दश रीतयः। एवं द्विशतः प्रस्तारः ॥१२५॥

इदानीं इष्टकोपधानविधिरुच्यते—त्रिभिर्भागैरिति। त्रिभिर्भागैरायामभूतैः। भागार्धव्यासं सार्धचतुःपञ्चाशच्छतद्वयाङ्गुलायामं सचतुर्दशतिलद्विचत्वारिंशदङ्गुल-व्यासम् दीर्घचतुरस्रं विहृत्य पूर्वस्यास्तिर्यङ्मान्या मध्यादारभ्य श्रोणी प्रत्यालिख्य प्रउगाकारं कृत्वा अन्तावुद्धरेत्। तस्येति। कर्त्तव्य इति शेषः। तस्य प्रउगस्य। प्रउगा-कारा उभयतःप्रउगाकारा इष्टका यथा भवन्ति तथा दशधा विभागः। अन्यथा-विभागे करणबहुत्वं स्यात्।

तत्रैवं विभागः। प्रउगपृथ्वनीके समान्तराणि त्रीणि चिह्नानि कृत्वा चतुरो विभागान् कृत्वा प्रउगपार्श्वयोरपि तथा कृत्वा पृथ्वनीकप्रथमचिह्नादारभ्य इतरपार्श्व-प्रथमचिह्नं प्रत्यालिखेत्। एवं द्वितीयचिह्नादारभ्य पार्श्वद्वितीयम्। एवं तृतीयचिह्नादा-रभ्य तथा तृतीयम्। तथा तृतीयचिह्नादारभ्य इतरपार्श्वप्रथमचिह्नं प्रत्यालिखेत्। एवमितरयोः। एवं विभक्ते पृथ्वनीकस्थाः प्रउगाकाराश्चतस्र इष्टकाः। ततः तिस्र उभयतःप्रउगाकृतयः। ततो द्वे। तत एका चुबुकान्ता। एवं षड् उभयतःप्रउगाः। चतस्रः प्रउगाः। एवं दशेष्टका एकस्मिन् प्रउगे भवन्ति।

हंसमुखीश्चतस्रश्चतसृभिः पादेष्टकाभिः संयोजयेत्। तत् तिर्यक् स्वयमातृण्णा-वकाशे उपदध्यादिति। तथा बहिर्दशेष्टकं प्रउगमापाद्य अग्निक्षेत्रे उपहितानि विंशतिः

प्रउगाणि सर्वोऽग्निः संगृह्णीयादिति। अत्र आत्मनि मध्ये दक्षिणोत्तरां लेखामालिख्य पूर्वार्धे प्रत्यगग्राणि षट् प्रागग्राणि पञ्च। पश्चिमार्धे प्रत्यगग्राणि पञ्च प्रागग्राणि चत्वारि एवं विंशतिः। एवं शतद्वयसम्पत्तिः।

अयमत्र प्रकारः। अग्निक्षेत्रं तिलद्वयोननवपञ्चशताङ्गुलायामं सार्धचतुःपञ्चाशच्छतद्वयाङ्गुलं पुरस्ताद् व्यासं द्वादशतिलोनसप्ततिशताङ्गुलपश्चिमतिर्यङ्मानीक एकतोऽणिमद्दीर्घचतुरस्रं विहृत्य इष्टकाः कुर्यात्। तत्र द्वे करणे प्रउगमुभयतः प्रउगमिति। प्रउगस्य पृष्ठ्यनीकं दशाङ्गुलं सार्धविंशतितिलम्। उभे पार्श्वे सार्धविंशतितिले त्रिषष्ट्यङ्गुले। ते द्वे पृष्ठ्यनीकप्रदेशाभ्यां सङ्गते उभयतः प्रउगम्।

प्रथमेन करणेन अशीतिरिष्टकाः। द्वितीयेन विंशशतम्। उपधाने पूर्वस्मिन् अनीके चतुर्विंशतिः प्रउगेष्टकाः प्रत्यगग्राः। ततः पश्चाद् उभयतःप्रउगाः त्रयोविंशतिः। ततः पश्चाद् द्वाविंशतिः। तत एकविंशतिः। ततः पश्चात् प्रागग्रा विंशतिः प्रउगाः। ततः पश्चाच्च विंशतिः प्रत्यगग्राः। ततः उभयतःप्रउगा एकोनविंशतिः। ततः पश्चादष्टादश। ततः सप्तदश। ततः अपरस्मिन् अनीके प्रागग्राः षोडश प्रउगाः। एवं उदीच्यो दश रीतयः। एष द्विशतः प्रस्तारः॥ १२५॥

**अपरस्मिन् प्रस्तारे प्रउगं मध्येऽनूचीनं विभजेत्। तस्य षड्धा विभागः। ते द्वे पार्श्वयोरुपदध्यात्। भागतृतीयायामाश्चतुर्थव्यासाः कारयेत्। तासामर्ध्यास्तिर्यग्भेदाः। ता अन्तयोरुपधाय शेषमग्निं बृहतीभिः प्राचीभिः प्रच्छादयेत्। अर्धेष्टकाभिः सङ्ख्यां पूरयेत्॥ १२६॥**

**अपरस्मिन् प्रस्तार इति**। अग्निक्षेत्रे प्रागग्रे द्वे प्रउगे प्रत्यगग्राणि त्रीणि प्रउगाणि। एवं पञ्च समानि कृत्वा तत्रैकं प्रत्यगग्रं प्रउगं मध्येऽनूचीनं प्राक्प्रत्यग्दीर्घं यथा भवति तथा द्वेधा विभजेत्। अयमर्थः—पञ्चानां प्रउगाणां मध्ये एकस्य प्रउगस्य पृष्ठ्यनीकमध्यादारभ्य प्रउगाग्रपर्यन्तमार्जवेन लिखेदिति। **तस्येति**। तस्य दलद्वयात्मकस्य द्वेधा विभक्तस्य एकस्य प्रउगस्य षड्धा षोढा विभागः प्रत्येकं कर्त्तव्यः। विभागप्रकारः। अत्राप्यनूचीनमित्यस्यानुवर्तमानत्वाद् द्वयोः खण्डयोः पृष्ठ्यनीकमध्यादारभ्य खण्डद्वयाग्रपर्यन्तं पूर्ववदार्जवम्।

अयमत्र विभागप्रकारः—एकस्मिन् खण्डेऽर्धप्रउगे पृष्ठ्यनीके समान्तराले द्वे चिह्ने कृत्वा पश्चादर्धप्रउगं समं तिर्यक् त्रेधा विभजेत्। तत्र

प्रथमे पृष्ठ्वनीकपार्श्वखण्डे पूर्वकृतचिह्नाभ्यामारभ्यार्जवेनापरतिर्यङ्मान्या सह त्रेधा लिखेत्। एवञ्चास्मिन् खण्डे दक्षिणपार्श्वे एका अर्ध्यप्रउगाकारेष्टका तत उत्तरपार्श्वे प्राक्प्रत्यग्दीर्घे चतुरश्रेष्टके मध्यखण्डे दक्षिणे एका अर्ध-प्रउगेष्टका पार्श्वे एका दीर्घचतुरश्रेष्टका तृतीयखण्डे चुबुकप्रदेशे एका अर्धप्रउगाकारेष्टका आहत्यास्मिन् खण्डे षट्, एव मुत्तरखण्डेऽपि षडिष्टकाः कुर्यादिति ।

यद्यपि सूत्रे पञ्च प्रउगाणि कृत्वा तेष्वेकामनूचीनां द्वेधा विभज्य तयोरुपधानमिति न प्रतीयते तथापि प्रउगखण्डयोः पार्श्वयोरुपधान मुक्त्वा मध्यक्षेत्रे चतुरश्रस्य वृहतीभिर्दीर्घचतुरश्राभिस्तदर्धाभिश्चोपधान-विधानाद् दीर्घचतुरश्रत्वं गम्यते । तच्च पञ्च प्रउगकरणे उपपद्यते, नान्य-थेति । **ते द्व इति**। ते षडिष्टकाः। ते द्वे खण्डे प्रत्यगग्रे पार्श्वयोः दक्षिणोत्तर-पार्श्वयोरुपदध्यादित्यर्थः । एवञ्च भागद्वयव्यासं षड्भागायामं दीर्घचतुरश्रं-मध्ये संपद्यते । तत्रोपधानार्थमिष्टकाकरणमाह—**भागतृतीयायामा इति** । भागतृतीयायामाः तिलतृतीयांशसहिताष्टाविंशत्यङ्गुलायामाः, चतुर्थव्यासाः सप्ततिलाधिकैकविंशत्यङ्गुलव्यासाः दीर्घचतुरश्रा इष्टकाः कारयेत् । **तासामिति** । तासां बृहतीनामर्ध्यास्तिर्यग्भेदाः आसामर्धे भिन्नाः सप्ततिलाधिकैकविंशत्यङ्गुलदीर्घाः । (सार्धचतुस्तिलदीर्घाः सार्धचतु-स्तिलचतुर्दशाङ्गुलदीर्घाः) सार्धचतुस्तिलचतुर्दशाङ्गुलव्यासाः अर्धेष्टकाः कार्या इत्यर्थः । **ता अन्तयोरिति** । ता अर्धेष्टकाः अन्तयोः पूर्वापराग्र-प्रदेशयोः दक्षिणोत्तरदीर्घा अष्टावष्टावुपधाय शेषमग्निं बृहतीभिः प्रच्छाद-येत् । उपहितेष्टकानां मध्ये क्षेत्रं षट्त्रिंशच्छतेष्टकाभिः प्रागायताभिः प्रच्छादयेदित्यर्थः । आहत्य चतुःषष्टिशतेष्टकाः सम्पन्नाः । तत्र द्विशतसंख्या-पूरणार्थमाह—**अर्धेष्टकाभिरिति** । श्रोण्यंसेषु नव नव बृहतीश्चतुरश्रकृता उद्धृत्याष्टादशाष्टादशार्ध्या उपदध्यात् । एष द्विशतः प्रस्तारः ॥१२६॥

अपरस्मिन्निति । विधिर्वक्ष्यते । अग्निक्षेत्रे भागप्रमाणव्यासानि षड्भागप्रमा-णायतानि पञ्च महाप्रउगाणि शेरते । तत्र प्रत्यगग्राणि त्रीणि । प्रागग्रे द्वे । तेषां महा-प्रउगाणां प्रउगद्वयमिह विवक्षितम् । अनूचीनमिति प्रउगविशेषणम् । षड्भागायत-

मित्यर्थः। दक्षिणतः प्रत्यगग्रस्थितप्रउगमध्ये भागप्रमाणपृथ्वनीकमध्याद् आरभ्य आपश्चिमसूक्ष्माग्राद् आलिखेत्। एवं उत्तरस्मिन्नपि पार्श्वे स्थितं विभजेत्। ते द्वे पार्श्वयोरुपधायेति वक्ष्यमाणत्वात्। प्रउगमिति च तस्येति च जात्येकवचनम्। तस्येति। तस्य प्रउगावयवस्य। षड्धा षोढ़ा। अनूचीनं विभागः कार्यः।

तत्र प्रकारः। प्रत्यगग्रं षड्भागायतं महाप्रउगार्धं तिर्यक् त्रिधा विभजेत्। तत्र पूर्वखण्डस्य पूर्वतिर्यङ्मान्यां समान्तराले द्वे चिह्ने कृत्वा प्रथमचिह्नादारभ्य आर्जवेन अपरतिर्यङ्मानीं प्रत्यालिखेत्। एवं द्वितीयचिह्नाद् आरभ्य।

एवं मध्यखण्डस्य पूर्वान्तमध्याद् आरभ्य आर्जवेन अपरान्तात् लिखेत्।

एवं विभक्ते प्रथमे खण्डे बाह्यपार्श्वतः अर्धप्रउगाकारा एकेष्टका। मध्यतो द्वे दीर्घचतुरस्रे। मध्यमखण्डस्य बाह्यत एका प्रउगार्धा। अन्तरत एका दीर्घचतुरस्रा। अपरोभागः प्रउगार्धरूप एव। एवं षड्धा विभागः। एवं उत्तरतः। ता द्वादशेष्टकाः। तासु प्रउगार्धाकाराः षट्। दीर्घेष्टकाकाराः षट्। ते द्वे इति। ते षड्धा विभक्ते। द्वे प्रउगार्धे। पार्श्वयोः षड्भागायामप्रमाणस्य द्विभागप्रमाणतिर्यङ्मानीकस्य चतुरस्रस्य पार्श्वयोर्दक्षिणोत्तरयोः प्रत्यगग्रे बहिर्भूतकर्णपार्श्वे उपदध्यात्। एवं द्वादशेष्टका उपहिता भवन्ति। एवं उपहितयोः प्रउगार्धयोर्मध्यभूतचतुरस्रस्योपधानविधिः। भागतृतीयेति। इष्टका इति शेषः। भागस्य षट्तिलोनपञ्चाशीत्यङ्गुलप्रमाणस्य तृतीयो नवतिलाष्टाविंशत्यङ्गुलायामः। चतुर्थव्यासाः सप्ततिलैकविंशत्यङ्गुलव्यासाः कारयेत्=ता बृहतीसंज्ञिताः।

तासामिति। आयामस्य मध्ये भिन्नाः सप्ततिलैकविंशत्यङ्गुलदीर्घाः सार्धचतुस्तिलचतुर्दशाङ्गुलव्यासा अर्धेष्टकाः कार्या इत्यर्थः। ता अन्तयोरिति। ता अर्धेष्टका दक्षिणोत्तरायताः। अन्तयोः पूर्वापरयोः। इष्टका अष्टावष्टावुपधाय शेषमग्निं बृहतीभिरित्यादि तुल्यम्। अर्धेष्टकाभिरिति। पार्श्वयोरुपहितप्रउगार्धयोर्द्वादशेष्टकाः। मध्यभूतचतुरस्रपूर्वापरान्तयोः षोडशार्धेष्टकाः। मध्ये षट्त्रिंशच्छतं बृहत्यः प्रागायताः। एवं चतुःषष्टिशतमिष्टकाः। षट्त्रिंशन्न्यूना भवन्ति। श्रोण्यंसेषु नव नव बृहतीः चतुरस्रकृता उद्धृत्य अष्टादशाष्टादशार्ध्या निधेयाः। एवं द्विशतः प्रस्तारः।

द्वितीय प्रस्तारे चत्वारि करणानि। प्रउगार्धानामेकं करणम्। तस्य तिर्यङ्मानी सपञ्चतिलचतुर्दशाङ्गुला। साष्टतिलसप्ततिशताङ्गुला कर्णरूपा बाह्यपार्श्वमानी। सद्वाविंशतितिला नवषष्टिशताङ्गुला अभ्यन्तरऋजुपार्श्वमानी। अनेन षडिष्टकाः। दीर्घचतुरस्राणां द्वितीयम्। तस्य प्रउगार्धतिर्यङ्मान्येव तिर्यङ्मानी। तस्यैव अभ्यन्तरपार्श्वमान्येव पार्श्वमानी। अनेनापि षडष्टिकाः। बृहतीनां तृतीयम्। सनवतिलाष्टविंशत्यङ्गुला पार्श्वमानो। ससप्ततिलैकविंशत्यङ्गुला तिर्यङ्मानी। अनेन शतमिष्टकाः। अर्धेष्टकानां चतुर्थम्। सार्धचतुस्तिलचतुर्दशाङ्गुला तिर्यङ्मानी। सप्ततिलैकविंशत्यङ्गुला पार्श्वमानी। अनेन करणेन अष्टाशीतिरिष्टकाः।

उपधाने पूर्वस्मिन् अनीके पार्श्वयोर्द्वे प्रत्यगग्रे बाह्यकर्णपार्श्वप्रउगार्धे । तयोरभ्यन्तरतः प्रागायते द्वे द्वे दीर्घचतुरस्रे । तासां पश्चात् पूर्ववद् द्वे प्रउगार्धे । तयोरन्तरत एकैका दीर्घचतुरस्रा । तयोर्युगलयोः पश्चाद् द्वे प्रत्यगग्रे प्रउगार्धे । एवं द्वाद्वशेष्टकाः । मध्यचतुरश्रस्य पूर्वापरयोरनीकयोरुदगायता अष्टावष्टावर्धेष्टकाः । तयोरन्तरत अष्टाभिरष्टाभिः प्रागायताभिः बृहतीभिरुदीच्यः सप्तदश रीतयः । तत्र श्रोण्यंसेषु बृहतीनां नवचतुष्कमुद्धृत्य द्वासप्ततिरर्ध्या निधेयाः । एवं द्विशतः प्रस्तारः ।

अत्र कल्पोक्तो विधिरनुसन्धातव्यः । तत्रैवमुक्तम् । तस्य मात्रा यदि ग्रीवदघ्नं पुरस्तान्नाभिदघ्नं पश्चात् । यदि नाभिदघ्नं पुरस्ताज्जानुदघ्नं पश्चात् । यदि जानुदघ्नं पुरस्ताद् गुल्फदघ्नं पश्चात् । यदि गुल्फदघ्नं पुरस्तात् समं भूमेः पश्चात् । स एष श्मशानचित् पितृलोककामस्येति ( बौ० श्रौ० सू० १७।३० पृ : ३०९ ) । हस्तिपृष्ठवत् चिन्वीतेति तस्यार्थः ॥ १२६ ॥

**ऊर्ध्वप्रमाणमग्नेः पञ्चमेन वर्धयेत् । तत्सर्वं त्रेधा विभज्य द्वयोर्भागयोश्चतुर्थेन नवमेन वा चतुर्दशेनवेष्टकाः कारयेत् । ताभिश्चतस्रो वा नव वा चतुर्दश वा चितोरुपधाय शेषमवाश्नमदणयापच्छिन्द्यादर्धमुद्धरेत् ॥ १२७ ॥**

सर्वचयनापेक्षया श्मशानचयनोर्ध्वप्रमाणे विशेषोऽस्ति । तत्करणीभूतेष्टकाकरणाद्युपायप्रकारमाह— **ऊर्ध्वप्रमाणमिति** । अग्नेर्जानुदघ्नस्य नाभिदघ्नस्य ग्रीवदघ्नस्योर्ध्वप्रमाणं जानुप्रमाणं नाभिप्रमाणं ग्रीवप्रमाणं वा पञ्चमेनैकोर्ध्वप्रमाणेनेष्टकाद्वयोर्ध्वप्रमाणेन वा वर्धयेद् योजयेत् ।

अयमर्थः— प्रकृताग्न्यूर्ध्वप्रमाणं पञ्चधा विभज्य तादृशमेकं भागं योजयेत् । **तत्सर्वमिति** । तत्सर्वं भागषट्कं त्रेधा विभज्य त्रेधा कृत्वा द्वयोर्भागयोश्चतुर्थेन चतुर्थभागप्रमाणेन जानुदघ्ने, द्वयोर्भागयोः नवमेन नवप्रमाणेन नाभिदघ्ने द्वयोर्भागयोश्चतुर्दशेन चतुर्दशप्रमाणेन ग्रीवदघ्ने इष्टकाः कारयेत् । अयमर्थः—षष्ठभागसहितं त्रेधा विभज्यैकं निधायावशिष्टभागद्वयं चतुर्थे नाभिदघ्ने नव जानुदघ्ने चतुर्दशधा ग्रीवदघ्ने विभज्येष्टकाः कुर्यादिति । **ताभिरिति** । ताभिरेवं कृतेष्टकाभिश्चतस्रश्चितिः प्रस्तारान् जानुदघ्ने उपधाय, नवचितिर्नाभिदघ्ने उपधाय, चतुर्दशचितीः ग्रीवदघ्ने उपधाय, शेषमवशिष्टं तृतीयेन भागेन पञ्चमं दशमं

पञ्चदश वा प्रस्तार उपधायाऽवाञ्चं प्रत्यक्प्रवणं अक्षणया प्रागुपरितनदेश-मारभ्य प्रत्यगधोदेशपर्यन्तमपच्छिन्द्यात् उद्धरेत् । अपच्छिन्नयोरुपरितनभाग-मुद्धरेत् विसृजेत् ॥ १२७ ॥

तदेवाह—ऊर्ध्वेति । उच्छ्रायप्रमाणमग्नेः श्मशानचितः । ऊर्ध्वप्रमाणां रज्जुं मीत्वा पञ्चधा संभुज्य षष्ठं भागं प्रक्षिपेत् । श्मशानचितो द्विषाहस्रत्रिषाहस्रावपि भवतः । यदि ग्रीवदघ्नमित्यादि ( बौ० श्रौ० सू० १७।३० पृः ३०९ ) दर्शनात् । साहस्र एकेष्टकोच्छ्रायप्रमाणम् । द्विषाहस्र इष्टकाद्वयोच्छ्रायप्रमाणम् । त्रिषाहस्र इष्टकात्रयोच्छ्रायप्रमाणम् । तत्सर्वमिति । प्रक्षिप्तेन सह त्रेधा संभुज्यैकमवशिष्य शिष्टयोश्चतुर्थेन भागेनोर्ध्वप्रमाणभूतेन पञ्चमीं, नवमेन दशमीं, चतुर्दशेन पञ्चदशीञ्च कारयेत् । वा शब्दश्च शब्दार्थे । उत्तरस्मिन्नपि वाक्ये तथा । ताभिरिति । ताभिश्चतुर्थेन नवमेन चतुर्दशेनेत्युक्ताभिश्चतस्रः साहस्रे, नव द्विषाहस्रे, चतुर्दश त्रिषाहस्रे चितीः प्रस्तारान् उपधाय शेषं तृतीयं भागमवाञ्चं पश्चात्प्रवणं अक्षणयापच्छिन्द्यात् । अर्धं तस्य भागस्योद्धरेत् । एवं प्रक्षेप उद्धृतो भवति ।

तत्र प्रयोगः । इदमुपधानमार्गेण क्वचित् प्रस्तार्य पूर्वस्मिन् अन्ते ऊर्ध्वप्रमाणान्ते स्पन्द्यां नियम्य प्रस्तारस्य पश्चिमान्त अधस्तात् स्पन्द्याया इतरान्तं स्पन्द्यायाः पार्श्वे निधाय अनुस्पन्द्यं प्रस्तारं अक्षणया अपच्छिन्द्यात् । इष्टकानामेव लक्षणमुक्तम् । उच्छ्रायप्रमाणौ द्वौ दण्डौ प्रस्वारायामप्रमाणयोरधरोत्तरयोरूर्ध्वौ स्थापयित्वा पूर्वस्य दण्डस्य शिरसि पाशं प्रतिमुच्य पश्चिमस्य दण्डस्य अपरमन्तं निधाय पश्चिमदण्डा-भावेऽपि समायां भूम्यां प्रस्तारायामान्तं निधाय तेनेदृशं कृत्वा इष्टकारूपाणि वितर्क्य कारयेत् । गणितनिपुणानामेतत् सुकरम् । इतरेषामशक्यमेव ॥ १२७ ॥

**तस्य नित्यो विभागः । यथायोगमिष्टकानां ह्रासवृद्धी ॥ १२८॥**

एवं कृतेऽपच्छेदे नित्यः यथायोगमिष्टकानां ह्रासवृद्धी ।

अयमर्थः—प्राक् कृताभिरिष्टकाभिश्चतुरो नव चतुर्दश वा प्रस्तारा-नुपधायाऽवशिष्टतृतीयभागपरिमितां तदुपरि निक्षिप्य प्राक् उपरितनदेश-मारभ्य प्रत्यगधोदेशपर्यन्तं स्पन्द्यां नियम्य प्राक्प्रवणमक्षणयाऽपच्छिन्नं भागमुपरितनमुद्धरेत् ।

प्रस्तारान्तरेष्टकापेक्षया पञ्चम-दश-पञ्चदशप्रस्तारेष्टकाकरणे विशेष-माह—**यथायोगमिति** । यथायोगं यथासंभवमिष्टकानां ह्रासः, निम्नता प्रत्यग्देशे, उच्छ्रयो वृद्धिः प्राग्देशे यथा भवति तथा कुर्यादित्यर्थः ॥१२८॥

यथायोगमिति । भवत इति शेषः । यथा युज्यते तथा इष्टकानां ह्रासवृद्धी । अन्यथा वक्तमशक्यत्वाद् एवमुक्तम् । महतः प्रस्तारस्य ऊर्ध्वप्रमाण एव विशेषः । इतरेषां प्रस्ताराणां यथापूर्वमेव ।

अत्र केचिद् वदन्ति इष्टकानां सम्पादयितुमशक्यत्वाद् इष्टकानां रूपेण मृदमेव प्रक्षिपन्ति । तदपि युक्तमयुक्तमिति विचारणीयं सूरिभिः ॥ १२८ ॥

[ इति श्मशानचिदुपधानप्रकारः । ]

**कूर्मचितं चिन्वीत यः कामयेत ब्रह्मलोकमभिजयेयमिति विज्ञायते ॥ १२९ ॥**

कूर्मचयनप्रतिपादकं शाखान्तरीयं ब्राह्मणमाह—**कूर्मचितमिति** ॥१२९॥

कूर्मचितमिति । छन्दश्चिदध्याये तथैव कूर्मचिदिति ब्राह्मण इत्युक्तमिह विज्ञायत इति शाखान्तरब्राह्मणं दर्शितम् । एतस्मादेव गम्यते स्वशाखायां ब्राह्मणाभावोऽन्य ब्राह्मण इत्युक्तं भवति । ब्रह्मलोकं हिरण्यगर्भलोकम् ॥ १२९ ॥

**द्वयाः खलु कूर्मा भवन्ति वक्राङ्गाश्च परिमण्डलाश्च । अविशेषात्ते मन्यामहेऽन्यतरस्याकृतिरिति ॥ १३० ॥**

**द्वेधाः खल्विति** । लोके वक्राकाराः कूर्माः संभवन्ति परिमण्डलाकाराः कूर्माश्च संभवन्तीति । **अविशेषादिति** । श्रुतावविशेषात् ते वयं **बोधायनाचार्याः** कूर्मस्याकृतिरिति मन्यामहे ॥१३०॥

द्वया इति । वक्राङ्गानि कुटिलाङ्गानि येषां ते वक्राङ्गाः । एवं परिमण्डलाङ्गाः । अविशेषादिति । व्याख्यातमेतद् रथचक्रचितौ ॥ १३० ॥

**अथाग्निं विमिमीते । चतुरस्र आत्मा भवति । तस्य दशप्रक्रमाः पार्श्वमानी भवति । तस्य द्वाभ्यां द्वाभ्यां प्रक्रमाभ्यां स्रक्तीनामपच्छेदः । पूर्वस्मिन्ननीके प्रक्रमप्रमाणानि चत्वारि चतुरस्राणि कृत्वा तेषां येऽन्त्ये ते अक्ष्णयापच्छिन्द्यात् । एवं दक्षिणतः एवं पश्चादेवमुत्तरतः । स आत्मा ॥ १३१ ॥**

**अथेति** । अथाग्निमग्निक्षेत्रं विमिमीते । **चतुरस्र इति** । कूर्मस्य चतुरश्रात्मा भवति । चतुरश्रश्चासावात्मा स चतुरश्रात्मा । आत्मा समचतुरश्रो भवतीत्यर्थः । **तस्येति** । तस्यात्मनः दशप्रक्रमाः पार्श्वमानी

भवति । दशप्रक्रमप्रमाणा रज्जुः सर्वतः पार्श्वमानी भवति । पार्श्वो मीयते अनयेति पाश्वमानी । सर्वतो दशप्रक्रमप्रमाणेन समचतुरश्रमात्मानं कुर्यादित्यर्थः । **तस्येति** । तस्य समचतुरश्रीकृतात्मानः द्वाभ्यां द्वाभ्यां प्रक्रमाभ्यां स्रक्तीनां कोणप्रदेशानामपच्छेदः । आत्मनि प्राक् ( दक्षिण ? ) कोणप्रदेशादारभ्य अपरपार्श्वे (प्रक्रम ?) (त्वरत्नी) द्वयं मित्वा तत्र शङ्कुं निहन्यात् । एवमुत्तरप्रदेशेऽपि अरत्नी (प्रक्रम?) द्वयं मीत्वा तत्र शङ्कुं निहत्य शङ्कोरुपरि स्पन्द्यां नियम्य बहिःस्पन्द्यमपच्छिन्द्यात् । एवमितरासु स्रक्तिषु अपच्छेदः कर्त्तव्यः। **पूर्वस्मिन्निति** । पूवस्मिन् आत्मसमीपे आत्मनः प्रागग्रादुपरि प्राक्प्रदेशे अव्यवहिततया सर्वतः प्रक्रमप्रमाणानि चत्वारि समचतुरश्राणि दक्षिणोत्तराणि कृत्वा तेषां चतुर्णां चतुरश्राणां ये अन्त्ये दक्षिणोदक्पार्श्वस्थिते चतुरश्रे ते अक्ष्णयापच्छिन्द्यात् । दक्षिणोत्तरयोरैशाननैरृतार्धेऽक्ष्णया वर्जयेदित्यर्थः ॥१३१॥

अथाग्निमिति । पार्श्वमानी भवतीति । दशप्रक्रमप्रमाणेन चतुरस्रं कुर्यादित्यर्थः । तस्येति । तस्य आत्मनः । श्रोण्यंसानां द्वाभ्यां द्वाभ्यां स्रक्तीनामपच्छेदः कर्त्तव्यः । एवं श्रोण्यंसेभ्योऽष्टौ चतुर्थ्यो निरस्ता भवन्ति । पूर्वस्मिन्निति । पूर्वस्मिन् पार्श्वे पार्श्वयोः प्रक्रमद्वयमवशिष्य मध्ये आत्मनो बहिस्तिर्यञ्चि प्रक्रमप्रमाणानि चत्वारि चतुरस्राणि अनीकसंसृष्टानि कृत्वा तेषां ये अन्त्ये चतुरस्रे ते अक्ष्णया अपच्छिन्द्यात् । अग्नीशानदले त्यजेत् । एवमिति । चतुरस्रकरणादि-अपच्छेदान्तो विधिः सर्वत्रेत्यर्थः । स आत्मेति । एवमात्मनि चतुरधिकं शतं चतुर्थ्यः ॥ १३१ ॥

**शिरः पञ्चपदायाममर्धपुरुषव्यासम् । तस्यांसौ प्रक्रमेणापच्छिन्द्यात् । स्रक्त्यपच्छेदे पादानुन्नयेत् । तस्य द्विपदाक्ष्णया तिरश्ची तद्द्विगुणायाममनूची । तस्य द्विपदाक्ष्णया पूर्वमंसमपच्छिन्द्यात् । एतेनेतरेषां पादानामपच्छेदा व्याख्याताः । अपरयोः पादयोरपरावंसावपच्छिन्द्यात् । एवं सारत्निः प्रादेशः सप्तविधः संपद्यते ॥ १३२ ॥**

**शिर इति** । शिरः पञ्चपदायाममर्धपुरुषव्यासं प्राक्प्रत्यक् पञ्च दीर्घं दक्षिणोदक् पदचतुष्टयविस्तारं दीर्घचतुरश्रम् । **तस्येति** । आत्मन

उपरि प्राक्प्रदेशे आत्मना संयुक्ततया तत् कृत्वा तस्य दीर्घचतुरश्रस्य त्वंसौ प्राक्कोणप्रदेशौ प्रक्रमेणापच्छिन्द्यात्। प्राक्कोणप्रदेशाभ्यामारभ्य प्रत्येकं प्रक्रमप्रमाणं प्रत्यङ् मीत्वा दक्षिणोत्तरयोः पार्श्वयोः शङ्कुद्वयं निहत्य प्राक्पार्श्वमान्यां मध्ये शङ्कुं निहत्य शङ्कूनामुपरि स्पन्द्यां नियम्य बहिः स्पन्द्यमपच्छिन्द्यात्। एवं कृतं शिर इत्यर्थः। **स्रक्त्यपच्छेद इति**। स्रक्त्यपच्छेदेष्विति जात्येकवचनम्। आत्मनश्चतुर्षु स्रक्तिषु प्रत्यपच्छेदमेकैकं पादं उन्नयेदित्यर्थः। पादपरिमाणमाह—**तस्येति**। जात्येकवचनम्। तेषां पादानां द्विपदाक्षणया चतुर्थीप्रक्रमप्रमाणेन समचतुरश्रीकृतस्याक्षणया-रज्जुस्तिरश्ची भवति। प्रतिपादद्विगुणायाममनूची तिर्यङ्मान्यपेक्षया द्विगुणा रज्जुः अनूची प्रक्रमद्वयप्रमाणेन समचतुरश्रीकृतस्याक्षणयारज्जुः अनूची भवति।

अयमर्थः—प्रक्रमद्वयप्रमाणचतुरश्राक्षणयाप्रमाणे प्रागदक्षिणापच्छेदे मध्ये द्विपदाक्षणयाप्रमाणं मीत्वा तस्योपरितनपार्श्वयोस्तद्द्विगुणप्रमाणं प्रत्येकं मीत्वोपरि द्विपदाक्षणयाप्रमाणं मीत्वा एवं दीर्घचतुरश्रं कुर्यादिति। **तस्य द्विपदाक्षणयेति**। तस्यैवं कृतस्य दीर्घचतुरश्रस्य द्विपदाक्षणया प्रक्रमप्रमाणचतुरश्राक्षणयाप्रमाणेन पूर्वमंसमपच्छिन्द्यात्। प्राक् स्थित-स्रक्तिमारभ्याक्षणयापछिन्नं कुर्यादित्यर्थः। **एतेनेति**। अवशिष्टानां त्रयाणां पादानां पूर्वोक्तन्यायेनापच्छेदाः कर्त्तव्या इत्यर्थः। पूर्ववदपरयोः पादयोः पूर्वांसमारभ्यापच्छेदे प्राप्ते अन्यथैवापच्छेदप्रकारमाह—**अपरयोरिति**। अपरस्रक्तिमारभ्यापच्छेदं कुर्यादित्यर्थः ॥१३२॥

शिर इति। एवं पञ्च चतुर्थ्यः। तत्र—तस्यांसाविति। एवमपच्छिन्ने परिशिष्टा-श्चतस्रश्चतुर्थ्यो भवन्ति। स्रक्त्यपच्छेद इति। स्रक्तीनामपच्छेदे आत्मस्रक्तीनामपच्छेदे। जातावेकवचनम्। अपच्छेदेषु पादान् उन्नयेत्। बहिः कुर्यात्। अवान्तरदिक्षु पादान् कुर्यादित्यर्थः। तस्येति। तस्य पादस्य द्विपदाक्ष्णया चतुर्थ्यक्ष्णया। सार्धचतुर्दशतिल-सहितद्विचत्वारिंशदङ्गुला तिरश्ची। तद्द्विगुणं पञ्चतिलोनपञ्चाशीत्यङ्गुलमनूची आयामः। दक्षिण पूर्वस्रक्त्यपच्छेदमध्यतश्चतुर्थ्यक्ष्णयामात्रं तिर्यङ्मानं परिगृह्य कोणदिशं प्रति तद्द्विगुणायामं पादार्थं दीर्घचतुरस्रं कुर्यादित्यर्थः। एवं चतस्रश्चतुर्थ्यः। तत्र—तस्येति। पूर्वपार्श्वस्य मध्ये चिह्नं कृत्वा अपरांसात् लिखेत्। एवमेका चतुर्थी

निरस्ता भवति तिस्रोऽवशिष्यन्ते । एतेनेति । अपच्छेदशब्देन करणमपि विवक्षितम् । अन्यथा अपच्छेदासम्भवात् । अपरयोरिति । अपरपार्श्वस्य मध्ये लक्षणं कृत्वा पूर्वांसात् लिखेत् । एवं पादेषु द्वादश चतुर्थ्यः । एवमिति । आत्मनि चतुःशतं चतुर्थ्यः । शिरसि चतस्रश्चतुर्थ्यः । पादेषु द्वादश । एवं विंशशतं चतुर्थ्यः ॥ १३२ ॥

**तस्येष्टकाः कारयेत् पुरुषस्य चतुर्थ्यः । तासामर्ध्याः पाद्याश्च । अध्यर्धापाद्यां चतुर्भिः परिगृह्णीयात् प्रक्रमेण द्वाभ्यां पदाभ्यां पदसविशेषेणेति । ते यथा दीर्घसंश्लिष्टे स्यातां तथैकां कारयेत् । द्विपदाक्ष्णयार्धेन समचतुरस्रामेकाम् ॥ १३३ ॥**

**तस्येष्टका इति** । कूर्मस्येष्टकाः कुर्यादित्यर्थः । **पुरुषस्येति** । सर्वतस्त्रिंशदङ्गुलप्रमाणकाः । **तासामिति** । चतुर्थीनामर्ध्याः पाद्याश्चाक्ष्णयापच्छेदकृताः कुर्यादित्यर्थः । अध्यर्धचतुरश्रपाद्येष्टकाकरणप्रकारमाह—**अध्यर्धपाद्यामिति** । प्रक्रमप्रमाणफलकमेकम् एकपदप्रमाणफलके द्वे, पदसविशेषफलकमेकम् एवंभूतैः फलकैः कृता इष्टका अध्यर्धपाद्या इत्युच्यन्ते । हंसमुखीकरणमाह—**ते द्वे इति** । प्रक्रमप्रमाणपार्श्वाभ्यां यथा संश्लिष्टे भवतस्तथा कुर्यादित्यर्थः । सा हंसमुखीत्युच्यते । चतुरश्रेष्टकाकरणमाह—**द्विपदाक्ष्णयार्धेनेति** । तिलोनैकविंशत्यङ्गुलेन चतुरश्रेष्टकां कुर्यादित्यर्थः ॥१३३॥

तस्येष्टका इति । नित्यमक्ष्णयापच्छेदनमनादेश (३।५९) इति ह्युक्तम् । अध्यर्धापाद्यामिति । अर्धाधिकां पादेष्टकां चतुर्भिः फलकैः कुर्यात् । प्रक्रमेणोत्तरं फलकम् । द्वाभ्यां पदाभ्यां पश्चिमदक्षिणफलके पदप्रमाणे इत्यर्थः । पदसविशेषेण तिलोनैकविंशत्यङ्गुलेन । पूर्वं कर्णरूपमित्यर्थः । ते यथेति । व्याख्यातमिदम् । एकां अपरामित्यर्थः । द्विपदेति । तिलाधिकैकविंशत्यङ्गुलेन समचतुरस्रामेकाम् । एवं षट् करणानि ।

तत्र अष्टाचत्वारिंशच्छतद्वयं चतुर्थ्यः । पञ्चशतं षट्सप्ततिश्च अर्ध्याः । शतं पाद्याः । अष्टौ अध्यर्धापाद्याः । तथा हंसमुख्यः । षष्टिः समचतुरस्राः साध्याः । चोडानाकसदौ द्वे पाद्ये, अर्ध्याद्वयं, षट् चतुर्थ्यः । एवञ्च सहस्रमिष्टकाः ॥ १३३ ॥

**उपधाने शिरसोऽग्रे चतुरश्रामुपदध्यात् । हंसमुख्याववस्तात् । पञ्च पञ्च चतुरस्रा द्वे द्वे पादेष्टके इति पादेषूपदध्यात् । यद्यदपच्छिन्नं तस्मिन्नर्धेष्टकाश्चोपदध्यात् । शेषमग्निं चतुर्भागीयाभिः प्रच्छादयेत् । अर्धेष्टकाभिः सङ्ख्यां पूरयेत् ॥१३४॥**

**उपधान इति**। शिरसः प्रागग्रे यथा महादिक्षु स्रक्तयो भवन्ति तथा सूक्ष्मचतुरश्रामुपदध्यादित्यर्थः। **हंसमुख्याविति**। उपहितेष्टकायाः पश्चादव्यवहिततया प्रागग्रे हंसमुख्यौ उपदध्यादित्यर्थः। **पश्च पश्चेति**। पादे(ष्टके) (षु ?) सर्वत्राष्टौ पाद्याः, विंशतिः न्यूनचतुरश्रा आहत्याष्टाविंश-तिरिष्टका उपदध्यादित्यर्थः। **यद्यदपछिन्नमिति**। आत्मस्रक्तिषु प्रत्यपच्छिन्नं द्वे द्वे अर्धेष्टके एवं क्रमेणाष्टावर्ध्या आत्मान्तिकबहिः प्रदेशेषु चतुर्षु प्रतिपार्श्वे द्वे द्वे अर्धेष्टके एवं क्रमेणाष्टावर्ध्या आहत्य षोड-शार्ध्या अपच्छिन्नदेशेषु उपदध्यादित्यर्थः। **शेषमग्निमिति**। आत्मनि चतुर्थीनां प्राक्प्रत्यक् दश रीतयः। दक्षिणोत्तरं षट् रीतयः। आसां दक्षिण-पार्श्वे प्राक्प्रत्यगष्टौ रीतयस्ततोऽपि दक्षिणपार्श्वे प्राक्प्रत्यगष्टौ रीतयः। एवमुत्तरपार्श्वेऽपि रीतिद्वयम्। आत्मबहिर्भूतप्रागाद्यन्तिकदेशेषु प्रतिपार्श्वं द्वे द्वे एवं क्रमेणाष्टौ चतुर्थ्यः। शिरसः पश्चिमदेशे द्वे चतुर्थ्यौ। आहत्याष्टाधिकनवतिः चतुर्थ्यः। षोडशार्ध्याः। अष्टौ पाद्याः। एकविंशतिः न्यूनचतुरश्रेष्टकाः। द्वे हंसमुख्यौ। आहत्य पञ्चचत्वारिंशदधिकशतमिष्टकाः संपन्नाः। तत्र द्विशतसंख्यापूरणार्थमाह—**अर्धेष्टकाभिरिति**। आत्मनि पञ्च-पञ्चाशच्चतुर्थीः उद्धृत्य तत्र दशोत्तरशतं अर्ध्या उपदध्यादित्यर्थः। एष द्विशतः प्रस्तारः॥१२४॥

उपधान इति। यथा महादिक्षु चतुरस्रेष्टकास्रक्तयो भवन्ति तथोपदध्यात्। हंसमुख्याविति। पश्चात् प्रागग्रे हंसमुख्यौ उपदध्यात्। शिरसि पश्चाद्भागे प्रक्रम-प्रमाणमवशिष्य परिशिष्टक्षेत्रे प्रागग्रे हंसमुख्यावित्यर्थः। पञ्चेति। पादाग्रापच्छे-दाक्ष्णयासङ्गतदीर्घपार्श्वे द्वे द्वे पादेष्टके। शिष्टपादक्षेत्रेषु त्रिभिस्त्रिभिश्चतुरस्राभिः एकैका रीतिः। द्वाभ्यां द्वाभ्यामपरा। एवं पादेषु अष्टौ पाद्याः। विंशतिश्चतुरस्राः। यद्यदिति। चोऽवधारणे। यदपच्छिन्नं क्षेत्रमनीकपार्श्वेषु आत्मापच्छेदेषु च अर्धेष्टका एवोपदध्यात्। एवमनीकपार्श्वेषु अष्टावर्ध्याः। आत्मापच्छेदेषु चाष्टौ।

शेषमिति। एवं प्रच्छादिते पञ्चपञ्चाशदिष्टका न्यूना भवन्ति। तत्र—अर्धेष्टका-भिरिति। तत्र अग्निधर्माविरोधेन पूरणस्येष्टत्वात् दक्षिणोत्तरपार्श्वयोः सप्तविंशतिः सप्तविंशतिश्चतुर्थ्य अर्धेष्टकारूपेण भेद्याः। तत्र दक्षिणपार्श्वस्थाः प्रागुत्तरसविशेषाः। विपरीता उत्तरपार्श्वस्थाः। शिरसि सूत्रोक्तां चतुरस्रेष्टकामुद्धृत्य अन्तर्दीर्घपार्श्वे पादेष्टके निदध्यात्। एवं सूत्रभङ्गेनापि अग्निधर्माविरोध आपाद्यः सर्वत्र।

तत्रैवमुपधानम्। पादवर्जं शिरसा सह द्वादश रीतयः। दक्षिणमनीकम्। मध्ये द्वे चतुर्थ्यौ। अभितो द्वेऽर्ध्ये। द्वितीयस्यां मध्ये षट् चतुर्थ्यः। पार्श्वयोर्द्वे अर्ध्ये। तृतीयस्यामादितोऽर्ध्या। ततश्चतुर्थी। ततो द्वादशार्ध्याः। तत एका चतुर्थी। ततोऽर्ध्या च। चतुर्थ्यामादितो द्वे चतुर्थ्यौ। ततश्चतुर्दशार्ध्याः। तत एका चतुर्थी। पञ्चम्यामाद्यन्तयोरर्ध्ये। मध्ये चतुर्थरीतिवत्। षष्ठ्यामादितस्तिस्रश्चतुर्थ्यः। ततश्चतुर्दशार्ध्याः। ततस्तिस्रश्चतुर्थ्यः। तत एका हंसमुखी प्रागग्रा। तत उत्तरपूर्वकोट्या सह दक्षिणाग्रान्ता एका पाद्या। एवमुत्तरं पार्श्वम्। दक्षिणपार्श्वस्था अर्ध्याः प्रागुदक्सविशेषाः। विपरीता इतराः।

पादेषु चतुरस्रभूतांशेषु चतस्रश्चतुरस्राः। छेदांशेषु मध्यत एकैका चतुरस्रा। शेषेषु पादेष्टके। एवं पादेषु अष्टाविंशतिः।

शिरसि पञ्च। आत्मनि सप्तषष्टिशतम्।

अस्मिन् प्रस्तारे चतुश्चत्वारिंशच्चतुर्थ्यः। चतुर्विंशतिशतं अर्ध्याः। दश पाद्याः। द्वे हंसमुख्यौ। विंशतिश्चतुरस्राध्याः॥ १३४॥

**अपरस्मिन् प्रस्तारे शिरसोऽग्रे हंसमुखीमुपदध्यात् पादेष्टकेऽभितः। तयोरवस्तादभितो द्वे द्वे अध्यर्धपाद्ये विषूची। तयोरवस्तादभितश्छेदसंहिते द्वे पादेष्टके। द्वे द्वे द्विपदे तिस्रस्तिस्रोऽर्धेष्टका इति पादेषूपदध्यात्। यदपच्छिन्नं तस्मिन्नर्धेष्टकाः पादेष्टकाश्चोपदध्यात्। शेषमग्निं चतुर्भागीयाभिः प्रच्छादयेत्। अर्धेष्टकाभिः सङ्ख्यां पूरयेत्॥ १३५॥**

**अपरस्मिन्निति**। शिरसः प्रागग्रे प्रागग्रां हंसमुखीमुपदध्यादित्यर्थः। **पादेष्टक** इति। द्वे पादेष्टके सविशेषपार्श्वाभ्यां हंसमुखीश्लिष्टे दक्षिणोत्तरपार्श्वयोरुपदध्यादित्यर्थः। **तयोरवस्तादिति**।व्यस्ताग्रे उपदध्यात्।

अयमर्थः—पादेष्टका सहिता प्रागदक्षिणाग्रा एका ततः पश्चात्पश्चिमोत्तराग्रा एका अध्यर्धपाद्या उत्तरपार्श्वेऽप्युत्तरपूर्वाग्रा पाद्यासंश्लिष्टा एका। ततः पश्चात् पश्चिमदक्षिणाग्रा एकेति।

**तयोरवस्तादिति**। तयोः पश्चिमभागोपहिताध्यर्धपाद्ययोरवस्तात् पश्चिमभागे छेदसंहिते प्रागग्रे द्वे पाद्ये उपदध्यादित्यर्थः। **द्वे द्वे द्विपद इति**। चतुर्षु पादेषु अग्रे एका अर्ध्या। ततः अवस्ताद् द्वे द्वे चतुर्थ्यौ संश्लिष्टस्रक्ती उपदध्यात्। तयोरधस्तना चतुर्थी आत्मप्रविष्टा

भवति। स्रक्तिसंश्लिष्टमभितः द्वे अर्ध्येष्टके बहिर्दीर्घपार्श्वे उपदध्यादित्यर्थः। **यदपछिन्नमिति**। अंसयोरुपरिच्छिन्नप्रदेशयोः पूर्वोपहितपाद्ययोरवस्ताद्दक्षिणोत्तरपार्श्वयोर्द्वे अर्ध्ये। बहिर्भेदयोर्दक्षिणोत्तरभागयोः द्वे द्वे पाद्ये। तयोः पूर्वोपहिताध्यासंश्लिष्टा पूर्ववत्संश्लिष्टामपरां पश्चाद्भागां पार्श्वयोरुपदध्यात्। पूर्वपादयोरवस्ताद् द्वे द्वे पाद्ये अन्तर्भागां पूर्वां पूर्वां बहिर्भागां पश्चिमामुपदध्यात्। ततः पश्चाद् बहिर्भागां एकैकामध्यां ततो अवस्तादपच्छिन्नप्रदेशयोर्दक्षिणोत्तरयोरन्तरभागं पाद्यात्रयं बहिर्भागं च पाद्याद्वयं ततोऽवस्तादपछिन्नप्रदेशयोरेकैकामध्यां बहिर्भागमुपदध्यात्। ततः दक्षिणोत्तरयोरेकैकामध्यां बहिर्भागमुपदध्यात्। ततः दक्षिणयोरवस्तादपछिन्नप्रदेशान्तर्भागां पाद्यात्रयं बहिःपाद्याद्वयं चोपदध्यादित्यर्थः। इतः पूर्वस्यां रीतौ तिस्रश्चतुर्थी, ततः पूर्वस्यां सप्त चतुर्थीः पश्चात्पादद्वयप्रविष्टाध्यंचतुर्थीद्वयं मध्ये उपदध्यात्। ततः पूर्वस्मिन् रीतिद्वये नव नव चतुर्थी ततः पूर्वस्मिन् रीतित्रये एकादशैकादश चतुर्थीः, ततः पूर्वस्मिन् रीतिद्वये नव नव चतुर्थी ततः पूर्वस्यां रीतौ पूर्वपादद्वयप्रविष्टार्धचतुर्थीद्वयमध्ये सप्तचतुर्थीः ततः पूर्वस्यां रीतौ तिस्रश्चतुर्थी इत्येकादश रीतय उदीचीरुपधाय शिर आत्मसन्धौ एकां चतुर्थीं ततः पूर्वामेकामुपदध्यात्। **अर्धेष्टकाभिरिति**। एतासु चतुर्थीषु एकचत्वारिंशच्चतुर्थीं अर्धेष्टकां कृत्वा द्विशतसंख्यां पूरयेत्। एष द्विशतः प्रस्तारः॥ १३५॥

अपरिस्मिन्निति। दक्षिणतो दक्षिणाग्रान्तर्भा। विपरीता उत्तरा। तयोरिति। तयोः पादेष्टकयोः। पश्चात् द्वे द्वे अध्यर्धापाद्ये। विषूची विपरीताग्रे। द्वन्द्वयोः पूर्वे प्रागग्रे बहिर्दीर्घपार्श्वे। पश्चिमे प्रत्यगग्रे अन्तर्दीर्घपार्श्वे। तयोरिति। तयोः अध्यर्धापाद्याद्विकयोः पश्चात्। छेदसन्धानार्थे प्रागग्रे प्रत्यगग्रे द्वे पादेष्टके। द्वे द्वे इति। द्विपदाद्वन्द्वस्य एकैकस्मिन् पादे उपधानासम्भवात् सामर्थ्याद् द्विकानामभ्यन्तराः पादात्मनोः सन्धिषु भवन्ति। अवान्तरदिक्षु यथा चतुर्थीनां स्रक्तयो भवन्ति तथा अभ्यन्तराः सन्धावुपधेयाः। बहिर्भूता अपि पूर्वोपहितस्रक्तिभिः संसृष्टा एवोपधेयाः। द्विकानां मध्येषु स्रक्तिसंसृष्टाग्रे बहिर्दीर्घपार्श्वे द्वे द्वे अर्धेष्टके। पादानां मध्येषु एकैका अर्धेष्टका। एवं पादेषु अष्टौ चतुर्थ्यः। द्वादशाध्याः। एवं विंशतिः। यदपछिन्नमिति। यत्र यत्र अर्धेष्टकाः सम्भवन्ति तत्र तत्र

अर्धेष्टका एव । अन्यत्र पादेष्टकाः । अनीकेषु पार्श्वस्थाध्यर्धानां आत्मनश्च सन्धौ अष्टावध्यर्धाः । तिसृषु अनीकेषु पञ्च पञ्च पाद्याः । अध्यर्धानां पादान्तानां चान्तरालेषु षोडश पाद्या इत्यर्थः । शेषमिति । एवं प्रच्छादिते एकचत्वारिंशदिष्टका न्यूना भवन्ति । तत्र–अर्धेष्टकाभिरिति । अर्धेष्टकाभिरेव न पादेष्टकाभिः ।

तत्रैवमुपधानम् । पादवर्जं शिरसा सह प्राच्यः त्रयोदश रीतयः । तत्र दक्षिणस्यां अनीकाग्रे पञ्च पाद्याः । तासां तिस्रोऽन्तर्दीर्घाः, द्वे बहिर्दीर्घे । द्वितीयस्यामादितः पादमूलपूर्वसन्धिमारभ्य दक्षिणाग्रान्तर्दीर्घपार्श्वा पाद्याः । तस्याः पुरस्ताद् बहिर्दीर्घा उदगग्रा एका पाद्या । तस्याः पुरस्तात् प्राग्दक्षिणबाह्यदीर्घकर्णा अभ्यन्तरप्रागुदगग्रा अध्यर्धा एका । ततस्तिस्रश्चतुर्थ्यः । तासां पुरस्तात् प्रागुदग्दीर्घपार्श्वा अभ्यन्तरप्रत्यगुद्दक्षिणाग्रा एका अध्यर्धा । तस्याः पुरस्ताद् बहिर्दीर्घा उदगग्रा एका पाद्या । तस्याः पुरस्ताद् दक्षिणाग्रा अन्तर्दीर्घपार्श्वा एका पाद्या । एवं नवेष्टका द्वितीया ।

तृतीयस्यामादितः पादमूले बाह्यकर्णे एका अध्यर्धा । तस्याः पुरस्तात् पादात्मसन्धौ एका चतुर्थी । तस्याः पुरस्तात् सप्त चतुर्थ्यः । पूर्वसन्धौ एका चतुर्थी । तस्याः पुरस्ताद् बाह्यकर्णे एका अध्यर्धा । चतुर्थ्यामादितः प्रत्यगग्रा पाद्या । तस्या उत्तरतः प्रागग्रा बहिर्भा । तयोः पुरस्तात् नव चतुर्थ्यः । ततः प्रागग्रा पाद्या । तस्या उत्तरतः प्रत्यगग्रा बहिर्भा पाद्या । एवं त्रयोदशेष्टका चतुर्थी रीतिः । पञ्चम्यामादितोऽनीकात्मसन्धौ बहिःकर्णा प्रागुदगग्रा एका अध्यर्धा । ततो नव चतुर्थ्यः । ततः प्रत्यगुदगग्रा बाह्यकर्णा अध्यर्धा । एवमेकादशेष्टका पञ्चमी रीतिः ।

षष्ठ्यामादितः प्रत्यगग्रा पाद्या । तस्या उत्तरतः प्रागग्रा पाद्या । तयोः पुरस्ताद् एकादश चतुर्थ्यः । ततः प्रागग्रा पाद्या । ततोऽनीकशिरसोः सन्धौ प्रत्यगग्रा अध्यर्धापाद्या दीर्घा । तस्याः पुरस्ताद् विपरीता । तस्याः पुरस्ताद् दक्षिणाग्रा अन्तर्भा पाद्या । एवं सप्तदशेष्टका षष्ठी रीतिः । मध्यरीत्यामादितः प्रत्यगग्रा पाद्या । ततस्त्रयोदश चतुर्थ्यः । ततो हंसमुखी प्रागग्रा । एवं पञ्चदश । दक्षिणपक्षवदुत्तरः पक्षः ।

पादेषु उपहितशिष्टेषु द्वे द्वे अध्यर्धे । एकैका चतुर्थी । एवं चतस्रश्चतुर्थ्यः । हितशिष्टेषु द्वे द्वे अध्यर्धे । एकैका चतुर्थी । एवं चतस्रश्चतुर्थ्यः । अष्टावध्यर्धाः । एकचत्वारिंशदूनाः । तृतीयादिषु चतसृषु पञ्च पञ्च चतुर्थीरुद्धृत्य चत्वारिंशदध्यर्धा दक्षिणोत्तरसविशेषा उपधेयाः । एवमुत्तरस्मिन् पार्श्वे विपरीतसविशेषाः । शिरसि एकां चतुर्थीमुद्धृत्य द्वे अध्यर्धे उपधेये ।

अस्मिन् प्रस्तारे अष्टपञ्चाशच्चतुर्थ्यः । द्व्यधिकशतमध्यर्धाः । पञ्चत्रिंशत् पाद्याः । चतस्रोऽध्यर्धापाद्याः । एका हंसमुखी । शिरसि द्वादशेष्टकाः । पादेषु विंशतिः । आत्मनि अष्टषष्टिशतम् ॥ १३५ ॥

[ इति वक्राङ्गकूर्मचिदुपधानप्रकारः । ]

**अथापरः ॥१३६॥**

वक्रकूर्मचयनप्रकारमुक्त्वा परिमण्डलकूर्मचयनप्रकारमाह—**अथापर इति**। अपरः कूर्मचयनप्रकार उच्यत इति शेषः ॥१३६॥

अथेति। अपरः कूर्मचिदुच्यत इति शेषः ॥ १३६ ॥

**पुरुषस्य षोडशीभिर्विंशशतं सारत्निप्रादेशः सप्तविधः संपद्यते। तासां पञ्च षोडशीरपोद्धृत्य शेषाः परिमण्डलं करोति। तदुत्तरेण द्रोणचिता व्याख्यातम्। अथ याः पञ्च षोडश्यस्ताभिरवान्तरदिक्षु पादानुन्नयेत्। पञ्चम्या शिरः पुरस्तात्। तासां परिकर्षणं व्याख्यातम् ॥ १३७ ॥**

**पुरुषस्येति**। पुरुष (विध) षोडशीभिः सर्वतस्त्रिंशदङ्गुलेष्टकाभिः पुरुषषोडशभागीयाभिः विंशशतं विंशतिशतं विंशत्युत्तरशतेष्टकाक्षेत्रम्, एवं सारत्निप्रादेशः सप्तविधः संपद्यते। **तासामिति**। तासां षोडशीनां पञ्च षोडश्यः षोडशभागीयाः अपोद्धृत्य शेषाः पञ्चदशशतषोडश्यः परिमण्डलं करोति। **तदिति**। तत् परिमण्डलकरणादिकमुत्तरेण परिमण्डलेन द्रोणचिता व्याख्यातम्। तदवत् कर्तव्यमित्यर्थः।

अयमत्र प्रकारः—सार्धसप्तपुरुषप्रमाणमग्निक्षेत्रं लक्षमष्टौसहस्राण्यङ्गुलयस्ततः पञ्चानां षोडशीनां क्षेत्रं चत्वारि सहस्राणि पञ्चशतानि चाङ्गुलीः पृथक्कृत्य लक्षं सहस्रत्रयं पञ्चशतानि चाङ्गुलयः क्षेत्रं लभ्यते, तस्य मूलं त्रीणि शतानि एकविंशतिश्चाङ्गुलयः पञ्चविंशतितिलाश्च। सा चतुरश्रकरणी। तया सह चतुरश्रं कृत्वा चतुरश्रं मण्डलमित्यादिना सार्धैकाशीतिशताङ्गुलेन विष्कम्भार्धेन परिमण्डलं कर्तव्यमिति। उद्धृतानां पञ्च षोडशीनामुपयोगमाह —**अथ या** इति। पञ्च षोडश्यो निहितास्तासु चतसृभिः षोडशीभिरवान्तरदिक्षु चतुरः पादान् एकया पुरस्तान्मध्यदेशे शिरश्चोन्नयेदित्यर्थः। **तासामिति**। तासां पादानां शिरसश्च परिकर्षणमुत्तरेण द्रोणचिता व्याख्यातमित्यर्थः।

अयमत्र प्रकारः—पूर्वोक्तन्यायेन चतुरश्रं कृत्वा चतसृषु स्रक्तिषु चतस्रः षोडशीश्चतुरश्राकारतयोपधाय चतुरश्रस्य पुरस्तान्मध्ये एकामुपधाय पूर्वो-

क्तप्रमाणेन मण्डलं भ्रामयित्वा मण्डलान्तर्गतान् षोडशभागान् प्रत्येकमुपर्युपद-ध्यात्। मध्ये परिमण्डले यावत्संभवति तावत् चतुरश्रं कृत्वा तस्याः करण्या द्वादशेनेष्टकां कृत्वा ताभिश्चत्वारिंशच्छतेष्टकाभिर्मण्डलमध्यगतचतुरश्रे उप-धानं कृत्वा ताभिरेव चतुर्षु प्रधिषु षड्भिः षड्भिः (रुपधानं कृत्वा) उपधानं कुर्यात्। एवं चाष्टषष्टिशतेष्टकाः संपन्नाः ॥१३७॥

पुरुषस्येति। व्याख्यातमेतन्मण्डलद्रोणचयने। तामिति। तासां षोडशीनां पञ्च षोडशीरदोद्धृत्य शेषाः षोडशीः परिमण्डलं करोति। तत्र समस्तमग्निक्षेत्रं लक्षं अष्टौ सहस्राण्यङ्गुलयः। तस्मात् पञ्चानां षोडशीनां क्षेत्रं चत्वारि सहस्राणि पञ्चशतानि च अङ्गुलानि पृथक्कृत्य लब्धं लक्षं सहस्रत्रयं पञ्चशतानि। तस्य मूलं त्रीणि शतानि एकविंशतिश्चाङ्गुलयः पञ्चविंशतितिलाश्च। सा चतुरस्रकरणी। तया समचतुरस्रं कृत्वा चतुरस्रं मण्डल (१।७७) मित्यादिना सार्धैकाशीतिशताङ्गुलेन विष्कम्भार्धेन परि-मण्डलं करोति। तदिति। तत् कूर्मचिदुपधानं उत्तरेण परिमण्डलद्रोणचिता व्याख्या-तम्। तत्र विशेषमाह—अथ या इति। उद्धृतानां षोडशीनां चतसृभिरवान्तरदिक्षु पादान् उन्नयेत्। पञ्चम्या इति। उन्नयेदित्येव। तासामिति। तासां षोडशीनाम्। परिकर्षणं सर्वतो लेखनं व्याख्यातम् षोडशीं पुरस्ताद् विशये उपधाय (३।११६) इत्यादिनोक्तमित्यर्थः॥ १३७॥

**प्रधीनां सप्तधा विभागः। प्रधिमध्यमाः प्रक्रमव्यासा भवन्ति। यदतिरिक्तं संपद्यते तच्चतुरश्राणामध्यर्धाभिर्योयुज्यते ॥१३८॥**

यद्यपि प्रधीनां सप्तधा विभागः प्रधिमध्यप्रक्रमव्यासत्वं परिमण्डल-द्रोणवदित्युक्त्या लभ्यते तथापि पादानां शिरसश्च ओष्ठप्रदेशेषु प्रधिमध्येष्ट-कोपधानसिध्यर्थं पूर्वोक्तमेव स्मारयति—**प्रधीनामिति**। सप्तधा विभागः। **प्रधिमध्यमा इति**। प्रधिषु प्रधिमूलोपहितेष्टकासहितक्षेत्राणि प्रत्येकं सप्त-धा विभज्य मध्येष्टकाश्चतस्रो यथा प्रक्रमविस्तारा भवन्ति तथा कुर्यादित्यर्थः। चतुर्षु पादेषु परिमण्डलद्रोणवत् कर्षणे क्रियमाणे तेनैव प्रत्येकमिष्टकाद्वयं संपद्यते। शिरसि तु प्रक्रमविस्तारा(स्मिन्)प्रधिवत् आहत्य षडधिकद्विशते-ष्टकाः संपन्नाः। तत्र द्विशतसंख्यापर्यवसानार्थमाह—**यदतिरिक्तमिति**। यद्द्विशतसंख्यापेक्षया अतिरिक्तमधिकं सम्पद्यते, तत्संख्या (जल...) चतुरश्राणामध्यर्धाभिरेकेन पार्श्वेनार्धाधिकाभिः दीर्घचतुरश्राभिः योज्येत द्विशतसङ्ख्यां पूरयेदित्यर्थः।

अयमत्र प्रकारः—चतुरश्रस्य पूर्वस्यां रीत्यामुपहिता द्वादशेष्टका उद्धृत्य तत्राप्यध्यर्धाः प्रागायता उपदध्यात्। एवं चतस्र इष्टका अपनीता भवन्ति। तदनन्तररीत्यां चा(या)विष्टका उद्धृत्य तत्र चतस्रोध्यर्धेष्टका उपदध्यात्। एवं च द्वे द्वे इष्टके अपनीते भवतः। आहृत्य षडधिका भवन्ति। एष द्विशतः प्रस्तारः ॥ १३८ ॥

प्रधीनामिति। तदुत्तरेण द्रोणचिता व्याख्यातमित्यस्यैव प्रपञ्चः। यदतिरिक्तमिति। मण्डलमध्यचतुरस्रे चतुश्चत्वारिंशच्छतमिष्टकाः शेरते। प्रधिमूलेषु चतुर्विंशतिश्चतुरस्राः। प्रधीष्टका अष्टाविंशतिः।

प्रथमे प्रस्तारे शिरसोऽवस्तात् प्रधिमध्यमस्थाने एकविंशतिरिष्टकाः। शिरसि एका प्रधिमध्यमा। अष्टौ पादेषु। एवमुपहिते यदतिरिक्तं संपद्यते तच्चतुरस्राणां अध्यर्धाभिः योयुज्यते युज्यत इत्यर्थः। यत्तदिति सामान्यनिर्देशः। अध्यर्धेष्टकानां अर्धांशस्य अक्ष्णयापच्छेदः। नित्यमक्ष्णयापच्छेदनम इत्युक्तेः ॥ १३८ ॥

**अपरस्मिन् प्रस्तारे पादानां शिरोवद्विभागः शिरसः पादवत् ॥ १३९ ॥**

**अपरस्मिन्निति।** अपरप्रस्तारे अग्निक्षेत्रमण्डले यथा प्रधानदिक्षु चतस्रः स्रक्तयो भवन्ति तथा चतुरस्रं कृत्वा तत्र पूर्ववत् चतुरश्रेष्टकाभिरुपधानं कृत्वा प्रधिमूलेष्वपि तथैवोपधानं कृत्वा (प्रधिमूलेष्वपि) शिरसि यावदिष्टकाद्वयं चतुर्षु पादेषु प्रधिमध्यमाः प्रक्रमविस्ताराः चतस्र इष्टका यथा आत्मान्तरगता भवन्ति तथोपदध्यात्। प्रक्रमविस्तारपादेष्टकासहितप्रधिक्षेत्रे पूर्ववदिष्टकाद्वयं उपधेयम्। तयोरुभयतो द्वे द्वे पूर्ववत्, तयोः पार्श्वयोः द्वे द्वे पूर्ववदाहृत्य एकस्मिन् प्रधावष्टावेव अवशिष्टेषु त्रिषु प्रधिषु अष्टाविष्टका उपधेयाः, एवं च षडधिकद्विशतेष्टकाः सम्पन्नाः। तत्र द्विशतसङ्ख्यापूरणार्थमष्टादशेष्टका उद्धृत्य तत्र द्वादशाध्यर्धा उपधेयाः। एष द्विशतः प्रस्तारः ॥ १३९-१४० ॥

अपरस्मिन्निति। अपरस्मिन् प्रस्तारे विशेषो वक्ष्यत इति शेषः। द्रोणचितो द्वितीयप्रस्तारे प्रधिमध्यमामोष्ठ उपधायावस्तात्तद् द्वेधा विभजेद (३।११७) इति यदुक्तं तदिह मण्डलकूर्मचितौ द्वितीयप्रस्तारे पादानां भवति। शिरसः पादवत्। द्वेधा विभाग इत्यर्थः। प्रथमे प्रस्तारे विपरीतमुपधानमित्युक्तं भवति। प्रधिमध्यमा-

मोष्ठ उपधाय ( ३।११७ ) इत्यस्य प्रथमे प्रस्तारे विनियोगात्। मण्डलमध्य-चतुरस्रस्य प्रस्तारद्वयेऽपि रथचक्रचिद्वत् स्रक्तयो भवन्ति।

अयमत्र प्रकारः। अग्निमध्ये शङ्कुं निहत्य पञ्चदशाधिकशतषोडशीनां करण्या सपञ्चविंशतितिलैकविंशत्यधिकशतत्रयाङ्गुलया चतुरस्रं विहृत्य चतुरस्रं मण्डलं चिकीर्षन् ( १।७७ ) इति न्यायेन सार्धैकाशीतिशताङ्गुलेन विष्कम्भार्धेन मण्डलं परिलिख्य मण्डलशङ्कोः पुरस्तात् त्रिंशदङ्गुलेन शङ्कुं निहत्य मण्डलपूर्वान्ते परिधेः पश्चाद् एकोनचत्वारिंशत्तिले विष्कम्भान्ते शङ्कुं निहत्य तं शिरसः पश्चान्मध्यशङ्कुं परिगृह्य प्रक्रमप्रमाणेन शिरसश्चतुरस्रं कुर्यात्।

एवं मण्डलप्रकृतिभूतचतुरस्रे उभयतोऽक्ष्णयारज्जुं नियम्य चतुरस्रमध्यशङ्कुं परिगृह्य चतसृषु कोणदिक्षु प्रक्रमे प्रक्रमे अतीते शङ्कवः। परिधेरभ्यन्तरतः कोणदिक्षु एकोनचत्वारिंशत्तिले शिरोवत् शङ्कवः। ततः प्रभृति विदिक्षु पदार्धानि प्रक्रमप्रमाणानि चत्वारि चतुरस्राणि कृत्वा विष्कम्भार्धशङ्कोरन्तरशङ्कुषु प्रतिमुच्य शिरः पदार्धानां चतुरस्राणामेकमंसमारभ्य इतरादंसाद् आलिखेत्। मण्डलमध्ये एकोनविंशतितिलसहितेन पञ्चपञ्चाशच्छतद्वयाङ्गुलेन विदिक्षु यथा स्रक्तयः प्रथमे प्रस्तारे तथा चतुरस्रं कृत्वा तस्य करण्या द्वादशेन त्रयोदशतिलसहितैकविंशत्यङ्गुलेन इष्टकाः कुर्यात्।

प्रधीनां चत्वारि करणानि। त्रिकोणमाद्यम्। तस्य पश्चिमफलकं द्वाविंशदङ्गुलं सतिलत्रयम्। उत्तरं पार्श्वं पञ्चविंशत्यङ्गुलं साष्टादशतिलम्। एकचत्वारिंशदङ्गुलं तृतीयं कर्णरूपं धनुरिव तक्षेत् यथा चत्वारिंशत्तिलाः शरः। उपान्त्यस्य पूर्ववत् पश्चिमं फलकम्।

प्रध्यन्तस्य उत्तरवद् दक्षिणं फलकम्। एकचत्वारिंशदङ्गुलं सपञ्चतिलमुत्तरं फलकम्। साष्टविंशतितिलपञ्चत्रिंशदङ्गुलं कर्णरूपं तद्धनुरिव तक्षेत्। त्रिंशत्तिलाः शरः। तृतीयस्य पश्चिमं फलकं षट्तिलं नवचत्वारिंशदङ्गुलम्। दक्षिणं सतिलद्वयविंशत्यङ्गुलम्। सपञ्चतिलमेकत्रिंशदङ्गुलमुत्तरम्। सचतुर्दशतिलं पञ्चाशदङ्गुलं चतुर्थं कर्णरूपं तद्धनुरिव तक्षेत् यथा अष्टपञ्चाशत्तिलाः शरः।

प्रधिमध्यमायाः पूर्वपश्चिमे प्रक्रमप्रमाणे। दक्षिणोत्तरे सपञ्चतिले एकत्रिंशदङ्गुले तद्धनुरिव तक्षेत्। त्रिंशत्तिलाः शरः।

पादशिरसामुपधानार्थानि त्रीणि करणानि। तेषां मण्डलसन्धावुपधेयस्य सषट्तिले अष्टाङ्गुले दक्षिणोत्तरफलके। त्रिंशदङ्गुले पूर्वपश्चिमे। पश्चिमं मण्डलसन्धिगतपार्श्वं धनुराकारं तक्षेत्। अन्तर्वक्रं भवति यथा नवत्रिंशत्तिलाः शरः। तस्याः पुरस्तादुपधेयस्य षोडशतिलहीनैकविंशत्यङ्गुले दक्षिणोत्तरफलके। पूर्वपश्चिमे प्रक्रमप्रमाणे। पूर्वफलकं धनुरिव तक्षेत्। नवत्रिंशत्तिलाः शरः। पादशिरसामग्रे उपधेयाया उद्धृतायाः प्रधिमध्यमायाः स्थाने उपधेययोरेकं करणम्। त्रिंशदङ्गुल

द्वे फलके। इतरे पञ्चदशाङ्गुले पूर्वपश्चिमे। संख्यापूरणार्थं चतुरस्राध्यर्धेष्टके पूर्वापरे समस्य तयोः पूर्वां प्रागुदक्सविशेषां अक्ष्णयापच्छिन्द्यात्। एवं नव करणानि।

उपधाने प्रथमे प्रस्तारे चतुरस्रस्य अवान्तरदिक्षु स्रक्तयः। चतुरस्रमध्ये चतुश्चत्वारिंशच्छतमिष्टकाः। प्रधिमूलमध्येषु चतुर्विंशतिश्चतुरस्राः। प्रधिषु अष्टाविंशतिः। पूर्वस्मिन् प्रधौ प्रधिमध्यमां शिरस्युपधाय तस्या अवस्ताद् द्वे चतुर्थ्यर्ध्ये उपदध्यात्। चतुर्षु पादेषु मण्डलसन्धावेकैकां अन्तर्वक्रां ह्रस्वेष्टकाम्। पुरस्ताद् बहिर्वक्रां बृहतीम्। एवं षडष्टिका अतिरिच्यन्ते। चतुरस्रस्रक्तिषु अग्निधर्मानुरोधेन अष्टादश चतुरस्रा उद्धृत्य द्वादशाध्यर्धेष्टका उपदध्यात्। एवं द्विशतः प्रस्तारः।

अपरस्मिन् प्रस्तारे मण्डलमध्यचतुरस्रस्य महादिक्षु स्रक्तयः। पादेषु प्रधिमध्यमानामुपधानम्। तेषामभ्यन्तराश्चतुर्थ्यर्धाः। शिरसि ह्रस्वबृहत्योरुपधानम्। अत्रापि षडतिरिच्यन्ते। मण्डलमध्यचतुरस्रे पूर्ववदष्टादश चतुरस्रेष्टका उद्धृत्य अग्निधर्मानुरोधेन द्वादशाध्यर्धा उपदध्यात्। एवं द्विशतः प्रस्तारः ॥ १३९ ॥

**व्यत्यासं चिनुयाद् यावतः प्रस्तारांश्चिकीर्षेत् ॥ १४० ॥**

व्यत्यासमिति। सर्वशेषार्थमन्ते वचनम् ॥ १४० ॥

**कूर्मस्यान्ते तनुपुरीषमुपदध्यात्। मध्ये बहुलम्। एतदेव द्रोणे विपरीतम् ॥१४१॥**

कल्पसूत्रे मध्य उत्पृष्ठ इति कूर्मस्योन्नतपृष्ठत्वमुक्तम्, तत्संपादनार्थमाह—**कूर्मस्यान्त इति**। ( अन्ते ? ) पर्यन्ते तनु अल्पं पुरीषमुपदध्यान्मध्ये प्रभूतमुपदध्यात्, लोके कूर्मस्य पृष्ठं यादृशं भवति तादृशमुपदध्यात्। द्रोणचितं मध्ये निम्नमिव करोतीति कल्पसूत्रोक्तविकृतिसम्पादनमाह—**एतदेवेति**। मध्येऽल्पं पर्यन्ते बहुलं यथा अन्नपात्रद्रोणाकृतिर्भवति तथोपदध्यात ॥१४१॥

कूर्मस्येति। अन्ते पर्यन्ते। तनु अल्पम्। पुरीषमुपदध्यात्। मध्य इति। प्रभूतं मध्ये। उत्पृष्ठ इति कल्पे उक्तमेतत्। पुरीषेणैव संपाद्यमिति भावः। एतदिति। मध्ये तनु पुरीषम्। अन्ते बहुलमिति। मध्ये निम्नमिव करोतीति (बौ० श्रौ० सू० १७।२९) द्रोणचित्युक्तम्। एवं संपाद्यमिति भावः।

अत्र कल्पोक्तो विशेषोऽनुसन्धेयः (बौ० श्रौ० सू० १७।३० पृः ३०९)। तत्रैवमुक्तम्। अथहैष द्रोणचिद् ब्राह्मणो मध्य उत्पृष्ठः परितस्तनुः। तस्यैवं सतोऽरत्नि-

मात्रेण प्राक्शिर इव निरूहतीति। तस्यावान्तरदिशः पादानि वेष्टका आयातयति। स एष कूर्मचिद् ब्राह्मणो मध्ये उत्पृष्ठः परिकृष्यत इति ॥ १४१ ॥

[ इति परिमण्डलकूर्मचिदुपधानप्रकारः । ]

**अथ हैक एकविधप्रभृतीन् प्रउगादीन् ब्रुवते ॥ १४२ ॥**

**अथ हैक इति।** एकविधप्रभृतीन् षड्विधपर्यन्तान् ॥१४२॥

अथ केचित् पठन्ति अथ ह इति। अथहैकविधप्रभृतीन अपक्षपुच्छांश्चिन्वत (बौ० शु० २।१५) इत्यारभ्य एकविधादीनां अकरणं प्रतिपाद्य, तस्मात् सप्तविध एव प्रथमोऽग्नि (बौ० शु० २।२१) रिति सप्तविधस्याग्नेः प्रथमाग्नित्वं प्रतिज्ञातं, तत् सप्तविधप्रशंसापरमिति मन्वानाः केचिदाचार्याः प्रउगादीन् पक्षपुच्छरहितान् अग्नींश्चेतव्यान् ब्रुवते।

तत्र एकविधाग्नौ पुरुषप्रमाणेन वेणुना समचतुरस्रं कृत्वा प्रउगादिकरणम्। द्विपुरुषविधाग्नौ पुरुषाङ्गुलीद्वाभ्यां हत्वा तस्य मूलमानीय चतुरस्रं कृत्वा प्रउगादिकरणम्। एवं त्रिविधादिषु द्रष्टव्यम्। तत्र एकविधादिषु प्रउगादीनां पक्षपुच्छादिरहितानां आकृतिविकाराभावात् सप्तविधे यदुक्तमिष्टकाकरणञ्च तदेवात्र प्रत्येतव्यम् ॥ १४२ ॥

**समचतुरश्रानेक आचार्याः ॥ १४३ ॥**

**समचतुरश्रानिति।** समचतुरस्राकारान् ब्रुवते ॥१४३॥

समचतुरश्रानिति। एके आचार्या एकविधप्रभृतीन् अग्नीन् समचतुरस्राकारांश्चेतव्यान् इति ब्रुवते। न प्रउगादीन् गुणविकारानित्यर्थः ॥ १४३ ॥

**तस्य करण्या द्वादशेनेष्टकाः कारयेत्। तासामध्यर्याः पाद्याश्च ॥ १४४ ॥**

समचतुरश्रपक्षे करणान्याह—**तस्येति।** तस्याग्नेः करण्या द्वादशेनेष्टकाः कारयेत्। तासां द्वादशानामध्यर्याः तिर्यग्भेदाः। पाद्याः अध्यर्यायास्तिर्यग्भेदाः समचतुरश्राः कार्याः। एवं त्रिप्रकाराभिरिष्टकाभिर्भेदपरिहारेणोपधानं कर्तव्यम् ॥१४४॥

अस्मिन् पक्षे करणाद्याह—तस्येति। तस्याग्नेः करण्या द्वादशेनेष्टकाः कारयेत्। तासामिति। तासां द्वादशकरणीनां अध्यर्यास्तिर्यग्भेदाः पाद्याश्च। अध्यर्यायास्तिर्यग्भेदे समचतुरस्राश्च कार्या इत्यर्थः। एवं त्रिप्रकाराभिरिष्टकाभिर्भेदपरिहारेण उपधानं कर्त्तव्यम्।

अत्रापस्तम्बः । एकविधप्रभृतीनां करणीनां द्वादशेन त्रयोदशेनेतीष्टकाः कारयेत् पादेष्टकाश्च । व्यत्यासं चिनुयाद् यावतः प्रस्तारांश्चिकीर्षेदिति ।

तत्र द्वादशभिः सावयवाभिः प्रथमः प्रस्तारः । इतराभिरितर इति व्यत्यासः ॥ १४४ ॥

**आश्वमेधिकस्याग्नेः पुरुषाभ्यासो नारत्निप्रादेशानाम् । प्राकृतो वा त्रिगुणः ॥ १४५ ॥**

आश्वमेधिकानामभ्यासे विशेषमाह—**आश्वमेधिकस्येति** । अश्वमेधे एकविंशोऽग्निर्भवतीत्याम्नातं तदभिप्रायेणेदमुच्यते । तत्रार्धाष्टमविधस्य प्रकृतिभूतस्याग्नेः सप्तविधस्याभ्यासे पुरुषाणामेव सप्तानामभ्यासः कर्तव्यः श्रुतावेकविंशोऽग्निसङ्ख्यायोगात् । नत्वरत्निप्रादेशानामभ्यासः कर्तव्यः, एकविंशत्वविरोधापत्तेः । पक्षान्तरमाह—**प्राकृतविति** । अश्वमेध एव त्रिस्तावोऽग्निर्भवतीत्याम्नातं तदभिप्रायेणोच्यते । प्राकृत अर्धाष्टमविधोऽग्निस्त्रिगुणो भवति । एवं च सार्धत्रयोविंशपुरुषप्रमाणो वाग्निरश्वमेधे कर्तव्य इत्यर्थः ॥१४५॥

आश्वमेधिकस्येति । अश्वमेध एकविंशोऽग्निर्भवती ( बौ० श्रौ० सू० २६।१० ) त्याम्नातम् । तदभिप्रायेणेदमुच्यते । तत्र अर्धाष्टमविधस्य प्रकृतिभूतस्याग्नेः सप्तानामेवाभ्यासः श्रुतावेकविंशतिसंख्यायोगात् । नारत्निप्रादेशाभ्यासः । एकविंशतिसंख्याभिस्तुल्यजातीयस्य निवर्त्तिका यथाविधाभ्यासे । तत्र पुरुषत्रिकरण्या पञ्चतिलोनया अष्टशतद्वयाङ्गुलया पक्षपुच्छानां मानं कृत्वा पक्षपुच्छषु अरत्निप्रादेशानां प्रक्षेपः । प्राकृत इति । अश्वमेधे त्रिस्तावोऽग्निर्भवती ( बौ० श्रौ० सू० २६।१० ) त्याम्नातम् । तदभिप्रायेणेदमुच्यते । प्राकृत अर्धाष्टमविधोऽग्निस्त्रिविधो भवति । तस्मात् त्रिस्तावविधौ विधाभ्यासवत् पुरुषविशेषश्रवणात् । एवञ्च अर्धत्रयोविंशाः पुरुषा अग्निर्भवति । तत्र पुरुषत्रिकरण्या मानम् । पक्षपुच्छानां तिर्यङ्मानीत्रिकरणी तिर्यङ्मानी । पार्श्वमान्याश्च त्रिकरणी पार्श्वमानी । एवमाश्वमेधिकस्याग्नेरुभयरूपत्वमुक्तम् ॥ १४५ ॥

**त्रिस्तावोऽग्निर्भवतीत्येकविंशोऽग्निर्भवतीत्युभयं ब्राह्मणमुभयं ब्राह्मणम् ॥ १४६ ॥**

ननु पक्षद्वयाभिधानं विरुद्धमित्याशङ्क्य श्रुतिवाक्यद्वयवशात् विकल्पो युज्यत इत्युभयमुदाहरति । **त्रिस्तावोऽग्निरिति** । द्विरुक्तिरध्यायसमाप्तिद्योतनार्था ॥ १४६ ॥

इति श्रीमद्द्वैतविद्याचार्यसाग्निचित्य सर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजिगोविन्ददीक्षितवरनन्दनस्य सर्वतन्त्रस्वतन्त्रसाग्निचित्य सर्वपृष्ठाप्तोर्यामयाजिश्रीयज्ञनारायणदीक्षितानुजस्य तच्छिष्यतालब्धसमस्तविद्यावैशद्यस्य साग्निचित्याप्तवाजपेययाजि श्रीव्यङ्कटेश्वरदीक्षितस्य कृतिषु बोधायनशुल्बमीमासायां तृतीयोऽध्यायः ।

॥ इति बोधायनशुल्बसूत्रस्य व्याख्या शुल्बमीमांसा समाप्ता ॥

अस्मिन्नर्थे ब्राह्मणमुदाहरति—त्रिरताव इति। उभयं विधिवाक्यमेवेत्यर्थः। उभयस्यापि ब्राह्मणार्थत्वादुभयमनुष्ठेयमिति भावः। वीप्सा समाप्तिख्यापनार्था ॥१४६॥

टीका भट्टात्मजेनेयं द्वारकानाथयज्वना ।
तृतीयो व्याकृतोऽध्याय उपपत्तिसमन्वितः ॥

इति श्रीद्वारकानाथयज्वकृते बौधायनशुल्बसूत्रव्याख्याने
तृतीयोऽध्यायः समाप्तः ।
समाप्तश्चेदं बौधायन शुल्बसूत्रम् ॥

# बौधायनशुल्बसूत्रस्थवाक्यानां वर्णानुक्रमः

**( क्रमेण अध्याय-सूत्र-वाक्यबोधिकाः संख्याः ज्ञेयाः )**

—:#:—

## चित्रप्रतिरूपनिर्माणविषये सम्पादकीयं न्यूनताक्षमापनम्

चित्रप्रतिरूपाणां निर्माणकार्यस्य यथार्थपरिदर्शनानभिज्ञस्य मम सम्पादकत्वेऽत्र मुद्रितेषु चित्रेषु बह्व्यस्त्रुटयः समापतिताः सन्ति, तदर्थं क्षन्तव्योऽहं सहृदयैः पाठकैः ।

१. आदितो द्विचत्वारिंशत्संख्यकेषु चित्रेषु आकृतिबाहुल्यमस्पष्टता च वर्तते ।

२. चितीनां चित्रेषु बहुत्र पुरुषमानप्रदर्शकलेखाया अनिर्देशात् क्षेत्रमानं दुर्ज्ञेयं जातम् ।

३. इष्टकाकरणेषु संख्याङ्कानिर्देशात् चित्राधोलिखितानां संख्याज्ञानेऽपि स्वरूपं दुर्ज्ञेयमेव जातम् ।

४. कदाचित् चितीनां चित्रेषु इष्टकरीतिज्ञापिकानां लेखानां दोषाद् रीतिषु यथार्था इष्टकसंख्या दुर्ज्ञेया जाता ।

निर्मितेषु चित्रप्रतिरूपेषु एतासां त्रुटीनां प्रतीकारोऽपि न सम्भाव्यत इति नितरां दुःखितचित्तोऽहं क्षमां याचे ।

विदुषां कृपाभिलाषी
सम्पादकः

चित्रम् २ । दिङ्निर्णये परिलेखः । ( १।२० सू० शुल्बदीपिकायाम् )